KÂVYAMÂLÂ. 5.

# THE ANARGHARÂGHAVA

OF

# MURÂRI.

WITH

**The Commentary of Ruchipati.**

EDITED BY

PAṆDIT DURGÂPRASÂD,

AND

WÂSUDEV LAXMAṆ SHÂSTRÎ PANSÎKAR.

**Third Edition.**

PRINTED AND PUBLISHED

BY

TUKÂRÂM ĴAVAJÎ,

PROPRIETOR OF "JAVAJI DADAJI'S NIRNAYA-SAGAR" PRESS

BOMBAY.

1908.

*Price 2 Rupees.*

काव्यमाला ५.

श्रीमुरारिकविरचितम्

# अनर्घराघवम् ।

रुचिपत्युपाध्यायकृतया टीकया समेतम् ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादशर्मणा,
मुम्बापुरवासिपणशीकरोपाह्वलक्ष्मणात्मजवासुदेव-
शर्मणा च संशोधितम् ।



( तृतीयावृत्तिः )



तच्च
मुम्बय्यां
तुकाराम जावजी इत्यनेन
निर्णयसागराख्ययन्त्रालयाधिपतिना स्वीयेऽङ्कनालयेऽङ्कयित्वा
प्राकाश्यं नीतम् ।

१९०८.

मूल्यं रूप्यकद्वयम् ।

# काव्यमाला।

## श्रीमुरारिकविरचितम्
## अनर्घराघवम्।

श्रीमदुपाध्यायरुचिपतिकृतटीकासहितम्।

### प्रथमोऽङ्कः।

निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः
कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने।
याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः॥ १॥

---

१. मुरारिकविः कस्मिन्देशे काले च बभूवेति सम्यङ् न निश्चयः, किं तु ख्रिस्तसंवत्सरीयनवमशतकमध्यभागसमुत्पन्नाद्धरविजयमहाकाव्यकर्तुः श्रीराजानकरत्नाकरमहाकवेः प्राचीन इति वक्तुं शक्यते. यतो हरविजये (३८।६७) 'अङ्कोत्थ (अङ्केऽथ) नाटक इवोत्तमनायकस्य नाशं कविर्व्यधित यस्य मुरारिरित्थम्। आक्रान्तकृत्स्नभुवनः क गतः स दैत्यनाथो हिरण्यकशिपुः सह बन्धुभिर्वः॥' इत्ययं श्लोको वर्तते. अत्र यद्यपि 'अङ्क उत्सङ्गे, मुरारिर्विष्णुः' इति प्रकृतोऽर्थः, तथापि रत्नाकरकविना यत्नपूर्वं निवेशिता अङ्क-नाटक-कवि-मुरारिशब्दा नाटककर्तारं मुरारिकविमेव लक्षीकुर्वन्तीति विभावयन्तु विद्वांसः. मुरारिकविप्रशंसायां केषांचिच्छ्लोकाः—'देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः। अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतामापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः॥ १॥ मुरारिपदचिन्ता चेत्तदा माघे मतिं कुरु। मुरारिपदचिन्ता चेत्तदा माघे मतिं कुरु॥ २॥ मुरारिपदचिन्तायां भवभूतेस्तु का कथा। भवभूतिं परित्यज्य मुरारिमुररीकुरु॥ ३॥ भवभूतिमनादृत्य निर्वाणमतिना मया। मुरारिपदचिन्तायामिदमाधीयते मनः॥ ४॥' इति. अस्य नाटकस्य पठनपाठनादिषु कश्मीरेषु प्रचुरः प्रचारः. एतन्नाटकस्य नृसिंहसूनुहरिहर-मिश्रभवनाथ-उदयसूनुधनेश्वर-विष्णुभट्ट-रुचिपत्युपाध्यायप्रणीतं टीकापञ्चकं प्राप्यते. तत्र रुचिपतिकृतैव टीकातिसमीचीनेति सैव गृहीतात्रास्माभिः. २. रुचिपत्युपाध्यायो मिथिलादेशप्रसिद्धात्ख्रिस्तसंवत्सरीयवर्तमानशतकप्रारम्भसमुद्भूतगोकुलनाथोपाध्यायशिष्यरुचिपतितः प्राचीनः. यतोऽस्माभिरेतन्मुरारिनाटकटीकापुस्तकं १५३५ मिते शके लिखितमधिगतम्.

दोर्दण्डद्वितयेन खण्डपरशोः कोदण्डमारोपय-
न्कुर्वाणः सहसा विदेहनृपतिं पूर्णप्रतिज्ञाभरम् ।
सानन्दं कुशिकात्मजेन सुदृशां वृन्देन कौतूहला-
त्सव्रीडं प्रिययावलोकितमुखो रामोऽस्तु नः श्रेयसे ॥
अभूदभूतप्रतिपक्षभीतिः सदा समासादितभूरिनीतिः ।
चिरं कृतार्थीकृतभूमिदेवः स्फुरत्प्रतापो नरसिंहदेवः ॥
सूनुस्तस्य वसुंधरापरिवृढस्यानन्दकन्दः क्षिते-
राधारो जगतामशेषविदुषां विश्रामकल्पद्रुमः ।
दाने कर्णकथावलेपनिपुणः संसाररत्नाङ्कुरो
भूमीपालशिरोमणिर्विजयते श्रीभैरवेन्द्रो नृपः ॥
अर्थिप्रार्थितपूरकोऽपि रमतां स्वीये बलिर्मन्दिरे
नाकेऽनेकफलान्वितोऽपि स सुखेनास्तां च देवद्रुमः ।
श्रीमान्संप्रति भैरवेन्द्रनृमणिः सर्वार्थिचिन्तामणि-
र्जातो लोचनगोचरो यदि तदा किं तेन तेनापि वा ॥
यस्मिन्राजनि राजनीतिचतुरे पाथोधितीरावधि-
प्रख्यातप्रचितप्रतापनिचये पृथ्वीमिमां शासति ।
कोकं राजकरो न लोकनिकरं संतापयत्युन्नतो
विख्यातः सुदृशां महोत्सवविधौ कान्तेन पाणिग्रहः ॥
खौआलवंशजातस्तस्यादेशान्महीशस्य ।
श्रीरुचिपतिरतिगूढाः स्पष्टीकुरुते मुरारिकविवाचः ॥
असद्भिरधिरोप्यते यदपि दूषणं मत्कृतौ
तथापि सुमनीषिणां भवति कण्ठभूषोचिता ।
निपीय खलु निर्दयं प्रसभमुज्झिता राहुणा
न किं दिविषदः पराः परिपिबन्ति चान्द्रीः कलाः ॥

इह खलु सकलपदार्थजातेषु स्वेष्टसाधनताज्ञानादेव प्रेक्षावतां प्रवृत्तिर्दृश्यते । तदुक्तं न्यायकुसुमाञ्जलावाचार्यचरणैः—'तदज्ञानं विषयस्तस्य विधिः' इति । अत्र च प्रयोजनाकाङ्क्षायाम् 'निर्दोषं गुणवत्काव्यमलंकारैरलंकृतम् । रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति ॥' इति सरस्वतीकण्ठाभरणे भोजराजेन, 'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥' इति रसप्रकाशकारेण, 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥' इति काव्यप्रकाशकारेण च विशिष्टकाव्यकरणे प्रयोजनाभिधानात्प्रेक्षावन्तः प्रवर्तन्ते । तच्चेदं द्विविधम्, श्रव्यमभिनेयं च । तत्र ये सुकुमारमतयो राजकुमारप्रभृतयः 'निसर्गदुर्बोधमतिनीरसं खल्वेतत्, कथमिवात्र निष्फलमात्मानमवसादयामः'

इति संततमालोचयन्तः शास्त्रे न प्रवर्तन्ते, ते तावदवश्यं चतुर्वर्गोपायेषु व्युत्पाद्याः । तेऽमी द्विविधाः । केचित्पदपदार्थमात्रपरिचयचतुरास्तत्तद्रसप्रधानाभिः कविताभिः कविनामाङ्किताभिश्चमत्कारिणीभिर्गाथाभिर्गोष्ठीबन्धमनुबध्नन्ति । केचित्ततोऽपि जडमतयस्तत्राप्यनुत्सहमाना नृत्यादिप्रसङ्गेन समयं गमयन्ति । उभयेऽप्येतेऽभिमतवस्तुपुरस्कारेण गुडजिह्विकया रसास्वादसुखं मुखे दत्त्वा कटुकौषधपानादाविव प्रवर्तयितव्याः । यदाह—'स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते । प्रथमं लीढमधवः पिबन्ति कटुकौषधम् ॥' इति । प्रथमान्प्रति श्रव्यरूपं काव्यमधिक्रियते । चरमाणां तु 'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न ताः कलाः । नासौ नयो न तत्कर्म नाटके यन्न दृश्यते ॥' इति भरतवचनादभिनेये तथा चैकाग्र्येण प्रवर्तमानानामनायासेन व्युत्पत्त्याधानमित्येवं शास्त्रापेक्षया वास्य वैलक्षण्यम् ॥

अत्र च विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं विघ्नोत्सारणसाधारणकारणं मङ्गलमाचरन्नेव 'देवद्विजनृपादीनामाशीर्वादसमन्विता । अष्टभिर्वा द्वादशभिः पदैः सम्यङ्नियोजिता । नान्दी कार्यातियत्नेन बुधैर्विघ्नोपशान्तये ॥' इति तत्रभवान्मुरारिकविः पद्यद्वयेनाष्टपदां नान्दीमादौ निर्दिशति—**निष्प्रत्यूहमिति** । भगवतो लोचने चक्षुषी उपास्महे आराधयाम इति संबन्धः । यत्तु 'लोचने इत्यस्य पूर्वं ते इत्यपेक्षितं यत्पदाकाङ्क्षितत्वात्' इति, तन्न । उत्तरवाक्यार्थगतत्वेनोपात्तेन यच्छब्देन पूर्ववाक्यार्थगततच्छब्दानपेक्षणात् । उदाहृतं च तथा काव्यप्रकाशकृता—'साधुचन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके' इति । पूर्ववाक्यार्थगतस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः । यथा साधुचन्द्रमसीत्यत्रैवाद्यपादयोर्व्यत्यास इति । ननु किमर्थमियमुपासना क्रियत इत्यत आह—निष्प्रत्यूहमिति । निष्प्रत्यूहं प्रत्यूहाभावाय । 'अव्ययं विभक्ति—' इत्यादिनाव्ययीभावे 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः' इति चतुर्थ्या अमूभावः । केचित्तु—निष्प्रत्यूहमिति क्रियाविशेषणं तत्र च क्लीबत्वादिकम् । यदाह—'द्वितीयान्तत्वकर्मत्वे क्लीबत्वं च तथैकता । क्रियाविशेषणस्यैवं मतं सूरिभिरादरात् ॥' इति, तथा च 'निरन्तरया सेवया सेव्यप्रीतिस्तया च हितलाभ इति ध्वनितम्'—इत्याहुः । भगवत इत्यस्य सामान्यशब्दस्य विशेषणद्वारा विशेषपरत्वमुपपादयति—कौमोदकीति । कौमोदकी हरिगदा सैव लक्ष्म चिह्नं यस्य तादृशस्य । एतेन विशिष्टशस्त्रधारकत्वेन भगवतो विघ्नोपशमनसमर्थत्वं व्यज्यते । ननु भगवतो लोचनयोरेव किमित्युपासना क्रियते, नान्येषां चरणादीनामित्यत आह—कोकप्रीतीति । कोकानां चक्रवाकाणां प्रीतिः कोकप्रीतिः, चकोरस्य पक्षिविशेषस्य पारणोपवासभोजनं चकोरपारणा । अनयोर्द्वन्द्वे 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इत्येकत्वं 'स नपुंसकम्' इति नपुंसकत्वात् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम् । तत्र पटुनी दक्षे ज्योतिष्मती चेति समासः । यद्वा कोकप्रीतिश्च चकोरपारणं च कोकप्रीतिचकोरपारणे तयोः पटुनी ज्योतिष्मती चेति समासः । ण्यन्तादेव पारिधातोर्नपुंसके भावे ल्युट्प्रत्यये पारणमिति रूपम् । यद्वा कोकप्रीतिचकोरपारणयोः पटु यज्ज्योतिः सूर्यचन्द्राख्यं तेजस्तद्ययोरस्तीति

मतुप् । अत्र यद्यपि कर्मधारयमत्वर्थीयाद्बहुव्रीहिरेवेष्टो लाघवात्, तथाप्यर्थलाघवार्थमिह कर्मधारयान्मत्वर्थीय एव क्रियते । अर्थलाघवं च कर्मधारयमत्वर्थीये चाभिधावृत्त्या प्रतिपत्तिर्बहुव्रीहौ तु लक्षणयेति साक्षात्संबन्धः परम्परासंबन्धश्च गमक इति विशिष्टेऽर्थे मत्वर्थसंबन्धस्य विवक्षणान्नोक्तदोषः विवक्षायाश्च पुरुषाधीनतया नातिप्रसङ्गः । अत एव 'विसकिसलयच्छेदपाथेयवन्तः' इत्यादि प्रयोगोऽपि । यद्वा 'भूमनिन्दाप्रशंसासु' इति प्रशंसायां मतुप् । एतेन सूर्यचन्द्रस्वरूपचक्षुर्द्वयेन कोकप्रीतिश्चकोरपारणा चेत्युक्तम् । तथा च परमकारुणिकयोर्लोचनयोरुपाधिं विना कोकानां प्रियाशोकापहारितया प्रीतिप्रदानेन, चकोराणां ज्योत्स्नाभक्ष्यदानेन चोपासनकर्तुरभिलषितप्रदातृत्वं भविष्यतीति भावः । याभ्यां लोचनाभ्यां नाभ्येव पल्वलमल्पसरः । नाभी पल्वलत्वेन रूपिता गभीरत्वात् । रूपकलक्षणं चाह दण्डी—'उपमैव तिरोभूतभेदा रूपकमिष्यते' इति । तत्स्थं यत्पुण्डरीकं श्वेताम्भोजं तस्य यो मुकुल ईषद्विकसिता कलिका स कम्बोः शङ्खस्य सपत्नीकृतः । सदृशीकृतः । पुण्डरीकस्य श्वेतगुणयोगितया शङ्खेन सह सादृश्यम् । यद्यपि सपत्नशब्दः प्रतिपक्षवाची, तथापि यः प्रतिपक्षः स सदृशो भवतीति लक्षितलक्षणया सपत्नशब्देन सादृश्यं प्रतिपाद्यते । अत एव 'प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः । तस्य चानुकरोतीति शब्दाः सादृश्यवाचकाः ॥' इति दण्डी । पुण्डरीकमुकुलस्य शङ्खसादृश्ये बीजमाह—अर्धेत्यादि । अर्धे यो विबोधः प्रकाशस्तेन मुग्धाव्यक्ता मधुरा रम्या श्रीः शोभा यस्य तादृशः । यद्वा मुग्धा प्रत्यग्रा मधुरा रम्या श्रीः शोभा यस्य सः । यद्वा मुग्धमधुरात्यन्तमनोहरा । पर्यायशब्दद्वयोपादानादतिशयित एवार्थो गम्यते । यथा नलचरिते (नैषधकाव्ये १२।१०१) 'उन्मीलल्लीलनीलोत्पल—' इत्यादि । यद्वा मधु यत्रास्ति सा मधुरा । 'ऊषसुषिमुष्कमधो रः' इति रः । अर्धे निद्रायितो मुद्रितोऽर्धनिद्रायितः । दलनिमीलनेन निद्रासादृश्यम् । इह सूर्यचन्द्रयोः सांनिध्यं हेतुः । अत एव शङ्खसाम्यम् । तथा च विशेषणबलाद्विष्णोर्लोचने उपास्महे इति पर्यवसितम् । अत्र यद्यपि 'गङ्गा नागपतिः सोमः सुधानन्दो जयाशिषः । एभिर्नामपदैः कार्या नान्दी कविभिरङ्किता ॥' इति भरतवचनादवश्योपादेयं गङ्गादिपदं न कण्ठतः श्रूयते । तथापि चकोरपारणपटुज्योतिःपदेन चन्द्रसंकीर्तनमेव । न च एभिर्नामपदैरित्यनेन तत्तत्पदैनैवोपादानमिति वाच्यम् । तस्योपलक्षणत्वात् । 'जितमुडुपतिना' (रत्नावल्याम् १ । ५) इत्यादौ तथैव परिदृष्टत्वात् । एवं चार्थलभ्यताभिगम्यते । अत्रार्धविबोधमुग्धमधुरश्रीरित्यनेनैवार्धनिद्राणत्वं लभ्यत एवेति यद्यपि, तथाप्यवशिष्टार्धखण्डितत्वशङ्कानिराकरणायार्धनिद्रायित इति पदमुपात्तम् । केचित्तु 'अर्थतः प्राप्तेऽपि निद्राणत्वे स एव विशेषः शाब्द्या वृत्त्या परिचीयतामित्येतदर्थं तदुपादानं शाब्द्या वृत्त्या भणनं न पौनरुक्त्यमावहति' इति । तथा च सरस्वतीकण्ठाभरणे 'आर्थ्या वृत्त्या लब्धस्य शास्त्रेतिहासादौ शाब्द्या वृत्त्या भणनं न पौनरुक्त्याय' इत्याहुः । एवं च न्यायाचार्या अपि 'श्रुतिप्राप्तेऽर्थे प्रकरणादीनामनवकाशात्' इति द्रव्यकिरणावल्यामूचिरे । अपरे तु 'यतश्चार्धविबोधमुग्धमधुरश्रीरत एवार्धनिद्रायित इति हेतुहेतुमद्भावसंगत्या न पौनरुक्त्यमत्र' इत्याहुः । अन्ये तु 'भगवल्लोचनयोः

अपि च ।

विरमति महाकल्पे नाभीपथैकनिकेतन-
त्रिभुवनपुरःशिल्पी यस्य प्रतिक्षणमात्मभूः ।
किमधिकरणा कीदृक्कस्य व्यवस्थितिरित्यसा-
वुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः ॥ २ ॥

---

सूर्यचन्द्रस्वरूपतया तदुभयतेजःसंबन्धात्पुण्डरीकमुकुलस्यार्धविकासोऽर्धनिमीलनं च युक्तमेवेति स्वरूपकथनम्' इत्याहुः ॥

इह यद्यपि नान्दीलक्षणे सूचनायाः कर्तव्यता न कुत्रापि बोधिता, न च पत्रावली-नान्द्यां वाच्यार्थबीजपदोपादानात्सूचना कर्तव्येति वाच्यं । तत्र वाच्यार्थबीजपदेन नायकाभिधानात्, तथाप्यत्र बहुप्रामाणिकोपदेशः शरणमिति सूचनावतारः । तदिह हरे-र्नेत्रप्रायौ रामलक्ष्मणौ, चकोरतुल्ये सीतालोचने, तयोः पारणा रामचन्द्रमुखचन्द्रज्योत्स्नापानरूपा, याभ्यां रामलक्ष्मणाभ्यां रावणः शत्रुः कृत इति संप्रदायः । वयं तु ब्रूमः—निष्प्रत्यूहमित्यनेन प्रकृते निर्गतः प्रत्यूहो रावणादिर्यस्मात्स निष्प्रत्यूहो रामभद्रस्तमुपास्महे इति रामभद्रप्रवेशस्तत्कर्तृकवधश्च सूच्यते । कौमोदकीत्यनेन कौ पृथिव्यां मोदकी हर्षहेतुरिन्द्रजिद्विनाशादिस्तद्योगित्वान्मोदकी लक्ष्मणोऽस्तीति लक्ष्मणप्रवेश इन्द्रजिद्विनाशश्च सूच्यते । कोकप्रीतीत्यनेन कोकतुल्यः सुग्रीवः । कोकानां रात्रौ तारादर्शनात्संतापो भवति । सुग्रीवस्यापि वालिपरिगृहीतायास्तारासंज्ञिकायाः पत्न्याः संताप इत्येतावता तत्सादृश्यं तस्य प्रीतिर्वालिवधादिति सुग्रीवेण समं रामचन्द्रस्य प्रीतिस्तत्कर्तृकवालिवधश्च सूच्यते । चकोरपारणेत्यनेन चकोरसदृशो बिभीषणः । चकोराणां रात्रौ चन्द्रदर्शनेन हर्षोदयाद्बिभीषणस्यापि राक्षसस्य रात्रौ संचरणस्वाच्छन्द्याद्रामचन्द्ररूपचन्द्रदर्शनाच्च हर्षोदय इति तेन तत्सादृश्यं तस्य पारणा लङ्कायां राज्यप्राप्तिरूपा । तथा च बिभीषणस्य लङ्कायां राजत्वं सूच्यते । अर्धविबोधेत्यादिना रामभद्रसेनायाः प्रकाशः । अर्धनिद्रायित इत्यनेन रावणसेनाया अविकासः । यद्वार्धनिद्रायित एव कुम्भकर्णः प्रबोधितः सङ्ग्रामायेति सूच्यते । सपत्नीकृत इत्यनेन रावणेन सीताहरणाद्रामः शत्रुः कृत इति सूच्यते । ज्योतिष्मती इत्यत्र 'तदस्यास्त्यस्मिन्' इति मतुप् । 'भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु' इति मेदिनीकरः । 'कौमोदकी गदा' इत्यमरः । 'विघ्नोऽन्तरायः प्रत्यूहः' इति । 'चिह्नं लक्ष्म च लक्षणम्' इति च । 'पल्वलं चाल्पसरः' इति । 'पुण्डरीकं सिताम्भोजम्' इति । 'कुड्मलो मुकुलोऽस्त्रियाम्' इति । 'कोकश्चक्रश्चक्रवाकः' इति । 'शङ्खोऽस्त्री कम्बुरस्त्रियाम्' इत्यपि । 'अव्यक्ते सुन्दरे मूढे मुग्ध इत्यभिधीयते', 'मधुरो मधुयुक्तेऽपि प्रिये चापि मनोहरे' इति विश्वः ॥

अष्टपदां नान्दीं दर्शयितुमाह—**विरमतीति** । तस्मै जगन्निधये जगदाधारभूताय नमः । अस्त्विति शेषः । तथा चोक्तम्—'यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीः परः

(नान्द्यन्ते)

**सूत्रधारः**—अलमतिविस्तरेण। भो भो लवणोदवेलावनालीतमालतरुकन्दलस्य त्रिभुवनमौलिमण्डनमहानीलमणेः कमलाकुचकलशकेलिकस्तूरिकापत्राङ्कुरस्य भगवतः पुरुषोत्तमस्य यात्रायामुपस्थानीयाः सभासदः, कुतश्चिद्द्वीपादागतेन कलहकन्दलनाम्ना कुशीलवेन रौद्रबीभत्सभयानकाद्भुतरसभूयिष्ठं कमपि प्रबन्धमभिनयता नित्यं किलायमुद्वेजितो लोकः।

---

प्रयोक्तव्यः। तथा 'काञ्च्यां त्रिभुवनतिलको राजा' इति। तस्मै कस्मै। महाकल्पे प्रलये विरमति निवृत्ते सति। संहारेच्छायां गतायां सर्गेच्छायां प्रवृत्तायामिति भावः। असौ प्रसिद्ध आत्मभूर्ब्रह्मा कस्य पदार्थस्य किमधिकरणा किमाधारा कीदृग्व्यवस्थितिराकारसंनिवेश इति द्रष्टुमुपलब्धुं प्रतिक्षणं प्रतिमुहूर्तं यस्योदरमविशत्प्रविष्टः। विशेः कर्तरि लङ्। नाभिरेव पन्था नाभीपथः। 'ऋक्पूरब्धूः—' इत्यकारः समासान्तः। स एवैकमद्वितीयं निकेतनमालयो यस्य स तथा। एतेन ब्रह्मणः पद्मासनत्वेन सदा संनिधानात्प्रतिक्षणं पद्मनाभोदरप्रवेशः सुशक इति सूचितम्। त्रिभुवनमेव पूर्नगरं तस्य शिल्पी निर्माता। इह 'ऋक्पूः—' इत्यकारः समासान्तो न भवति। तद्विधेरनित्यत्वात्। 'त्रिभुवनपुनःशिल्पी' इति पाठे त्रयाणां भुवनानां पुनर्घटक इत्यर्थः। विश्वंभररूपस्य विष्णोरुदरे त्रैलोक्यमस्ति। अयं च स्रष्टा त्रिभुवनं निर्मित्सुः। निर्माणस्य च पूर्वदर्शनव्यतिरेकेणानिर्वाहात्। किं किं स्वरूपं केन प्रकारेणावस्थितमिति ज्ञातुं तस्योदरं प्रविष्टः। प्राचीना सृष्टिर्विस्मृतैवेति भावः। वारंवारघटनात्पुनःशब्द उचित एव। अनेन पद्येन दशग्रीवे विरमत्यात्मभू रामो लङ्कोदरं तत्संनिवेशदर्शनाय प्रविष्ट इति सूचितम्। यद्वा तस्मिन्विरते तत्तत्संनिवेशदर्शनायायोध्यामेवाविशदिति सूचितम्। अनयोः पद्ययोः प्रसादनामा वाक्यार्थगुणः। तथा च सरस्वतीकण्ठाभरणे—'यत्तु प्राकट्यमर्थस्य प्रसादः सोऽभिधीयते' इति। यथा—'अयमुदयति निद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीवालमन्दारपुष्पम्। विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्कुपितकपिकपोलक्रोडताम्रस्तमांसि॥' अत्र पद्मिनीविकासकरणे उदयशैलावतरणे कोकशोकापहरणे तमोविदारणेऽनुक्तोऽपि सूर्यरूपोऽर्थः प्रकटमुपलक्ष्यते। तथा कौमोदकीधारणे चन्द्रसूर्यचक्षुष्मत्त्वे नाभ्यां पुण्डरीकपरिपालन उदरे त्रिलोक्याः समावेशेऽनुक्तोऽपि विष्णुरूपोऽर्थो लक्ष्यत इति। जगन्निधय इत्यत 'नमःस्वस्ति—' इत्यादिना चतुर्थी। विरमतीत्यत्र 'व्याङ्परिभ्यो रमः' इति परस्मैपदत्वाच्छत्रन्तात्सप्तमी। त्रिभुवनेत्यत्र सुप्सुपेति समासः। न तु समाहारद्विगुः। तथा सति त्रिभुवनीति स्यात्। 'पूः स्त्री पुरीनगर्यौ' इत्यमरः॥

'नान्द्यन्ते सूत्रधारः' इति वक्ष्यमाणलक्षणं नाटकाद्यपद्यं नान्दी। तथाहि—'देवतादे-

र्नमस्कारो गुरूणामपि च स्तुतिः । गोब्राह्मणनृपादीनामाशीर्नान्दी' इति कोहलः[1] । यद्वा 'नदि स्तुतौ' इत्यत्र धातौ पृषोदरादिपाठेन साधितः । तथा चाहुः—'स्तुत्यर्थे नदि-धातौ वा समृद्ध्यर्थे च वा पुनः । पृषोदरादिपाठेन नान्दीसाधनमीरितम् ॥' इति । एवं च रत्नकोषः । प्रत्याहारगीतवाद्यादिद्वाविंशत्यङ्गेष्वन्तर्गता पूर्वरङ्गस्य प्रधानाङ्गभूता स्तुतिरेव नान्दीति । सा चेयं द्वादशपदाष्टपदा वा कार्या । 'सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः । नान्दीं पदैर्द्वादशभिरष्टभिर्वाप्यलंकृताम् ॥' इति । पदं चात्र द्विविधमभिप्रेतम्, सुप्तिङन्तं श्लोकपादाख्यं च । तदुक्तं नाट्यलोचनकृता—'सुप्तिङन्तं पदं चात्र श्लोकपादश्च वा पदम्' इति । तत्राद्ये द्वादशपदा यथोत्तरचरिते—'इदं गुरुभ्यः' इत्यादि । अष्टपदा यथा भगवदज्जुके—'जयति सितविलोलव्यालयज्ञोपवीती' इत्यादि । अन्त्ये द्वादशपदा यथा रत्नावल्याम्—'जितमुडुपतिना' इत्यादि । अष्टपदा यथा मुद्राराक्षसे—'धन्या केयम्' इत्यादि । ननु नान्दी द्वादशपदाष्टपदा च कर्तव्येति यदि नियमस्तदा कथमभिज्ञानशाकुन्तले 'या सृष्टिः स्रष्टुः' इत्यादेर्नान्दीत्वम् । द्वादशपदेभ्योऽधिकपदत्वादिति चेन्न । 'पञ्चविंशत्पदा नान्दी नित्यमेव शुभावहा । स्यान्नायकस्य च कवेर्यदि शंभुविभूषिता ॥' इति भरताभिधानात् । यद्वा 'नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृताम् । तां षोडशपदामेके केचिदाहुश्चतुष्पदाम् ॥' इत्यनुशासनाच्चतुष्पदैव सा नान्दीति । इयं च नान्दी चतुष्प्रकारिका । तथा च दशरूपकम्—'नमस्कृतिर्माङ्गलिकी आशीः पत्रावली तथा । नान्दी चतुर्धा निर्दिष्टा नाटकादिषु धीमता ॥ नमःप्रधानवाक्येन कोमलेन पदेन च । कल्पिता शंभुना युक्ता नमस्कृतिरितीरिता ॥ देवस्यार्धेन्दुचूडस्य विलासेनोपवर्णिता । मङ्गलानुगतं वाक्यं यत्र माङ्गलिकीति सा ॥ देवद्विजनृपादीनामाशीर्वादविभूषिता । नान्दी मङ्गलसंयुक्ता स्यादाशीरिति तद्विदः ॥ वाच्यार्थबीजरचिता शृङ्गारादिसमन्विता । संयुक्ता चन्द्रपद्माभ्यां पत्रावल्यभिधीयते ॥' अत्र च नमस्कृतिरूपनान्दीलक्षणसत्त्वात्सैव बोद्धव्येत्यलमतिवाक्पल्लवेन । 'नर्तनीयकथासूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समासाद्य सूत्रधारः स उच्यते ॥' ननु, 'नान्द्यन्ते सूत्रधारः' इत्यसंगतम् । सूत्रधारपठनीया नान्दी, नान्दीपाठानन्तरं च सूत्रधारप्रवेशः, प्रवेशानन्तरं पाठावसरः, इत्यन्योन्याश्रयात् । उच्यते—नान्दीनामा सूत्रधारस्तदन्ते तन्निष्क्रान्तौ सूत्रधार इव सूत्रधारः स्थापकः प्रविशतीत्यर्थः । तदुक्तं भरते—'अथ पात्राणि तत्रादौ नान्दी नान्दीं तु यः पठेत्' इति । तत्रैव 'नान्दीं प्रयुज्य निष्क्रामेत्सूत्रधारः सहानुगः । स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः ॥ पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥' शातकर्णः—'सूत्रधारगुणाकारः स्थापकः प्रविशेत्ततः । उपचारेण सोऽप्यत्र सूत्रधारोऽभिधीयते ॥' इति । यद्वा नान्द्यन्यैनैव पठिता, तदन्ते सूत्रधारः प्रविशति । वदति च वक्ष्यमाणमिति शेषः । तथा च संगीत-

---

१. कोहलो नाम कश्चिदतिप्राचीनो नाट्यशास्त्राचार्यः. 'विटखटके का नृत्यति कोहलभरतोदितक्रियया' इति कुट्टनीमतग्रन्थे दामोदरगुप्तः.

कल्पतरुः—'सूत्रधारः पठेन्नान्दीमन्यो वा रङ्गभूमिगः । मङ्गलं सूचयित्वा तु ललितेन शुभाविन्ताम् ॥' अपरे तु—'पटान्तरित एव नान्दीं पठित्वा सूत्रधारः प्रविशति वदति च' इत्याहुः । ननु 'अलमतिविस्तरेण' इत्यसंगतम् । 'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः । सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम् ॥ स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥' इत्यादीनां प्रस्तावनापूर्वकर्तव्यनान्द्यङ्गानामनभिधानादिति नासंगतम् । प्रस्तुताभिनेयस्यातिविस्तरतया प्रेक्षकाणां प्रवृत्तिर्न स्यादिति तत्प्रवृत्त्यर्थं तत्प्रयोगस्य संगतत्वात् । अन्यथानेकसमयेन तत्पर्यवसाने रङ्गभङ्गप्रसङ्ग इत्यानन्त्यात् । सकलपूर्वरङ्गस्य निर्वाहयितुमशक्यत्वान्नान्दीपाठेनैव संक्षिप्यत इति भावः । आवश्यकत्वात् । तथा चोक्तम्—'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥' इति । अलंशब्दस्य तृतीयान्तपदसाचिव्येन निष्फलाभिधायकत्वम् । यदाहुर्निष्फलपर्याये पाञ्चजन्ये हरिमिश्राः—'भवति हि तृतीयान्तेन समन्वितमलम्' इति ॥

प्रस्तुतकथनीये श्रोतॄणामनवधानेऽनवधेयवचनत्वमरण्यरुदितत्वं च स्वस्य स्यादिति तान्संबोधयन्निदानीं प्रस्तावनामाह—**भो भो इत्यादि** । भो भोः सभासदः सभ्याः, अयं लोको जनो नित्यं प्रत्यहं केनचित्कुशीलवेन नटेनोद्वेजितो व्याकुलीकृत इति प्रसिद्धिः । किल प्रसिद्धौ । भो भो इति संबोधने । अव्यये वीप्सायां द्विरुक्तिः । 'अथ संबोधनार्थकाः । स्युः पाट्प्याडङ्गहेहैभोः' इत्यमरः । 'भरता इत्यपि नटाश्चारणाश्च कुशीलवाः' इत्यमरः । उद्वेजित इत्यत्र ण्यन्तत्वान्न 'विज इट्' इति ङित्त्वम् । कीदृशेन । कमप्यतिशयितं प्रबन्धं नाटकमभिनयता नृत्यता । कीदृशम् । रौद्रमुग्रम्, बीभत्सं विकृतम्, भयानकं दारुणम्, अद्भुतमाश्चर्यम्, एते रसा भूयिष्ठाः प्रचुरा यत्र तम् । एषां कठोरत्वादुद्वेगः । भूयिष्ठपदस्य राजदन्तादिपाठात्परनिपातः । रौद्रादयो हि नाट्ये रसविशेषाः । तदुक्तं भरते—'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः ॥' इति । कीदृशेन कुशीलवेन । कलहस्य कन्दलं प्रकाण्डं नाम यस्य तेन । अतिकलहशालिनेत्यर्थः । 'कलहकन्द–' इति पाठे कलहस्य कन्दो मूलं नाम यस्य तेन । कुतश्चिद्द्वीपात्सिंहलादेरागतेन । सभासदः कीदृशाः । पुरुषोत्तमस्य हरेर्यात्रायां पूजोत्सव उपस्थानीया उपस्थिताः । कीदृशस्य । लवणमुदकं यत्र स लवणोदः । 'उदकस्योदः संज्ञायाम्' इत्युदादेशः । तस्य वेला तीरं तत्र वनाली वनपङ्क्तिस्तत्र यस्तमालतरुस्तापिच्छवृक्षस्तस्य कन्दलस्य प्रकाण्डस्येव । 'वेला तत्तीरनीरयोः' इत्यमरः । 'तमालो वरुणे खड्गे तापिच्छे तिलकेऽपि च' इति विश्वः । 'कन्दलं तु नवाङ्कुरे' इति धरणिः । मौलिर्मस्तकम् । मण्डनमलंकारः । नीलमणिरिव नीलमणिः श्यामरत्नम् । कमला लक्ष्मीस्तस्याः कुचावेव कलशौ तयोः केलिः क्रीडा तदर्थं कस्तूरिकया पत्रं पत्रावली तदङ्कुरस्येव । हरेः कृष्णत्वात्त्रिभिरिह रूपकम् । पुरुषोत्तम इत्यत्र यद्यपि पुरुषाणामुत्तम इति न निर्धारणषष्ठीसमासनिषेधः स्यात् । पुरुषश्चासावुत्तमश्चेति कर्मधारये विशेषण-

तत्कस्यचिदभिमतरसभावभाजः प्रेक्षणकस्य प्रयोगानुज्ञया नाट्यवेदोपाध्यायबहुरूपान्तेवासी मध्यदेशीयः सुचरितो नाम भरतपुत्रोऽहमनुगृह्ये । यतः ।

प्रीतिर्नाम सदस्यानां प्रिया रङ्गोपजीविनः ।
जित्वा तदपहर्तारमेष प्रत्याहरामि ताम् ॥ ३ ॥

---

त्वादुत्तमपदस्य पूर्वनिपातापत्तिः । न च पुरुषेषूत्तम इति विगृह्य समासः । तथा सति 'न निर्धारणे' इति सूत्रमनारभ्यं स्यात् । सप्तमीसमासेनैव सर्वत्र चरितार्थत्वात् । तथाप्यत्र पुरुषाणामुत्तम इति षष्ठीसमास एव । निर्धारणस्य विवक्षणात्, तदभिव्यञ्जकपदाभावात्, जातिगुणादेरश्रवणात् । यद्वा 'पञ्चमी' इति योगविभागात्समासः । पुरुषेभ्य उत्तमः पुरुषोत्तम इति । 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥' इति गीतासु भगवद्वचनात् । काव्यदर्पणकारास्तु—'न निर्धारणे इति प्रतिषेधस्य तु स विषयो यत्र निर्धारणावधिर्निर्धार्यमाणं निर्धारणनिमित्तं च त्रितयमुपादीयते । यथा पुरुषाणां क्षत्रियः शूरतम इत्यत्र तु त्रितयं नोपात्तमिति नासौ तद्विषयः' इत्याहुः । 'यात्रा स्याद्यापनायां च गतौ देवार्चनोत्सवे' इति धरणिः । उपस्थानीया इत्यत्र 'भव्यगेय–' इत्यादिनिपातनात्कर्तर्यनीयर् । 'सभासदः सभास्तारा: सभ्याः सामाजिकाश्च ते' इत्यमरः । भूयिष्ठामिति 'बहोर्लोपो भू च बहोः' इति बहुशब्दस्य भूभावः । 'इष्ठस्य यिट् च' इति यिडागमः ॥

**तत्कस्यचिदिति** । यतोऽयं लोक उद्विग्नस्ततस्मात् । अभिमतः प्रेमपात्रं यो रसः शृङ्गारादिस्तद्भावमभिप्रायं भजते । 'भजो ण्विः' । तस्य प्रेक्षणकस्य नाटकस्य प्रयोगानुज्ञया प्रयुक्त्यनुशासनेन भरतपुत्रो नटपुत्रोऽहमनुगृह्येऽनुग्रहणीयः। तेनेति शेषः। लोकोद्वेगशान्त्यर्थमनुग्रह इति भावः । 'भरता इत्यपि नटाः' इति धरणिः । अनुगृह्य इति कर्मणि लट् । प्रकृष्टमीक्षणं दर्शनं यत्रेति प्रेक्षणकं नाटकम् । क्वचित् 'प्रेङ्खणकस्य' इति पाठः । तत्रापि प्रेङ्खणकस्य नाटकस्येत्यर्थः । इखिधातुर्गत्यर्थो दण्डकस्थस्तत्र करणे ल्युट् प्रपूर्वः । ततः संज्ञायां कन् । कीदृशोऽहम् । नाम प्रसिद्धौ । सुचरितः । नामपदस्य संज्ञार्थत्वे 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीयया भाव्यमित्यवधेयम् । पुनः कीदृशः । नाट्यं नृत्यं तत्र वेदस्तस्योपाध्यायो व्याख्याता । नानामर्षीनेपथ्यग्रहणाद्बहुर्ग(बहु)रूपस्तन्नामा वा कश्चित्तस्यान्तेवासी शिष्यः । मध्यदेशो भरतखण्डस्ततसमुद्भवश्च । 'अवस्था या तु लोकस्य सुखदुःखसमुद्भवा । तदीयानुकृतिः प्राज्ञैर्नाट्यमित्यभिधीयते ॥' इति भरतः । मध्यदेशीयत्वेनातिविज्ञता प्रदर्शिता । यदाह भरतः—'भरतं वर्षमाश्रित्य कर्तव्यं नाटकादिकम् । स्थानान्तरे समुद्भूतिर्यतो न सुखदुःखयोः ॥' इति । अनुग्रहे हेतुमाह—**यत इति** । नाम संभावनायाम् । यतो यस्मात्सदस्यानां पारिषदानां या प्रीतिः सा मम रङ्गोपजीविनो नटस्य प्रियापेक्षिता । तस्याः प्रीतेरपहर्तारमपहारकं कलहक-

(आकाशे कर्णं दत्त्वा।) किं ब्रूथ। 'वैदेशिको भवानसमग्रपात्रः कथमीदृशे कर्मणि प्रगल्भते' इति। (विहस्य। सप्रश्रयमञ्जलिं बद्धा।) हन्त भोः, किमेवमुदीर्यते। भवद्विधानामाराधनी वृत्तिरेव मे पात्राणि समग्रयिष्यति। यतः।

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ४ ॥

न्दलनामानं नटं जित्वैषोऽहं तां प्रीतिं प्रत्याहरामि पुनरानयामि। येन त्वत्प्रीतिरपहृता तं जित्वा तां करोमीति भावः। रज्यन्त्यनुरक्ता भवन्त्यस्मिन्निति रङ्गो नृत्यम्। 'हलश्च' इत्यधिकरणे घञ्। 'रङ्गो नृत्ये रणक्षितौ' इति विश्वः॥

**आकाश इति**। 'पात्रस्याल्पतया यत्र पात्रं नैव प्रवेश्यते। नेपथ्य इत्युक्त्वाकाशे लक्ष्यं बद्ध्वेति चोच्यते॥ किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमप्येकस्तस्मा(त्स्या)दाकाशभाषितम्॥' इति भरतः। विविधो देशो विदेशस्तेन चरतीति वैदेशिकः पथिकः। 'चरति' इति ठक्। अत एवासमग्रपात्रोऽसंपूर्णभूमिकादिग्राहकः। यदाह भरतः—'रङ्गे विशन्ति निर्यान्ति ये तत्कार्यार्थिनः पुनः। ते सर्व एव पात्राणि कीर्तितानि प्रयोक्तृभिः॥' इति। ईदृशे विषमे कर्मणि प्रगल्भते धृष्टो भवति। गल्भ धार्ष्ट्ये धातुः। सप्रश्रयं सहर्षमित्यादि क्रियाविशेषणम्। सर्वत्र क्रिया च वदतिपठतिरूपाध्याहर्तव्या। प्रश्रयो विनयः। हन्त विषादे। 'हन्त हर्षे विषादे च' इति विश्वः। स्वधार्ष्ट्ये विषादः। यद्वा पात्रसमग्रता भविष्यतेवेति हर्षः। उदीर्यत उच्यते। भवतेति शेषः। आराधनी सेवाविधात्री। करणे ल्युट्। टित्त्वान्ङीप्। वृत्तिर्व्यापारः। पात्राणि नृत्यपात्राणि। समग्रयिष्यति संपूर्णानि करिष्यति॥

दृष्टान्तमाह—**यान्तीति**। न्यायप्रवृत्तस्य नीत्यनुयायिनः। पुरुषस्येति शेषः। तिर्यञ्चोऽपि तिर्यग्योनिजाता वानरादयोऽविवेकिनोऽपि सहायतां द्वितीयत्वं यान्ति गच्छन्ति। 'तिरसस्तिर्यलोपे' इति तिर्यादेशः। तुशब्दः पुनरर्थे। अपन्थानमपथं यान्तं गच्छन्तं पुरुषं सोदरः सहोदरोऽपि विमुञ्चति विशेषतस्त्यजति। अपन्थानमित्यत्र 'अपथं नपुंसकम्' इति न क्लीवत्वम्। तत्र कृतसमासान्तनिर्देशात्। इह त्वतथात्वात्। यद्वा 'पथो विभाषा' इत्यतः पाक्षिकतया 'पथः संख्याव्ययादेः' इति न क्लीवत्वम्। संख्यासाहचर्यात् पथोऽपि समासान्तयुक्तस्य ग्रहणात्। 'अपन्थास्त्वपथं तुल्ये' इत्यमरः। ननु समानशब्दस्य 'विभाषोदरे' इति सभावे 'सोदराद्यः' इति यप्रत्यये सोदर्य इति स्यात्। 'समानोदर्यसोदर्यसगर्भ्यसहजाः समाः' इत्यमरोऽपि। तत्कथं सोदर इति। उच्यते। समानमुदरमस्येति बहुव्रीहौ सोदरः। 'समानस्य' इति योगविभागात् 'वोपसर्जनस्य' इति वा सभावः। यद्वा सहशब्दस्य सभावे रूपमिदम्। अत एव 'सोदरोऽपि सहोदरः' इति शब्दभेदः॥

अत्र च ध्वनिरलंकारः। ध्वनिना च सदस्यानां हृदये सकलमभिधेयं सूच्यते। तथाहि सभ्यांल्लक्षीकृत्य श्रीरामवचनमिदम्। कुतश्चिद्द्वीपान्तरादागतेन द्वीपान्तराल्लङ्कातः समाया-

तेन, कलहकन्दलनाम्ना कलहाङ्कुरतया प्रसिद्धेन, कुत्सितं शीलं कुशीलं तद्योगिना कुशीलवेन रावणेन । वप्रकरणे 'अन्येभ्योऽपि दृश्यते' इति मत्वर्थीयो वः । कमप्यनिर्वचनीयम्, प्रबन्धं कपटं परवञ्चनोपायम्, यद्वा प्रकृष्टो बन्धः प्रबन्ध इन्द्रादीनां यत्र तत्प्रबन्धं युद्धादिविन्यासम्, अभिनयताभिव्यञ्जयता । कुर्वतेति यावत् । कीदृशम् । रौद्रं तीव्रता, बीभत्सं विकृतरूपता, भयानकं युद्धादौ भयंकरत्वम्, अद्भुतमाश्चर्यकरत्वम्, एतैर्भूयिष्ठं बहुलम् । यद्वा कस्यचिन्मारणादिना रौद्रः, कस्यचिद्बलिदानादिना बीभत्सः, कस्यचिन्मायादिना भयानकः, कस्यचिदद्भुतकर्मणा कैलासोत्पाटनादिनाद्भुतो रसः, एभिर्भूयिष्ठं बहुलम् । नित्यं बहुशः, अयं लोको भुवनम्, उद्वेजितः किल । किलागमे । 'लोकस्तु भुवने जने' इत्यमरः । एतावतोद्वेगलक्षणो विन्दुरुत्पन्नः । यदाह भरतः—'प्रयोजनानां विच्छेदे फलविच्छेदकारणम् । फलं यावच्च नोदेति स विन्दुरिति शक्य(कथ्य)ते ॥ तैलविन्दुर्यथा तोयं स्वशक्त्या व्याप्य तिष्ठति । काव्याङ्गानि तथा विन्दुः संदर्श्य मुखतां व्रजेत् ॥' इति । यथा वेणीसंहारे—'लाक्षागृहानल–' इत्यादिनापमानलक्षणो विन्दुः । उद्वेगश्चायं सप्तस्वङ्केषु बोद्धव्यः । यथा 'अपि कथमसौ' इति प्रथमाङ्के । 'अलमिष्ट्वा मखान्' इति द्वितीयाङ्के । 'कन्यामयोनिजन्मानम्' इति तृतीयाङ्कादावूह्यमिति । अभिमतेति । अभिमतो रसो वीरो भावश्चेष्टा तद्योगिनः प्रेङ्खणकस्येति प्रेङ्खन्ति गच्छन्ति वीरा अस्मिन्निति प्रेङ्खणं युद्धम् । अधिकरणे ल्युट् । प्रयोगानुज्ञया कृत्यनुमत्या कृतिस्मृत्या वा । नाट्यस्य वेदो धनुर्वेदः । 'नट अवस्कन्दने' चौरादिकण्यन्तादवस्कन्दनार्थत्वाद्धातोः 'अचो यत्' इति यत् । हिंसार्थता च 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' इत्यत्र हिंसायां वृत्तेः । तस्योपाध्यायोऽध्यापकः कौशिक एव । स च क्षत्रियजातित्वात्संस्कारविशेषाद्ब्राह्मणत्वाच्च द्वैरूप्यावगमाद्बहुरूपः । एतदेव वक्ष्यति—'यः क्षत्रदेहम्' इत्यादिना । तस्यान्तेवासी शिष्यः, मध्यदेशीयोऽयोध्याप्रभवः, सुचरितः सुष्ठु चरितं व्यापारो यस्य सः, नाम प्रसिद्धः, 'नाम प्राकाश्यसंभाव्यप्रसिद्धिषु निगद्यते' इति विश्वः । बिभर्ति पुष्णाति भूमिमिति भरतो राजा दशरथः । 'भृञादिभ्योऽतच्' इत्यौणादिकोऽतच्प्रत्ययः । तस्य पुत्रः । यद्वा भरतः पुत्रः कनिष्ठो यस्य स रामः । 'कनिष्ठेऽपि सुते पुत्रः' इति विश्वः । पुत्रवाचकपर्यायशब्दाः कनिष्ठवाचका अपि भवन्ति । यथा किरातार्जुनीये—'अनुस्मृताखण्डलसूनुविक्रमः' इति ।

सदस्यानां देवानामृत्विजां वा, प्रीतिर्नाम मम रङ्गोपजीविनो रणोपजीविनो योधस्य क्षत्रियस्य वा या प्रिया सीता च तस्या अपहर्तारं रावणं जित्वा प्रीतिं सीतां चानयामि । एतेन सीताहरणादारभ्य रावणवधपर्यन्तं सूचितम् । 'सदस्या विधिदर्शिनः' इत्यमरः । 'रङ्गो नृत्ये रणे रागे' इति धरणिः । एतावता प्रीतिसीतापहारलक्षणं वीजम् । यदाह भरतः—'स्वल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति । फलावसानपर्यन्तं तद्बीजमिति कीर्तितम्' इति । यथा वेणीसंहारे—'निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥' इति । वैदेशिको विः पक्षी तस्य देशो वनं तत्र स्थाता वैदेशिको वनवासी । अध्यात्मादित्वाट्ठञ् ।

(पुनराकाशे कर्णं दत्त्वा ।) किं ब्रूथ । 'तर्हि प्रहितेयमस्माभिः पत्रिका' इति ।

(प्रविश्य नटः पत्रिकां ददाति । सूत्रधारो गृहीत्वा वाचयति ।)

'यत्र सर्वपुरुषार्थरहस्यनिःस्यन्दिनि
चेतःशुक्तिकया निपीय शतशः शास्त्रामृतानि क्रमा-
द्वान्तैरक्षरमूर्तिभिः सुकविना मुक्ताफलैर्गुम्फिताः ।
उन्मीलत्कमनीयनायकगुणग्रामोपसंवल्गन-
प्रौढाहंकृतयो लुठन्ति सुहृदां कण्ठेषु हारस्रजः ॥ ५ ॥
तस्मै वीराद्भुतारम्भगम्भीरोदात्तवस्तवे ।
जगदानन्दकन्दाय संदर्भाय त्वरामहे' ॥ ६ ॥

---

पात्रममात्यादि । ईदृशे कर्मणि युद्धादौ प्रश्रयो विनयः । सप्रश्रयमिति क्रियाविशेषणम् । हन्त हर्षे, वृत्तिः प्रवर्तनम्, पात्राणि सुग्रीवादीनि । नीयते प्राप्यतेऽभिमतसिद्धिरनेनेति न्यायः सन्मार्गस्तत्र प्रवृत्तस्यानुगतस्य, तिर्यञ्चो वानरभल्लूकादयः । तदिह सन्मार्गानुगतस्य रामस्य वानरादयोऽपि सहाया वृत्ताः, अपथप्रपन्नस्य तु रावणस्य सोदरो विभीषणोऽपि तं त्यक्त्वा राममाश्रित इति ध्वनितम् ।

तर्हि प्रहितेयमिति सदस्यवचनानुवादः । अपटीक्षेपेण पात्रप्रवेशे प्रविश्येत्युच्यते । वाचयति पठति । **यत्रेत्यादि** । तस्मै संदर्भाय त्वरामहे त्वरिता भवाम इत्यन्वयः । तस्मा इति तादर्थ्ये चतुर्थी । संदर्भो रचनाविशेषो विशिष्टपदार्थात्मकः प्रबन्धः । इह नाटकरूप एव सः । कीदृशाय । वीराद्भुतरसयोरारम्भ उद्यमो धनुर्भङ्गरूपस्तेन गम्भीरोऽनाकलितरूप उदात्तो हृद्यो वस्तुप्रधाननायको यत्र तस्मै । यद्वा वीर उत्साहशक्तिशाल्यद्भुतो जगद्विस्मयनीयचरितस्तस्यारम्भो राक्षसचक्रविनाश-कौशिकयज्ञसिद्धि-शंकरकार्मुकाकर्षण-परशुरामगर्वदलन-सुग्रीवाभिषेक-दशग्रीववधरूपवहुकार्यसंभारस्तेन गम्भीरमनुत्तानम्, सकललोकचमत्कारकारणम्, उदात्तं राज्यत्यागवनगमनादिमहत्त्वं तादृशं वस्तु पदार्थो वाच्यं यस्य तस्मै । 'वहुकार्यस्य संभार आरम्भ इति कीर्तितः' इति भरतः । 'यस्य प्रभावादन्तस्थाः शोकहर्षादयो वहिः । देहस्था नोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतम् ॥' इति भरतः । 'आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् । उदात्तं नाम तत्प्राहुरनेकगुणसंश्रयम् ॥' इति । जगतां सहृदयानामानन्दकन्दाय हर्षमूलाय । यत्तदोर्नित्यसंवन्धादाह—यत्रेति । समस्तकोऽयं श्लोकः । पुरुषार्था धर्मार्थकाममोक्षास्तेषां रहस्यं गोप्यतत्त्वं तस्य निःस्यन्दः क्षरणं तद्योगिनीत्यर्थः । यत्र नाटक इत्यस्य विशेषणम् । तथा च नाट्यस्य चतुर्वर्गोपायत्वमाह संगीतकल्पतरुः—'देवर्षिक्षितिपालपूर्वचरितान्यालोच्य धर्मोदयस्तद्भावाश्रितभूमिकाभिनयने स्यादर्थसिद्धिः परा । संगीताहृतचित्तवृत्तितरला वश्या भवन्त्यङ्गना ज्ञानं शंकरसेवयेति कथितं नाट्यं चतुर्वर्गदम् ॥' इति यत्र नाटके हर-

(विमृश्य सहर्षस्मितम् ।) मारिष, रामायणमिति शृणोपि तत्रभवतः कवित्वावतारप्रथमतीर्थस्य वल्मीकजन्मनो मुनेः सरस्वतीनिर्यासो यशःशरीरमिक्ष्वाकूणाम् ।

---

न्तीति हारा रम्याः स्रज इव स्रजो हाराश्च ताः स्रजश्चेति कर्मधारयः । तेन हारस्रजोऽक्षरमाला इत्यर्थः । सुहृदां शोभनमनसां सुकवीनां तत्त्वज्ञानिनां वा कण्ठेषु लुठन्ति संवध्यन्ते । शोभनं हृद्येषां ते सुहृदः । 'स्वान्तं हृन्मानसं मनः' इत्यमरः । यद्वा हारस्रज इव हारस्रजो हाराणां मालाः । गद्यपद्यानीत्यर्थः । कीदृश्यः । उन्मीलन्दीप्यमानः कमनीयः काम्यो यो नायकगुणग्रामो नायकगुणसमूहस्तस्योपसंवल्गनं संवन्धः शोभादिप्रतिपादनं वा । तेन प्रौढा उद्भटा अहंकृतयोऽहंकारा यासु ताः । इह मालाकर्तुरहंकारस्तत्कार्य उपचरितः । अन्यनाटकेभ्योऽतिवैलक्षण्येनाहंकार उचित एव । इह नायकः प्रधानपात्रम् । 'प्रधानपात्रताख्यातो नृत्ये यः स्यात्स नायकः' इति भरतः । इह च नायकस्य श्रीरामस्य जगद्विलक्षणतया कवेरहंकारः समूल एव । 'उपसंवर्धन–' इति पाठे संवन्ध एवार्थः । 'अलंकृतयः' इति पाठस्तु रम्यः । पुनः कीदृश्यः । सुकविना शास्त्राण्येवामृतानि सुधाः, चेत एव शुक्तिका, तया शतशो वहुवारं निपीय सादरं पीत्वा क्रमेण वान्तैरुद्गीर्णैरक्षरमूर्तिभिरक्षराणि मूर्तय आकारसंनिवेशा येषां तैर्गद्यपद्यादिभिर्गुम्फिता रचिता । गुम्फनं गुम्फः । भावे घञ् । ततस्तारकादित्वादितच् । क्ते सति 'अनिदितां–' इत्यनुनासिकलोपापत्तिः । इह गद्यादिलाभो विशेषणद्वारेति न्यायेन । कीदृशैः । मुक्तं त्यक्तमफलमसारं यैः सारभूतैः । अन्या अपि हारस्रजो मुक्तामालाः शुक्तिकया वहुशः पानीयं पीत्वा क्रमेण वान्तैर्मुक्ताफलैर्विरचिता भवन्ति । कीदृशैः । अक्षराः क्षरणशून्याः । स्वच्छा इति यावत् । मूर्तयो येषाम् । अतिस्वच्छैरित्यर्थः । कविरिह शिल्पादिपण्डितः । 'कविः काव्यकरे सूरौ' इत्यमरः । नायको हारमध्यमणिः । गुणा ग्रथनसूत्राणि तारवृत्तत्वादयो वा । उपसंवल्गनं संवन्धः प्रशंसाभिरुपस्थानं वा । अहंकृतिरुज्ज्वलतेति ध्वनिः । शतश इत्यत्र 'वह्वल्पार्थात्–' इति शस् । निपीयेति 'पीङ् पाने' इत्यस्य रूपम्, न तु पिवतेः । तत्र 'न ल्यपि' इतीत्वनिषेधात् । 'सुधायाममृतं जले' इति विश्वः । वान्तैरित्यत्र ग्राम्यत्वेऽपि गौणवृत्तित्वाद्गुणत्वम् । तथा च दण्डी—'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इति । नायकलक्षणं रसप्रकाशे—'शुद्धोत्तुङ्गकुलः कलासु कुशलस्त्यागी युवा निर्गदो मानी वाक्पटुरुज्ज्वलाकृतिरथो गम्भीरचेष्टः स्थिरः । विश्रम्भी सुजनः प्रियंवद उदारोऽसौ मतो नायकः सोऽत्र स्यादनुकूलदक्षिणशठा धृष्टश्चतुर्धा पुनः ॥' एतच्चतुष्टयनायकमध्ये भगवान्दक्षिणनायकः । तल्लक्षणं तु रसिकसर्वस्वे—'यो गौरवं भयं प्रेम सद्भावं पूर्वयोषिति । न मुञ्चत्यन्यचित्तोऽपि दक्षिणोऽसौ स्मृतो यथा ॥' 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः । 'ग्रामः संवसथे सङ्घे' इति च । स्मितलक्षणम्—'ईषत्प्रफुल्लितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।

**नटः**—अथ किम् ।

**सूत्रधारः**—तत्प्रतिबद्धप्रबन्धानुबन्धिनी परिषदाज्ञा ।

**नटः**—(विहस्य ।) अहो, सकलकविसार्थसाधारणी खल्वियं वाल्मीकीया सुभाषितनीवी ।

**सूत्रधारः**—मारिष, किमुच्यते ।

अपि कथमसौ रक्षोराजस्तताप जगत्रयी-
मपि कथमभूदिक्ष्वाकूणां कुले गरुडध्वजः ।
अपि कथमृषौ दैव्यो वाचः स्वतः प्रचकाशिरे
सुचरितपरीपाकः सर्वः प्रबन्धकृतामयम् ॥ ७ ॥

---

अदृष्टदन्तकुसुमैरुत्तमानां स्मितं भवेत् ॥' इति । मारिष इति नटसंबोधनम् । यदाह भरतः—'सूत्रधारः पुनः पारिपार्श्वकेनाभिधीयते । भाव इत्येव तेनासावपि मार्षस्तु मारिषः ॥' इति । 'उत्कृष्टो विद्यया भावः किंचिदूनस्तु मारिषः' इत्यपि भरतः । तत्रभवतो मान्यस्य । तच्छब्दात्प्रथमान्तात् 'इतराभ्योऽपि दृश्यन्ते' इति भवच्छब्दयोगेन त्रल् । 'श्लाघ्ये तत्रभवानुक्तः' इति त्रिकाण्डः । अवतीर्यतेऽत्र ह्यवतारः । 'अवे तृस्त्रोर्घञ्' इत्यधिकरणे घञ् । नत्ववतरणमवतारः । तथा सति 'ऋदोरप्' इत्यप् स्यात् । यद्वा 'कृत्यल्युटो बहुलम्' इति बहुलवचनादवतारणमेवावतार इति घञ् । यद्वा अवतार इत्यत्र 'क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तते' इति न्यायेन भावे घञ् । कवित्वस्यावतारः कवित्वावतारः । तत्राधिकरणे घञि कवित्वावतारः कवित्वावतरणाधिकरणं चासौ प्रथमतीर्थं आद्योपाध्यायश्चेति समासः । तस्य भावघञि कवित्वावतरणे प्रथमोपाध्यायस्य प्रथमोपायस्य चेत्यर्थः । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इति विश्वः । वल्मीको मुनिभेदः, ततो जन्म यस्य । वाल्मीकेरित्यर्थः । सरस्वती वाणी । निर्यासः सारभूतः । यशोरूपं शरीरं यशःशरीरम् । शाकपार्थिवादिः । इक्ष्वाकूणां सूर्यवंश्यानाम् । अथ किं स्वीकारे । 'यत्सत्यमिति भावार्थमथ किं स्वीक्रियार्थकम्' इति भरतः । **तदिति** । रामायणाश्रयनाटकानुवर्तिनीत्यर्थः । परिषत्सभा । सार्थः समूहः । साधारणी तुल्या । साधारणादञि 'टिड्ढाणञ्—' इति ङीप् । खलु निश्चये । सुभाषितं शोभनवाक्यम् । सु पूजायाम् । तदेव नीवी मूलधनम् । 'नीवी स्याद्वसनग्रन्थौ नीवी मूलधनेऽपि च' इति विश्वः । नीवीव नीवी । कविसार्थानामस्या उपजीव्यत्वात् । किमुच्यते । किमज्ञातं ख्याप्यत इत्यर्थः । **अपीत्यादि** । अपिः सर्वत्र प्रश्ने संभावनायामसंभवोक्तौ वा । कथमेतानि संभाव्यन्त इत्यर्थः । 'अपिः संभावनाप्रश्नशङ्कागर्हासमुच्चये' इति विश्वः । यदीदं सकलकविनिवहोपजीव्यं न भवति तदा रक्षोराजो रावणो जगत्रयीं त्रैलोक्यमपि कथं तताप संतप्तीकृतवान् । एकस्य जगत्रयतापनेऽशक्तेः । गरुडध्वजो विष्णुर्वा इक्ष्वाकूणां रघूणां वंशे कथम

तत्र तावन्निरूपयामि रूपकमभिरूपमीदृशम् । (मुहूर्तमिव स्थित्वा । स्मरणमभिनीय । सोल्लासम् ।) अस्ति मौद्गल्यगोत्रसंभवस्य महाकवेर्भट्टश्रीवर्धमानतनूजन्मनस्तन्तुमतीनन्दनस्य मुरारेः कृतिरभिनवमनर्घराघवं नाम नाटकम् । तत्प्रयुञ्जानाः सामाजिकानुपास्महे । (विचिन्त्य सहर्षम् ।) अहो रमणीया खल्वियं सामग्री परिषदाराधनस्य । यतः ।

---

भूत्कथमुत्पन्नः । अजस्य तस्य जन्मायोगात् । ऋषौ वाल्मीकिमुनौ दैव्यो देवसंबन्धिन्यः संस्कृतवाण्यः कथं स्वतः प्रचकाशिरे स्वयमाविर्भूताः । देववाण्या मनुष्ये प्रवेशायोगात् । तथा चैतत्सर्वं यथा स्यादेवं प्रबन्धकृतां कवीनामेवादृष्टपरिणामेनाभूदिति तात्पर्यम् । परिपाक इत्यत्र 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घत्वम् । जगत्रयीमित्यत्र समाहारे द्विगुः । 'द्विगोः' इति ङीप् । रूपकं नाटकादि । 'रूपकं नाटकादि स्यात्' इति भरतः । अभिरूपमुत्कृष्टम् । 'अभिरूपं मतं रम्ये सादृश्योत्कृष्टयोरपि' इति विश्वः । अभिनीय शिरःकम्पादिना स्फुटीकृत्य । सोल्लासं सहर्षं यथा स्यादेवम् । मौद्गल्यनामकं गोत्रम् । कवेर्गोत्रकीर्तनादिकमपि कर्तव्यम् । यदाह भरतः—'गोत्रं नाम च बध्नीयात्पूजावाक्यं च पार्षदः । नाटकस्य च यन्नाम गर्भनिर्दिष्टलक्षणम् ॥' इति भट्टश्चतुर्दशशास्त्राभिज्ञः । मालतीमाधवटीकायां तथैव सर्वरक्षितेन व्याख्यातत्वात् । देशभाषा चेयम् । तनूजन्मनः पुत्रस्य । तन्तुमती तन्माता तत्पुत्रस्य । कृतिनाटकपदयोरजहल्लिङ्गतयान्वयः । अनर्घः पूज्यो राघवो रामो यत्र तत् । 'अमूल्ये दृश्यतेऽनर्घस्तथा पूज्ये सुदुर्लभे' इति । नाटकलक्षणं संगीतकल्पतरौ—'प्रख्यातोन्नतनायकं रसमयं राजर्षिवंशोद्भवं साङ्गं भङ्गजयान्वितं रसमयं तत्तत्पुराणाश्रयम् । भाषावैभवसुन्दरं प्रविलसन्नानाविलासं वलद्वृत्तिव्याप्तमशेषसंधिसहितं सप्ताङ्कवन्नाटकम् ॥' नाटके नियमास्तु—'नाटके सूच्यमर्थं तु पञ्चभिः प्रतिपादयेत् । विष्कम्भतूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥ एभिः संसूचयेत्सूच्यं दृश्यमङ्कैः प्रदर्शयेत् । दूराध्वानं वधं युद्धं राजादेशादिविप्लवम् ॥ निरोधं भोजनं स्नानं सुरतं चानुलेपनम् । असुरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥ अङ्केनैव निबध्नीयान्नैवान्येन कदाचन । नाधिकारिवधः क्वापि त्याज्यमावश्यकं न च ॥ एकाहाचरितैकार्थमित्थमासन्ननायकम् । पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गमः ॥ एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः । पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं वरम् ॥' इति भरतः । प्रयुञ्जाना नृत्यन्तः । वयमिति शेषः । 'प्रोपाभ्यां युजेः—' इति तङ् । 'सभायामुपविष्टा ये सभ्याः सामाजिकाश्च ते' इति भरतः । **सहर्षमिति** । परिषदाराधनसामग्रीस्मरणादिति भावः । खलु वाक्यालंकारे । आराधनसामग्रीकथनव्याजेन स्वोत्कर्षमप्याह—**मद्वर्ग्या** इत्यादि । वर्गे भवा वर्ग्याः । 'वर्गाच्च' इति यत् । रसः शृङ्गारादिः । पाठः पठितिः । गीतिर्ध्रुवादिः । गतिश्चरणन्यासः । यद्वा गतिर्हस्ताद्यभिनयः ।

---

१. केषुचित्पुस्तकेषु 'महाकवेः' इत्यस्मात्पूर्वम् 'बालवाल्मीकेः' इत्यधिकं विशेषणम्.

मद्वर्ग्या रसपाठगीतिगतिषु प्रत्येकमुत्कर्षिणो
मौद्गल्यस्य कवेर्गभीरमधुरोद्गारा गिरां [1]व्यूतयः ।
[2]वीरोदात्तगुणोत्तरो रघुपतिः काव्यार्थबीजं मुनि-
र्वाल्मीकिः फलति स्म यस्य चरितस्तोत्राय दिव्या गिरः ॥ ८ ॥

तेषु प्रत्येकमेकैकश एव उत्कर्षवन्तः। यद्वा रसादीनां गतिर्ज्ञानं तत्रोत्कृष्टाः। ननु रस-पाठादयोऽप्याश्रयोत्कर्षादेवोत्कर्षिणो भवन्त्यत आश्रयोत्कर्षमाह—मौद्गल्यस्येति। मौद्ग-ल्यस्य मुद्गलगोत्रसंभवस्य मुरारेः कवेः गिरां व्यूतयो विरचनाः। व्यूतिरिति प्रसिद्धा राशयो वा। गभीरोऽनुत्तानः। मधुरो मनोहरः। आभ्यामुदाराः। उद्भटा इति यावत्। 'राशिर्व्यूतिः स्त्रियौ तुल्ये' इति शाश्वतः। निर्गुणनायके कवित्वोत्कर्षोऽपि वृथा भवतीत्याश-ङ्कायामाह—वीरोदात्तेत्यादि। वीरः शूरः। उदात्तो महान्। गुणै राजगुणैरुत्तरो मान्यः। 'उदात्तो दातृमहतोः' इत्यमरः। यद्वा वीरोदात्तो नायकभेदस्तस्य गुणैरुत्तरः श्रेष्ठो रघुपती रामः। तथा च यत्र रामो नायक इत्यर्थः। 'वीरोदात्तो वीरोद्धतः स्याद्वीरल-लितस्तथा। वीरप्रशान्त इत्येव चतुर्धा नायकः स्मृतः॥' इति भरतः। तथा च वीरो-दात्तस्य गुणैरुत्तरः श्रेष्ठः। तत्र च 'महासत्त्वो दयायुक्तः क्षमावानविकत्थनः। स्थिरो निगूढाहंकारो वीरोदात्तो दृढक्रियः॥ दर्पमात्सर्यभूयिष्ठो मायाच्छद्मपरायणः। वीरो-द्धतो ह्यहंकारी ज्ञेयो रौद्रो विकत्थनः॥ रूपयौवनसंपन्नो नानाक्रीडापरायणः। कला-युक्तः सुखी वीरललितश्चिन्तयोज्झितः॥ सामान्यगुणसंयुक्तो नानावस्थः क्षमान्वितः। वीरप्रशान्त इत्येव निर्दिष्टो नाट्यवेदिभिः॥' नायकोत्कर्षमेव पुनराह—काव्यार्थबीजमि-त्यादिना गिर इत्यन्तेन। काव्यार्थबीजमिति मुनिविशेषणम्। काव्यं कविकर्म नाट-कादि तस्यार्थोऽभिधेयो रामायणं तस्य बीजमुत्पत्तिहेतुर्यत इति वाल्मीकिर्यस्य रघुपते-श्चरितस्तोत्राय दिव्या दिवि भवा गिरः फलति स्म। केचित्तु काव्याभिधेयो रामायणं तस्य बीजं प्रधानमुद्देश्यं श्रीराम एव यस्य रामस्य चरितवर्णनाय वाल्मीकिनामा मुनि-र्दिव्या गिरो वाणीः फलति स्म प्रसूते स्मेति योजयन्ति। अयं तु श्लोकः प्ररोचना। यदाह रङ्गशेखरे ज्योतिरीश्वरः—'प्ररोचनापि कर्तव्या पूर्वरङ्गार्थसिद्धये'। 'भावसिद्धिः प्ररोचना' इति नाट्यदर्पणे। यथा रत्नावल्याम् 'श्रीहर्षो निपुणः कविः' इत्यादि प्ररो-चना। मौद्गल्यस्येत्यत्र मुद्गलस्यापत्यमित्यर्थे 'गर्गादिभ्यो यञ्'। यद्वा 'अत इञ्' इत्यनेन इञि मौद्गलिशब्दादनन्तरापत्ये 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ्, न च तत्र क्षत्रिया-दित्यनुवृत्तेः कथं मौद्गलिशब्दाञ्ञ्यङिति वाच्यम्। मुद्गलो हि पूर्वं क्षत्रिय एवासी-दिति पुराण एव प्रव्यक्तम्। व्यूतिरित्यत्र वेञ्धातोः 'ऊतियूतिजूतिसातिहेतिकी-

१. 'स्यूतयः' इति केषुचित्पुस्तकेषु पाठः. २. सर्वत्र मूलपुस्तकेषु 'धीरोदात्त–' इति पाठः. अन्यत्रापि धीरोदात्तादय एव नायकाः प्रसिद्धाः. अत्र तु केवलं टीकानुरोधेन 'वीरोदात्त–' इति पाठः स्वीकृतः.

अयं तु प्राचेतसीयं कथावस्तु बहुभिः प्रणीतमपि प्रयुञ्जानो नापराध्यति श्रोत्रियपुत्रः । पश्य ।

यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं
गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः ।
स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुर-
स्फुरद्वाग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः ॥ ९ ॥

उपक्रममाणश्च स कविः स्वनिर्भासशब्दब्रह्माणमाचार्यं प्राचेतसं गिरं च देवतामेवमुपश्लोकितवान् ।

तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचाम् ।
सुरलोकादवतारश्रान्तरखेदच्छिदं वन्दे ॥ १० ॥

---

र्तेयश्च' इति क्विन्नन्तो निपातः । दिव्या इत्यत्र 'दिगादिभ्यो यत्' । फलति स्मेति 'लट् स्मे' इति भूते लट् । ननु वाल्मीकीयमपि बहुभिरनेकदा पिष्टमेव, तत्कथं पिष्टपेषणमेव क्रियत इत्यत आह—**अयं त्विति**। अयं तु मुरारिकविः । प्राचेतसीयमिति । प्रचेतसोऽपत्यमित्यणि कृते प्राचेतसो वाल्मीकिस्तस्येदमित्यर्थे वृद्धाच्छः । कथा काव्यशरीरं तस्य वस्तु पदार्थो रामायणं बहुभिः कृतमपि कुर्वञ्श्रोत्रियश्छन्दोध्येता । जन्मसंस्कारविद्यावान्वा । तस्य पुत्रो नापराध्यति नापराधवान्भवति । श्रोत्रिय इति 'श्रोत्रियंश्छन्दोऽधीते' इति व्याकरणे साधु । लक्षणान्तरं च—'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥' अपराधाभावे हेतुमाह—**यदीत्यादि**। पूर्वैर्वाल्मीकिप्रभृतिभिर्मुनिभी रामस्य चरितं क्षुण्णमिति कृत्वा यद्याधुनिका जहति त्यजन्ति तदा तत्तद्गुणानां धैर्यादीनां गरिम्णा गौरवेण गम्भीरमनुत्तानं मधुरं मनोहरं स्फुरद्दीप्यमानं वाग्रूपं ब्रह्म येषां ते कवयः कथं स्वं स्वीयमात्मानमुपकरिष्यन्ति प्रसिद्धिं नेष्यन्ति । ब्रह्मद्वयं शब्दब्रह्म परं ब्रह्म च । तदुक्तम्—'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इति । अथ तथापि कश्चिदन्यस्तादृशो भविष्यतीत्यत आह—गुणैरिति । एतावद्भिर्गुणैर्नानागुणै रामादन्यः कः पुनर्जगति संसारे जयति । अपि तु न कोऽपि । तथा च रामचरितं प्रयुञ्जानो नापराध्यति श्रोत्रियपुत्र इति प्रकटितमिति भावः । उपक्रममाण आरभमाणः । 'उपपराभ्याम्' इति तङ् । स्वेनात्मना निर्भासत आविर्भूय प्रकाशते स्वनिर्भासम् । पचाद्यच् । शब्दब्रह्म यत्र तम् । शब्दब्रह्मणः प्रकाशता विस्तरभयादुपेक्षिता । प्राचेतसं वाल्मीकिम् । गिरं देवतां वाणीरूपां देवीं सरस्वतीमुपश्लोकितवाञ्श्लोकैः स्तुतवान् । श्लोकेन स्तौतीत्यर्थे 'सत्यापपाश–' इति णिच् । 'उपश्लोकस्तु निन्दायां कथितः संस्तुतावपि' इति धरणिः । अधुना काव्यनिदानत्वान्मुनिं कविः प्रणमति—**तमिति** । तमृषिं

धातुश्चतुर्मुखीकण्ठशृङ्गाटकविहारिणीम् ।
नित्यं प्रगल्भवाचालामुपतिष्ठे सरस्वतीम् ॥ ११ ॥

---

मुनिं वन्दे नौमि । कीदृशम् । वाचां मनुष्यलोकप्रवेशे विश्रामवृक्षम् । तथा सुरलोकात्स्वर्गाद्योऽवतारोऽर्थाद्वाचामेव । इदं च काकाक्षिन्यायेनोभयान्वयि । तेन यः प्रान्तरे दूरशून्यवर्त्मनि क्लेशस्तस्य च्छेत्तारमित्यर्थः । ब्रह्मलोकादवतरन्ती वाणी वाल्मीकिवृक्षेऽध्यायासवशाद्विश्रम्य मनुष्यलोकमविशदिति भावः । ननु मनुष्यलोकप्रवेश इति कथं समासः । तथा हि 'कर्तृकर्मणोः कृति' इति षष्ठ्या न भवितव्यम् । वाचां कर्त्रीणां मनुष्यलोकस्य कर्मणः प्रवेशक्रियायां सत्त्वात्, न च 'उभयप्राप्तौ कर्मणि' इति षष्ठीति वाच्यम् । तर्हि 'कर्मणि च' इति समासनिषेधापत्तेः । एवं वाचामित्यत्रापि षष्ठी न युक्ता 'उभयप्राप्तौ कर्मणि' इति नियमेन कर्मण्येव षष्ठीविधेः कर्तरि तदसंभवादिति । उच्यते—मनुष्यलोके प्रवेश इति 'सप्तमी–' इति योगविभागात्समासः । वाचामित्यत्र तु संबन्ध एव षष्ठी । वाक्संबन्धी प्रवेश इत्यर्थात् । नियमश्च प्रायिक इति न्यासकार इति दिक् । ननु विश्रामेत्यत्र 'श्रमु तपसि खेदे च' इति धातोर्विपूर्वाद्घञि कृते 'नोदात्तोपदेशस्य–' इति वृद्धिनिषेधे विश्रम इति स्यात् । मैवम् । 'वौ श्रमः' इति महाभाष्यवचनाद्विपूर्वादपि श्रमेर्वृद्धिः । अत एव चान्द्रव्याकरणे विश्राम एव साधितः । वाचामित्यभ्यर्हितत्वाद्बहुवचनम् । 'ऋषिर्वेदे मुनौ रश्मौ' इति विश्वः । 'प्रान्तरं दूरशून्योऽध्वा' इत्यमरः । खेदच्छिदमित्यत्र 'सत्सूद्विष–' इति क्विप् । इदानीं काव्ये प्रवृत्तत्वात्काव्यस्य शब्दार्थरूपत्वात्तस्य चासाधारणदेवतात्वात्सरस्वतीं नौति—**धातुरिति** । सरस्वतीमुपतिष्ठे यजामि संगतीकरोमि वा । 'उपाद्देवपूजा–' इति तङ् । कीदृशीम् । धातुर्ब्रह्मणो या चतुर्मुखी । चतुर्णां मुखानां समाहारश्चतुर्मुखी तस्या ये कण्ठास्त एव शृङ्गाटकानि चतुष्पथानि तेषु विहारिणीं विहरणशीलाम् । यद्वा चत्वारि मुखानि यस्यां तनौ सा चतुर्मुखी तनुः । विशेषणद्वारैव विशेष्यलाभः प्रायो दृश्यते । यथा 'निधानगर्भामिव सागराम्बराम्' इत्यत्र सागराम्बरत्वेन पृथिव्या एवान्वयः । तथा चतुर्मुखयोगाद्ब्रह्मतनोरेव प्रतीतिः । तस्या ये कण्ठास्त एव शृङ्गाटकानि तत्र विहारिणीम् । न च प्रथमव्याख्याने पात्रादिपाठादत्र क्लीबत्वं स्यादिति वाच्यम् । तद्विधेरनित्यत्वात् । यद्वा अल्पार्थे ङीप् । यथा मृणाली मण्डपीत्यादि । पुनः कीदृशीम् । नित्यं प्रगल्भा नित्यप्रगल्भा । 'द्वितीया' इति योगविभागात्समासः । नित्यप्रगल्भा च वाचाला च ताम् । बहुभाषिणीमित्यर्थः । 'आलजाटचौ बहुभाषिणि' इत्यालज्विधानात् । ननु बहुभाषित्वेन सरस्वत्याः का स्तुतिरिति चेन्न । सरस्वत्याश्चतुर्मुखविहारित्वेन पण्यस्त्रीत्वरूपणात्ताश्च प्रगल्भमेव वदन्ति । तथा च स्वकर्मानुष्ठातृत्वात्स्तुतिरेव । यद्वा वाचां लात्यादत्ते सा वाचाला । 'टापं चापि हलन्तानाम्' इति वचनाद्वाचाशब्दस्य सत्त्वात्तस्मिन्कर्मण्युपपदे 'आतोऽनुपसर्गे कः' इति कप्रत्ययं कृत्वा रूपमेतदिति सर्वं सुस्थम् । अपरे तु वाचालामुत्कृष्टभाषिणीम् । 'आ-

**नटः**—(सहर्षम्।) भाव, तत्प्रस्तूयताम्। अस्य हि मौद्गल्यानां ब्रह्मर्षीणामन्वयमूर्धन्यस्य मुरारिनामधेयस्य बालवाल्मीकेर्वाङ्मयममृतबिन्दुनिष्यन्दि कुन्दलयति कौतुकं मे।

**सूत्रधारः**—मारिष, स्थाने भवतः कुतूहलमीदृशमेवैतत्। तथाहि।

तत्तादृगुज्ज्वलककुत्स्थकुलप्रशस्ति-
सौरभ्यनिर्भरगभीरमनोहराणि।
वाल्मीकिवागमृतकूपनिपानलक्ष्मी-
मेतानि बिभ्रति मुरारिकवेर्वचांसि[2] ॥ १२ ॥

---

लजाटचौ बहुभाषिणि' इति सूत्रेण योगविभागात्प्रशंसायामप्यालजाटचावित्याहुः। अयं च रङ्गवर्तिनावश्यं पठनीयः श्लोकः। यदाह भरतः—'श्लोकं पठेदेकम्' इति। 'शृङ्गाटकं भवेद्वारिकण्टके च चतुष्पथे' इति मेदिनीकारः। 'स्याज्जल्पाकस्तु वाचालः' इति विहारिणीमित्यत्र ताच्छीलिको णिनिः। मौद्गल्यानामित्यत्र 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति यञो न लुक्। एकशेषेण तत्कृतबहुत्वाभावात्। ऋषय इव ब्राह्मणा ब्रह्मर्षयः। अन्वयो वंशः। मूर्धन्यः श्रेष्ठः। 'मूर्धन्यः स्याच्छिरोभूते प्रधाने श्रेष्ठसंज्ञिते' इति विश्वः। 'नामधेयं च नाम च' इत्यमरः। बालश्चासौ वाल्मीकिश्चेति समासः। बालपदेन पुराणवाल्मीकेर्भेदः। वाङ्मयं कर्तृ, वाङ्मयं वचनविकारो नाटकम्। विकारार्थे 'नित्यं वृद्धशरादिभ्यः' इति मयट्। कन्दलयत्यङ्कुरयति। इह कन्दलोऽङ्कुरं तदस्यास्तीति कन्दलवांस्तं करोतीति 'तत्करोति तदाचष्टे' इति णिच्। 'णाविष्ठवत्प्रातिपदिकस्य' इतीष्ठवद्भावात् 'विन्मतोर्लुक्' इति मतुपो लुक्। स्थाने युक्तम्। अव्ययोऽयं स्थानेशब्दः। 'युक्तार्थे सांप्रतं स्थाने' इति विश्वः। सप्तम्यन्तमेव वा। स्थाने विषये। 'कुतुकं तु कुतूहलम्' इत्यमरः। **तत्तादृगिति**। एतानि मुरारिकवेर्वचांसि वाल्मीकेर्यद्वागेवामृतं तस्य यः कूपस्तस्य निपानलक्ष्मीं कूपसमीपस्थेष्टकादिबद्धस्वल्पजलाशयशोभां बिभ्रति दधति। अयं भावः—यथा कूपान्न्यूनं निपानं तथा वाल्मीकिवचनेभ्यः किंचिन्न्यूनानि मुरारिवचनानीति। कीदृशानि। तत्प्रसिद्धं तादृगपूर्वगुणवदुज्ज्वलं पवित्रं यत्ककुत्स्थकुलं ककुत्स्थः सूर्यवंशे राजविशेषस्तस्य कुलं तस्य प्रशस्तिः प्रशंसा तस्याः सौरभ्यं ख्यातत्वं मनोज्ञत्वं वा, तेन निर्भरमतिशयेन गभीराणि मनोहराणि चेति कर्मधारयः। अथवा प्रशस्ति-

---

१. मूलपुस्तकेषु 'मौद्गल्यायनानाम्' इति पाठः. २. केषुचिन्मूलपुस्तकेषु 'तत्तादृगुज्ज्वल—' इत्यादि श्लोकादग्रे 'अपिच। देवीं वाचमुपासते हि बहवः' इत्यादि श्लोको दृश्यते, स च प्रक्षिप्त इति ज्ञेयम्. अत एव टीकाकर्त्रा न स्वीकृतः. अस्माभिस्त्वयं श्लोको ग्रन्थारम्भे टिप्पण्यां मुरारिकविप्रशंसाश्लोकेषु लिखितः.

(नेपथ्ये गीयते ।)

दिणअरकिरणुक्केरो पिआअरो को वि जीअलोअस्स ।
कमलमउलंकवालीकिअमहुअरकड्ढणविअड्ढो ॥ १२ ॥

**सूत्रधारः**—(आकर्ण्य ।) कथमुपक्रान्तमेव नर्तकैः, यदियं दशरथोत्सङ्गाद्रामभद्राकर्षिणो विश्वामित्रस्य प्रावेशिकी ध्रुवा । (पुरोऽवलोक्य ससंभ्रमम् ।) अये, कथमत्रैव तत्रभवतः कमलयोनिजन्मनो मुनेरायतनात्प्रतिनिवृत्तेन ऋत्विजा वामदेवेन किमपि तद्वाचिकमभिधीयमानो महाराजो दशरथस्तिष्ठति । तदेहि । न द्वयोस्तृतीयेन भवितव्यमित्यावामप्यनन्तरकरणीयाय सज्जीभवावः । (इति निष्क्रान्तौ ।)

प्रस्तावना ।

---

र्यशः, सौरभ्यं सौगन्ध्यम्, यशः सुगन्धीति कविसंप्रदायसिद्धम् । यथा तस्यैव श्वेतत्वम् । प्रशस्तिरिति 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । सौरभ्यं स्यात्तु सौगन्ध्ये सौभाग्ये गुणगौरवे । ख्याततायां मनोज्ञत्वे सौरभ्यं प्रवदन्ति हि ॥' इति विश्वः । 'प्रशस्तिश्च प्रशंसायां कीर्तावपि निगद्यते' इति धरणिः । 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः ॥

**नेपथ्य इति ।** 'रङ्गभूमेर्वहिस्थानं यत्तन्नेपथ्यमुच्यते' इति भरतः । 'नेपथ्यं वर्णिका क्षितिः' इति च । अधुना नृत्योपक्रमव्याजेन प्रथमाङ्कस्य पर्यवसितमर्थं सूचयन्ध्रुवामाह—**दिणअरेति** । 'दिनकरकिरणोत्करः प्रियाकरः कोऽपि जीवलोकस्य । कमलमुकुलाङ्कपालीकृतमधुकरकर्षणविदग्धः ॥' [इति च्छाया ।] दिनकरकिरणोत्करः सूर्यतेजःसमूहः । अस्तीति शेषं दत्त्वा योज्यम् । कीदृशः । जीवलोकस्य प्राणिवर्गस्य कोऽप्यनिर्वचनीयः प्रियाकरः प्रियकारकः कमलमुकुलेनेषद्विकसितकमलकलिकयाङ्कपालीकृतः क्रोडीकृतो यो मधुकरो भ्रमरस्तस्य कर्षणे वहिःकरणे विदग्धः कुशलः । तेजःसंवन्धेन कमलदलप्रकाशात् । 'अङ्कपाली परिरम्भः' इति मेदिनीकरः । प्रियाकर इत्यत्र 'सुखप्रियादानुलोम्ये' इति डाच् । 'विदग्धश्चतुरे खिन्ने नागरे कुशलेऽपि च' इति विश्वः । अधुना दिणअरेत्यादि गाथया सूचितमर्थं प्रकटयति—**यदियमिति ।** उत्सङ्गः क्रोडः । प्रावेशिकी प्रवेशसूचिका । ध्रुवा गीतिभेदः । तथा च भरतः—'ध्रुवा तु गीतिभेदोऽयं वृन्दसामा(?) निवध्यते' इति । सा च पञ्चधा । तथाहि—'प्रावेशिकी निष्कामणी परिक्रामण्यवस्थितिः । उत्थापनी तु पञ्चम्या ध्रुवा नाट्यार्थसिद्धये ॥ तत्र

---

१. एकस्मिन्मूलपुस्तके 'नद्वयोस्तृतीयेन भवितव्यमिति निष्क्रान्तौ' इत्येतावदेव पाठः. भाति चायमेव पाठष्टीकाकारसंमतः. अस्माभिस्तु वहुपुस्तकानुरोधेन 'इत्यावामप्यनन्तरकरणीयाय सज्जीभवावः' इत्यधिकः पाठः स्वीकृतः.

(ततः प्रविशति यथोपदिष्टो दशरथो वामदेवश्च ।)

**दशरथः**—अहो, बहुधा श्रुतमपि भगवतो वसिष्ठस्यानुशासनं नवं नवमिव प्रमोदयति माम् ।

**वामदेवः**—

मधुकैटभदानवेन्द्रमेदःप्लवविस्रा विषमैव मेदिनीयम् ।
अधिवास्य यदि स्वकैर्यशोभिश्चिरमेनामुपभुञ्जते नरेन्द्राः ॥ १४ ॥

---

प्रावेशिकी ज्ञेया प्रवेशे गानयोगतः ॥' अनया सूचनापि वृत्ता । 'असूचितस्य पात्रस्य प्रवेशो नैव युज्यते' इति भरतः । ससंभ्रमं सादरम् । अये इति सानुनये संबोधने । कमलयोनिर्ब्रह्मा ततो जन्म यस्य तस्य वसिष्ठस्यायतनादाश्रमात्किमपि रहस्यं तस्य वाचिकं तद्वाचिकम् । 'संदेशवाग्वाचिकं स्यात्' इत्यमरः । एह्यागच्छ । न द्वयोस्तृतीयेनेति 'षट्कर्णो भिद्यते मन्त्रः' इत्यभिप्रायादिति । निष्क्रान्तौ । नटसूत्रधाराविति शेषः । प्रस्तावना । निर्वर्तितेति शेषः । प्रस्तावनालक्षणं तु भरते—'नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैश्चापि नाटके । प्रस्तावना हि सा ज्ञेया प्रकृतार्थोचितं वचः ॥' इति । अयमेव पूर्वरङ्गः । 'पूर्वरङ्गः सभापूजा कवेर्गोत्रादिकीर्तनम् । नाटकादेस्तथा संज्ञा सूत्रधारोऽप्यथो मुखम् ॥ गीतिक्रिया च वाद्यं च वर्णिकाग्रहणं तथा । धृतिर्जवनिकायाश्च पूर्वरङ्गश्चतुर्विधः ॥' इति ॥

दशरथः किंचित्तद्वाचिकामृतपानसंजातहर्षस्तत्प्रस्तौति—**अहो बहुधेति** । बहुधा बहुवारम् । 'संख्याया विधार्थे धा' इति धाप्रत्ययः । अनुशासनमाज्ञा एव । वसिष्ठवचनस्य राज्ञाविष्कारः कृतः । वसिष्ठ इति दन्त्यमध्यः । वसु तेजस्तद्यस्यास्तीति स वसुमान् । तस्मादिष्ठनि कृते 'विन्मतोः—' इति मतोरुकारस्य च लोपे धातुपारायणे साधितत्वात् । अत एव 'प्रसृतासनानुवासनवसिष्ठरसविसोढविस्रब्धाः' इति गदसिंहः । आश्चर्यमञ्जर्यां तु श्लेषानुरोधेन वशिष्ठ इति तालव्यशकारो दर्शितः । प्रमोदयति हृष्टं करोति । अनुशासनमेवाह—**मध्वित्यादि** । इयं मेदिनी पृथिवी विषमैव दुःसाध्यैव । यद्वा अनुपभोग्यैवास्ति । कीदृशी । मधुश्च कैटभश्चेति द्वन्द्वः । तयोर्दानवेन्द्रयोर्मेदसो वसायाः प्लवेन प्रोक्षणेन पूरणेन वा विस्रा आमगन्धवती अत एवाशक्यभोग्या नरेन्द्रा राजनः स्वकैर्यशोभिरधिवास्य धूपयित्वा यद्येनां पृथिवीमुपभुञ्जते तदा परमुपभुञ्जते, नो चेदुपभुञ्जत एव नेत्यर्थः । तथा च भवन्तोऽपि यशोभिरधिवास्य भुवमुपभुञ्जन्तामिति भावः । तथा चोक्तम्—'यशोधना हि राजानः' इति । मेदोयोगान्मेदिनीत्युचितं नाम । पृषोदरादित्वात्साधुः । 'स्यान्मेदस्तु वपा वसा' इत्यमरः । 'विस्रं स्यादामगन्धि यत्' इत्यपि 'प्लवः स्यात्प्लवने भेके' इति । 'अधिवासो निवासे स्यात्संस्कारे धूपनादिभिः' इति मेदिनीकरः । यशःसुगन्धिता कविसंप्रदायः । उपभुञ्जत इति 'भुजोऽनवने' इति तङ् ।

**दशरथः**—(सविमर्शस्मितम्।) सखे वामदेव,

तस्याज्ञयैव परिपालयतः प्रजां मे
कर्णोपकण्ठपलितंकरणी जरेयम्।
यद्गर्भरूपमिव मामनुशास्ति सर्व-
मद्यापि तन्मयि गुरुर्गुरुपक्षपातः॥ १५॥

**वामदेवः**—महाराज, किमुच्यते। समानवृत्तेरपि क्वचिदेव कस्य-चित्तारामैत्रकम्। तथाहि स तत्रभवान्

साधारणो रघूणां गुरुर्भवन्नपि विशेषदृष्टिस्ते।
नामोदयति कमिन्दुः कुमुदं पुनरस्य सर्वस्वम्॥ १६॥

---

स्मितमीषद्धासः। स्वस्य वसिष्ठाधीनत्वं प्रकटयति—**तस्येति**। तस्य वसिष्ठस्याज्ञयैव प्रजां रक्षतो ममेयं कर्णोपकण्ठे कर्णसमीपे पलितकरणी शौक्ल्यकारिणी जरा। उपस्थितेति शेषः। उपकण्ठः समीपम्। 'उपकण्ठान्तिकाभ्यर्ण-' इत्याद्यमरः। पलितंकरणीत्यत्र 'आढ्यसुभग-' इत्यादिना ख्युन्। 'अरुर्द्विषदजन्तस्य-' इति मुम् 'टिड्ढाणञ्-' इत्यादिना ङीप्। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। पलितं क्रियते यया सा पलितंकरणी। स्वस्मिन्वसिष्ठस्य स्नेहाधिक्यं द्रढयितुमाह—यद्गर्भरूपमिति। यदद्यापि वृद्धत्वेऽपि सति गर्भरूपमिवातिबालकमिव युवानमिव वा यथाकर्तव्यमनुशास्त्युपदिशति। तत्तस्माद्गुरोर्वसिष्ठस्य मयि पक्षपातोऽनुग्रहो गुरुरतिशयितः। तथा च वसिष्ठादेशो मयावश्यं कर्तव्य इति भावः। दशरथस्तु संस्कृतवाची। तदाहुः—'देवानां भूपतीनां च सचिवानां पुरोधसाम्। अमात्यवणिगादीनां पाठ्यमिच्छन्ति संस्कृतम्' इति। 'बालके तरुणेऽपि स्याद्गर्भरूपः' इति विश्वः। 'गुरुर्महति पित्रादावुपदेशकृति स्मृतः' इति च। काकुत्स्थकुलसाधारणोऽपि वसिष्ठस्त्वय्येवानुरक्त इति बोधयितुमाह—**समानवृत्तेरपि**। समानवृत्तेस्तुल्यव्यापारस्य तारामैत्रकं स्वभाविकी चक्षुःप्रीतिः। यद्वा नक्षत्रयोगकृता मैत्री। क्वचिदेव, न सर्वत्र। 'अक्षिपुत्र्यां च नक्षत्रे तारोक्ता बालियोषिति' इति विश्वः। तारामैत्रकमिति 'द्वन्द्वमनोज्ञादिभ्यश्च' इति वुञ्। प्रकृते तदुपपादयति—**साधारण इति**। रघूणां रघोरपत्यानां साधारणो गुरुर्भवन्नपि वसिष्ठस्त्वत्कृते विशेषदृष्टिः। त्वय्यत्यन्तमनुरक्त इत्यर्थः। अत्र दृष्टान्तद्वारोपपत्तिमाह—इन्दुश्चन्द्रः कं नानन्दयति, अपि तु बहुतरमेव। अस्य चन्द्रस्य पुनः कुमुदं सर्वस्वभूतम्। यद्यपि बहूनामानन्ददायी भवति चन्द्रस्तथापि कुमुदस्यात्यन्तमिति भावः। प्रतिवस्तूपमायमलंकारः। यदाह दण्डी—'वस्तु किंचिदुपन्यस्य समानात्तत्सधर्मणः। साम्यप्रतीतिरस्तीति प्रति-

---

१. 'ऋषे' इति पाठान्तरम्.

**दशरथः**—वामदेव, मम हि गुरुवचनश्रवणतृष्णामङ्कुशीकरोति[1] श्रोत्रवृत्तिरिन्द्रियान्तरानुसारिणो हृदयमहागजस्य। तेन[2] किंचिदपरमवशिष्यते।

**वामदेवः**—महाराज, निःशेषमभिहितम्। इमां तु सर्वसंदेशसंग्रहकारिकां कारिकामतिप्रयत्नेन भगवान्भवन्तमनुस्मारयति।

**दशरथः**—(सादरम्।) अवहितोऽस्मि। किमाज्ञापयति[3]।

**वामदेवः**—

हुतमिष्टं च तप्तं च धर्मश्चायं कुलस्य ते।
गृहात्प्रतिनिवर्तन्ते पूर्णकामा यदर्थिनः॥ १७॥

**दशरथः**—(सहर्षम्।) सुष्ठु शिरसि कृतमाचार्यवचनम्। किं च।

---

वस्तूपमा मता॥' **मम हीत्यादि**। मम हृदयस्य मनसः श्रोत्रवृत्तिः श्रवणव्यापारो गुरुवचनश्रवणतृष्णामभिलाषमङ्कुशीकरोति। अङ्कुशं कृत्वा मन आकर्षतीत्यर्थः। कीदृशस्य मनसः। इन्द्रियान्तरानुसारिण इन्द्रियान्तरानुसरणशीलस्यापि मनसः सकलेन्द्रियसंबन्धशालित्वात्तृष्णा मच्चित्तमिन्द्रियान्तरादाच्छिद्य श्रोत्रलग्नं करोतीति भावः। 'हि हेताववधारणे' इति। अवशिष्यत इत्यत्र 'शिष्लृ विशेषणे' कर्मणि लट्। यद्वा 'शास इदङ्हलोः' इतीत्वम्। संग्रहः संक्षेपः। कारिका श्लोकः। 'कारिका तु कृतौ श्लोके' इति विश्वः। अनुस्मारयत्यवगमयति। न केवलं मदनुशासनादेव त्वयैवं वक्ष्यमाणं कर्तव्यं किंतु भवत्कुलायातोऽप्ययं धर्म इत्याह—**हुतमित्यादि**। हुतं होमः। देवतोद्देशेन वह्न्यादौ हविस्त्यागः। इष्टमग्निहोत्रादि। तप्तं तपः। अयं तव वंशस्य धर्मः स्वभावः। यच्चार्थिनः प्रार्थकाः पूर्णकामाः संपूर्णेच्छाः सन्तस्तव गृहात्प्रतिनिवर्तन्ते प्रतिनिवृत्ता भवन्ति। सोऽपि भवत्कुलधर्म एव। अनेन रामप्रार्थनासाफल्यं सूचितम्। 'अग्निहोत्रं तपश्चैव वेदाभ्यासस्तथैव च। आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते॥' इति स्मृतिः। 'कामः पुंसि स्मरेच्छयोः' इति शाश्वतः। 'सुष्ठु प्रशंसने' इत्यमरः। हुतमित्यादिवाक्यस्य तात्पर्यविषयीभूतरामचन्द्रप्रदानजन्यविश्लेषजन्यदुःखाविमर्षणात्सामान्यतो वसिष्ठानुशासनत्वेन हर्षमाविष्करोति—**अस्मदित्यादि**। अद्य रविः सूर्यः क्रतुभुजां देवानामाद्यः प्रथमः। श्रेष्ठ इति यावत्। अस्मद्गोत्रमहत्तरो रघुवंशवृद्धः। यद्वा देवानामाद्यो रविरद्यास्मद्गोत्रमहत्तरोऽतिमहत्त्ववान्।

---

१. 'अङ्कुशयति' इति पुस्तकान्तरपाठः. २. 'तत्किमपरमवशिष्यते'; 'तन्न किंचिदवशिष्यते' इति पाठः. ३. 'किमाज्ञापयन्ति गुरव इति' इति पाठान्तरम्.

असद्गोत्रमहत्तरः क्रतुभुजामद्यायमाद्यो रवि-
र्यज्वानो वयमद्य ते[1] भगवती भूरद्य राजन्वती ।
अद्य स्वं बहुमन्यते सहचरैरस्माभिराखण्डलो
येनेतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः ॥ १८ ॥

**वामदेवः**—राजर्षे, सहजानुभावगम्भीरमहिमानो यूयमेव तादृशाय यशसे । वयं[2] तु केवलमुपदेष्टारः ।

उन्मुद्रयति हि कुमुदाकरमशरन्निशानिशातनिस्तुषोऽपि तुषारकिरणः ।
स पुनः किमुच्यते भवगान्द्वितीयपरमेष्ठी वसिष्ठः ॥ १९ ॥

---

अद्य ते प्रसिद्धा वयं यज्वानो याज्ञिकाः । अद्य भूः पृथ्वी राजन्वती प्रकृष्टराजयुक्ता । अद्याखण्डल इन्द्रोऽस्माभिः सहचरैः स्वमात्मानं बहु यथा स्यादेवं मन्यतेऽत्युत्कृष्टं जानाति । येन हेतुनारुन्धतीपतिरपि वसिष्ठोऽपि स्वेनात्मना नोऽस्मानेतावदर्थम् । यद्वा-नुग्रहस्वरूपक्रियाविशेषणम् । अनुगृह्णाति । यज्वान इत्यत्र 'सुयजोर्ङ्वनिप्' । राजन्वतीत्यत्र 'राजन्वान्सौराज्ये' इति निपातनान्नलोपाभावो वत्वं च । 'उगितश्च' इति ङीप् । अनुगृह्णातीत्यत्र 'ऋवर्णाच्च' इति णत्वम् । 'वर्हिर्मुखाः क्रतुभुजः' इत्यमरः । 'यज्वा तु विधिनेष्टवान्' 'सुराज्ञि देशे राजन्वान्' इत्यपि । 'गोत्रं नाम्नि कुलेऽपि च' इति विश्वः । 'आखण्डलः सहस्राक्षः' इत्यमरः । अनुभावः प्रभावः । तादृशाय यशसे । अलमित्यध्याहार्यम् । वयं वसिष्ठादयः । केवलं यशसे यशोर्थमुपदेष्टारः वसिष्ठादिदिष्टार्थानुष्ठानार्थं वसिष्ठस्यैवाप्तत्वं द्रढयितुमाह—**उन्मुद्रयतीति** । शरदो निशा रात्रिस्तया निशातस्तेजितः । प्रसन्नीकृत इति यावत् । अत एव निस्तुषो मेघाद्यनावृतः । निर्मल इति यावत् । शरन्निशानिशातनिस्तुष इति समासः । पश्चान्नञा समासेऽशरन्निशानिशातनिस्तुषोऽपि तुषारकिरणः शीतरश्मिः कुमुदाकरं कैरवसमूहं कैरवस्थानं वा उन्मुद्रयति प्रकाशयति । शारदशुक्लपक्षे कुमुदप्रबोधवर्णनमिति कविसंप्रदायः । स पुनर्वसिष्ठो द्वितीयपरमेष्ठी द्वितीयब्रह्मा किमुच्यते । अपि तु स सर्वाधिकोऽवश्यं कुमुदाकरं प्रकाशयत्येव । कोः पृथिव्या मुद्धर्षः कुमुत्, तस्या आकरः स्थानं दशरथस्तम् । कीदृशो वसिष्ठः । शरत्संवत्सरस्तस्य निशायां निशातः प्रबुद्धः शरन्निशानिशातः, न शरन्निशानिशातोऽशरन्निशानिशातः । ध्यानाश्रयत्वात् । ततो निस्तुषो निर्मलः पापशून्यत्वात् । द्वयोः कर्मधारयः । इदं तु कुमुदाकरं नाम वृत्तम् । 'एकादशभिर्वर्णैरष्टादशभिः क्रमादुभौ पादौ । तत्कुमुदाकरवृत्तं चरमौ तु दशाक्षरौ यस्य ॥' द्वितीयपाठे छन्दोविरोधश्चिन्त्यः । 'आकरः श्रेष्ठनिवहावुत्पत्तिस्थानमाकरे' इति

---

१. 'नो भगवती' इति पाठान्तरम्. २. 'केवलमुपदेष्टारो वयम्'; 'केवलं वयमुपदेष्टारः' इति पाठान्तरम्.

अपि च।

इदं वो याज्यानामुदितमुदितं यत्कुलमभू-
द्यदिष्टं वा कुर्वन्नकृत सगरः पूर्तमुदधिम्।
असौ पूर्वेषां ते सुचरितपताका यदमर-
स्रवन्ती कृत्स्नोऽयं त्रिभुवनगुरोस्तस्य विभवः ॥ २० ॥

किं च।

कौशिकस्वीकृतस्यापि यदाज्ञातिक्रमादभूत्।
त्रिशङ्कोरुपभोगाय न द्यौरपि न भूरपि ॥ २१ ॥

---

धरणिः निशातेति 'शो तनूकरणे' क्तः। 'परमेष्ठी पितामहः' इत्यमरः। वसिष्ठ इति पदेन तेजस्वित्वमुक्तम्। ननु वसिष्ठस्य द्वितीयपरमेष्ठित्वेऽपि किमायातमस्माकमिति दशरथवचनमाशङ्क्याह—**इदमिति**। अयं कृत्स्नः सकलस्तस्य त्रिभुवनगुरोस्त्रिलोकीमान्यस्य वसिष्ठस्य विभवः प्रभावः। किमित्याह—वो युष्माकं याज्यानां कुलमिदमुदितमत्यर्थं प्रथितम्। यद्वा उदितमुदययुक्तम्। मुदितं हृष्टम्। पश्चात्कर्मधारयः। अभूदिति भूतसामान्यविवक्षायां लुङ्। यच्च इष्टं यागं कुर्वन्सगरो राजा उदधिं समुद्रं पूर्तं खातमकृत कृतवान्। यच्चासावमरस्रवन्ती देवनदी गङ्गा तव पूर्वेषां भगीरथस्य सुचरितपताका। शोभनव्यापारवैजयन्तीत्यर्थः। तथा च वसिष्ठादेशः सर्वथा कर्तव्य इति भावः। 'पूर्तं त्रिषु पूरिते स्यात्क्लीबं खातादिकं मतम्' इति मेदिनीकरः। 'पताका वैजयन्ती स्यात्' इति च। 'स्रवन्ती निम्नगापगा' इत्यमरः। 'पुंभूम्नि पूर्वजेषु स्यात्पूर्वः प्रागाद्ययोस्त्रिषु' इति धरणिः। एतावतापि तस्याज्ञान्यथाकरणे त्रिशङ्कुदृष्टान्तेन त्रासयन्कौशिकप्रवेशसूचनामाह—**किं चेति**। यस्य वसिष्ठस्याज्ञातिक्रमात्कौशिकस्वीकृतस्यापि विश्वामित्रानुमतस्यापि त्रिशङ्कोरुपभोगार्थम्। तादर्थ्ये चतुर्थी। न द्यौरपि स्वर्गोऽपि, न वा भूः पृथिव्यप्यभूदित्यर्थः। पुरा किल त्रिशङ्कुः क्षत्रियो राजा स्वदेहेन स्वर्गं गन्तुकाम इष्टिं कर्तुं वसिष्ठं वृतवान्। स तेन परिहृतः। पश्चात्तत्पुत्रांस्तदर्थं वृतवान्। तैरपि त्यक्तः। ततः कौशिकमुनिमनुगतं वीक्ष्य चण्डालत्वेनाभिशप्तः। ततोऽस्यैवंविधस्यापि यज्ञारम्भे देवगणानामामन्त्रणेऽप्यनागमनादन्यथा सृष्टिं कुर्वन्कौशिको ब्रह्मणा प्रसादितस्त्रिशङ्कुं स्वपुण्यभागेन स्वर्गं प्रेषितवान्। ततश्चाण्डालोऽपि स्वर्गमधिरोहतीत्यनर्हतयेन्द्रेण हुंकारकरणात्तस्मात्पातितो द्यावापृथिव्योरन्तराले स्थितः—इति पुराणे व्यक्तम्। 'त्रिशङ्कुर्ना राजभेदे शलभे वृषदंशके। तुरुष्कसिहके म्लेच्छजातौ देशान्तरेऽपि च॥' इति विश्वः। **प्रविश्य प्रतीहारीति**। तल्लक्षणं तु 'संधिविग्रहसंबन्धं नानाचारमुपस्थितम्। निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ता मताः॥' इति। द्वारमध्यास्त इति 'अधिशी-

**प्रतीहारी**[1]—जयतु जयतु देवः[2]। देव, भगवान्कौशिको द्वारमध्यास्ते।

**दशरथः**—(ससंभ्रमम्।) किं[3] कौशिकः।

**वामदेवः**—अहं तमुपेत्य श्रौतेन विधिना पुरस्कृत्य प्रवेशयामि तपोनिधिम्। (इति प्रतीहार्या[4] सह निष्क्रान्तः।)

**दशरथः**—(सहर्षम्।)

य: क्षत्रदेहं परितक्ष्य टङ्कैस्तपोमयैर्ब्राह्मणमुच्चकार।
परोरजोभिः स्वगुणैरगाधः स गाधिपुत्रोऽपि गृहानुपैति॥ २२॥

---

ङ्स्थासां कर्म' इति कर्मसंज्ञा। द्वारि तिष्ठतीत्यर्थः। अनादिष्टोऽप्यतिविज्ञतया राजाभिप्रायज्ञः प्राह—**अहमित्यादि**। उपेत्य गत्वा श्रौतेन वेदोक्तेन। पुरस्कृत्येति 'पुरोऽव्ययम्' इति नित्यं गतिसंज्ञायां सत्यां ल्यबादेशः। अतिदुष्प्रापस्य प्राप्त्या स्वशुभहेतुतामभिज्ञाय सहर्षं तर्कयन्नाह—**य इत्यादि**। स गाधिपुत्रोऽपि कौशिकोऽपि गृहान्गृहमुपैत्यायाति। अपिरत्युत्कर्षसूचनाय। स कः। यस्तपोमयैस्तपःप्रचुरैस्तत्प्रकृतिभिर्वा टङ्कैः पाषाणदारणैः। 'टांकी' इति प्रसिद्धैः। क्षत्रदेहं क्षत्रियशरीरं परितक्ष्य तनूकृत्य। खण्डीकृत्येति यावत्। ब्राह्मणशरीरं ब्राह्मणजातिसंबद्धमुच्चकार कृतवान्। परोरजोभी रजसः परैः सात्त्विकैः। जात्याख्यायां बहुवचनम्। 'पारस्करप्रभृतीनां च' इति सुट् निपातितः। यद्वा रजोगुण आद्यो गुणस्तस्मात्परे ये सात्त्विकास्तामसाश्च तत्स्वरूपैः स्वगुणैरगाधो गभीरः। सात्त्विकतामसगुणसद्भावात्कौशिकस्यानुग्रहयोग्याता क्रोधशालिता च प्रकाशिता। परोरजस इति सुप्सुपेति समासः। परितक्ष्येति 'तक्षू त्वक्षू तनूकरणे' ल्यप्। ब्रह्माणमिति जातिपरम्। तेन ब्रह्मण इदं ब्राह्मणमित्यणि कृते 'ब्राह्मोऽजातौ' इति टिलोपो न भवति। यद्यपि विशुद्धमातापितृयोनिजत्वं ब्राह्मणत्वमिति सर्वतान्त्रिकसिद्धं तथापि क्षत्रियजातस्य परशुरामस्य योजनगन्धाजातस्य व्यासस्य च ब्राह्मण्यं तपःप्रभावाद्यथा तथास्यापीत्यदोषः। अचिन्त्यो हि तपःप्रभावः। को हि सागरमगस्त्य इव पिबेदिति। 'गृहाः पुंसि च भूम्न्येव' इत्यमरः। 'टङ्कः पाषाणदारणः' इति च। 'रजोगुणे रजो रेणुः' इति विश्वः। 'अगाधमतलस्पर्शम्' इति। तपोमयेत्यत्र 'तत्प्रकृतवचने मयट्'। विश्वामित्र इत्यत्र विश्वस्य मित्रं विश्वामित्रः। 'मित्रे चर्षौ' इति दीर्घः। तथा च पुंलिङ्गोऽपि मित्रशब्द इत्यवधेयम्। यद्वा विश्वं मित्रं यस्य पूर्ववद्दीर्घत्वम्। 'कच्चित्कामप्रवेदने'। काममपेक्षितं निवेदयेत्यर्थः। कुशली कुशलयुक्त इति। ज्योतिरिव ज्योतिः

---

१. 'प्रतीहारः' इति पाठान्तरम्. २. 'जयति जयति देवः'; 'जयतु देवः' इति पाठान्तरम्. ३. 'किं. कौशिकः' इत्यस्मादग्रे केषुचित्पुस्तकेषु 'प्रतीहारः—अथ किम्' इत्यधिकं दृश्यते. ४. 'प्रतीहारेण सह' इति मूलपुस्तकेषु पाठः.

(ततः प्रविशति वामदेवोपदिश्यमानवर्त्मा विश्वामित्रः ।)

**विश्वामित्रः**—सखे वामदेव[1], त्वमधुनैव वसिष्ठाश्रमादागतोऽसि । कच्चित्कुशली तावदरुन्धतीनाम्ना पतिव्रतामयेन ज्योतिषा सहचरितधर्मा तत्रभवान्मैत्रावरुणिः ।

**वामदेवः**—विशेषेण पुनरद्य याज्यकुलमुपतिष्ठमाने चिरंतनप्रणयिनि कौशिके[2] ।

**विश्वामित्रः**—सखे वामदेव, चिरेण दशरथो द्रष्टव्य इति सर्वमनोरथानामुपरि वर्तामहे ।

**वामदेवः**—(सविनयम् ।) भगवन्कुशिकनन्दन, धन्यः खल्वयं राजा सावित्रो यमेवमनुरुध्यन्ते भवन्तोऽपि[3] ।

**विश्वामित्रः**—सखे, धन्य एवायम् ।

नमन्नृपतिमण्डलीमुकुटचन्द्रिकादुर्दिन-
स्फुरच्चरणपल्लवप्रतिपदोक्तदोःसंपदा ।
अनेन ससृजेतरां तुरगमेधमुक्तभ्रम-
तुरंगखुरचन्द्रकप्रकरदन्तुरा मेदिनी ॥ २३ ॥

---

पतिव्रतात्वम् । सहचरितधर्मेति । 'धर्मादनिच्केवलात्' इत्यनिच्समासान्तः । मैत्रवरुणिर्वसिष्ठः । अर्थतः स्तुवन्नाह—**विशेषेणेत्यादि** । याज्यकुलमुपतिष्ठमाने यजमानगृहं लब्धुमिच्छति । 'वा लिप्सायाम्' इति तङ् । चिरंतनप्रणयिनि पूर्वप्रेमवति । 'सायंचिरम्—' इति ट्युः, तुट् च । 'प्रियसुहृदि' इति पाठे प्रियः प्रीतः । 'इगुपधज्ञाप्रीकिरः कः' इति कः । सुहृच्छोभनं हृन्मनो यस्य । पश्चात्कर्मधारयः । कौशिक इत्यत्र 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । अनुरुध्यन्ते कामयन्ते । 'अनोरुध कामे' इत्यस्मात् श्यन् दैवादिकः । सावित्रः सवितुरपत्यम् । धन्यः कथमयमित्यत आह—**नमदित्यादि** । अनेन राज्ञा दशरथेन मेदिनी पृथिवी तुरगमेधोऽश्वमेधो यज्ञस्तदर्थं त्यक्तोऽनन्तरं भ्रमन्यस्तुरंगोऽश्वस्तस्य यः खुरचन्द्रकप्रकरश्चन्द्रकलाकारखुरसमूहस्तेन दन्तुरा निम्नोन्नता ससृजेतरामत्यर्थेन सृष्टा । कर्मणि लिट् । 'तिनश्च' इति तरप् । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यामुः । कीदृशेन । नमन्ती या राजमण्डली । 'मण्डलं त्रिषु' इत्यमरः । तस्या

---

१. 'वामदेव' इत्यस्मादग्रे 'कथय' इत्यधिकं क्वचित्. २. 'विश्वामित्रे' इति पाठान्तरम्. ३. 'भगवन्तोऽपि' इति पाठान्तरम्.

(पुरोऽवलोक्य सहर्षम्।)

चिरादक्ष्णोर्जाड्यं शमयति समस्तासुरवधू-
कचाकृष्टिक्रीडाप्रसभसुभगंभावुकभुजः।
त्रिलोकीजङ्घालोज्ज्वलसहजतेजा मनुकुल-
प्रसूतिः सुत्राम्णो विजयसहकृत्वा दशरथः॥ २४॥

सखे वामदेव, इयमनेन पीयूषतुषारसीकरासारवर्षिणी सुजनसंवाद-कौतुकमेघलेखा पौरस्त्येनेव मरुता लोकनाथेन सहस्रशिखरीक्रियते।

---

या मुकुटचन्द्रिका शिरोलंकारज्योत्स्ना तया यद्दुर्दिनमिव दुर्दिनं तेन स्फुरन्त्यश्चरणपल्लवस्तेन प्रतिपदं पदे पदे स्थाने स्थाने उक्ता कथिता दोःसंपद्बाहुबलं यस्य तादृशेन। यद्वा प्रतिपदोक्तं व्यक्तोदितम्। यद्वा प्रतिपदोक्तं कण्ठोक्तम्। 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः। 'मेघच्छन्नेऽह्नि दुर्दिनम्' इति च। 'दोर्दोषा च भुजा भुजः' इत्यपि। 'दन्तुरस्तून्नतदन्ते तथोन्नतनतेऽपि च' इति मेदिनीकरः। इदानीमस्य शूरत्वं प्रकटयन्नाह—**चिरादिति**। अयं दशरथोऽक्ष्णोश्चक्षुषोर्जाड्यं जडतां विषयाग्राहकत्वं शमयति। उत्फुल्लनेत्रतामातनुत इत्यर्थः। समस्तदैत्यस्त्रीकचाकृष्टिः केशाकर्षणं सैव क्रीडा तया प्रसभं हठेन सुभगंभावुको मनोहरीभूतो भुजो बाहुर्यस्य। तथा त्रयाणां लोकानां समाहारस्त्रिलोकी तत्र जङ्घालमतिशीघ्रगं यदुज्ज्वलं साहजिकं तेजस्तद्यस्यास्ति सः। सुत्राम्ण इन्द्रस्य विजयसहकृत्वा विजयसहकारी। द्वितीयः। सुभगंभावुक इत्यत्र असुभगः सुभगो भवतीति 'कर्तरि भुवः खिष्णुच्खुकञौ' इति खुकञ्। 'अरुर्द्विषदजन्तस्य–' इति मुम्। जङ्घाल इत्यत्र 'प्राणिस्थादातो लजन्यतरस्याम्' इति लच्। 'जङ्घालोऽतिजवस्तुल्यौ' इत्यमरः। 'सुत्रामा गोत्रभिद्वज्री' इति च। सहकृत्वेति सह करोतीत्यर्थे 'सहे च' इति क्वनिप्। **इयमनेनेति**। इयं सुजनानां महतां यः संवादो मिथोभाषणं तत्र यत्कौतुकं तदेव मेघलेखा मेघश्रेणी। पौरस्त्येन प्राचीभवेन। यद्वा पुरःस्थितेन। मरुतेव मरुता देवेनेव लोकनाथेन दशरथेन सहस्रशिखरीक्रियते। विस्तीर्णा क्रियत इत्यर्थः। अन्यापि च मेघलेखा मरुता वायुना विस्तीर्यते। 'शिखरं शैलवृक्षाग्रविस्तारेष्वपि दृश्यते' इति विश्वः। यद्वा यद्ययमेतादृशो मित्रं तत्कथमतिचिरेणास्य दर्शनं क्रियत इति वामदेववचनमाशङ्क्य चिरदर्शने निमित्तमाह—इयमनेनेति। अनेन लोकनाथेन दशरथेन यः सुजनसंवादस्तज्जन्यं यत्कौतुकं तदेव मेघलेखा मेघश्रेणी पौरस्त्येन पूर्वदिगीशेन मरुता देवेनेन्द्रेण सह सहस्रशिखरीक्रियते। तथा च क्षणमप्येनमिन्द्रो न त्यजतीति भावः। कीदृशी। पीयूषमेव यत्तुषारं हिमं तस्य सीकरोऽम्बुकणास्तस्यासारो धारासंपातस्तद्वर्षिणी। अमृतवर्षिणीत्यर्थः। अन्यापि मेघलेखा तुषारासारवर्षिणी पौरस्त्येन मरुता पूर्ववातेन सहस्रशिखरीक्रियत इतस्ततः क्षिप्यत इति ध्वनिः। पौरस्त्येनेत्यत्र

**वामदेवः**—भगवन्, अद्य खलु दिलीपकुलकुशलकर्मकल्पलतानामङ्कुरग्रन्थिभिरुदीर्यन्ते[1] किसलयानि । यदत्रभवानपि त्रिभुवनसनातनगुरुरेवमस्मै नरेन्द्राय स्पृहयति ।

(इति परिक्रामतः ।)

**दशरथः**—(सहर्षं ससंभ्रममासनादुत्थायोपसृत्य च ।) भगवन्कुशिकनन्दन, ऐक्ष्वाकः पङ्क्तिरथोऽभिवादयते ।

**विश्वामित्रः**—स्वस्ति भवते सपरिवाराय ।

(इति सर्वे यथोचितमुपविशन्ति ।)

---

'दक्षिणापश्चात्पुरसस्त्यक्' । 'सीकरोऽम्बुकणाः स्मृताः' इत्यमरः । 'मरुतौ पवनामरौ' इति च । 'धारासंपात आसारः' इत्यपि । कुशलकर्माण्येव कल्पलता इति रूपकम् । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः । उदीर्यन्ते प्रकाश्यन्ते । सनातनो नित्यः । नरेन्द्रायेत्यत्र 'स्पृहेरीप्सितः' इति संप्रदानता । इक्ष्वाकुर्मनुवंशजो राजा । 'तस्यापत्यम्' इत्यण् । 'दाण्डिनायन–' इत्यादिना टिलोपः । भगवन्निति । 'आर्येति नृपतिर्विप्रं तथायुष्मन्निति द्विजः । भगवन्नाह राजा तं राजन्निति तपोधनः ॥' इति भरतः । पङ्क्तिरथ इति पङ्क्तिशब्दो दशसंख्यावाचको लक्षणया दशरथे वर्तते । 'गुरोर्नाम न गृह्णीयादात्मनः कृपणस्य च' इति निषेधाद्दशरथ इति साक्षान्नोक्तम् । 'पङ्क्तिर्दशाक्षरच्छन्दोदशसंख्यालिपु स्त्रियाम्' इति मेदिनीकरः । स्वस्ति कुशलम् । 'स्वस्त्याशीःक्षेमपुण्यादौ' इति विश्वः । भवते इत्यत्र 'नमःस्वस्ति–' इत्यादिना चतुर्थी । 'परिवारः परिजने खड्गकोषेऽपि जङ्गमे' इति विश्वः । सपरिवारायेति सह परिवारेण वर्तत इति । 'तेन सहेति तुल्ययोगे' इति समासः । 'वोपसर्जनस्य' इति सहस्य सः । ननु 'प्रकृत्याशिषि', 'अगोवत्सहलेषु' इत्याशीर्विवक्षायां प्रकृतिभावप्राप्त्या सहभाव एव भवेत्, न तु सभाव इति । अत्र केचित् । इहाशीर्विवक्षाया अभावात्स्वस्तीत्यादिना प्रश्नस्यैव करणात् । अन्ये त्वाशीर्विवक्षैवात्र, न तु प्रश्नः, तेन 'सहपरिवाराय' इत्येव पाठः । अनयोरुत्तरः पक्षः साधीयानिव । दशरथाभिवादनानन्तरं विश्वामित्रस्याशीर्दानस्यैवोचितत्वात् । अत एव 'कच्चित्कान्तारभाजाम्' इत्यादिना प्रश्रयपूर्वकं दशरथप्रश्नोऽपि संगच्छत इति । अन्यथा प्रश्नानन्तरमुत्तरदानस्यैवोचितत्वादिति विश्वामित्रस्यागमननिमित्तं विकल्पयन्नाह—**कच्चिदिति** । कच्चित्कथय कान्तारभाजां महारण्यवासिनां कोऽपि शौवापदः श्वापदकृतः परिभवोऽभिभवो भवति यस्माद्धेतोः संप्राप्तोऽसीति सर्वत्र प्रश्ने योज्यम् । यद्वा कान्तारभाजां दुर्गवर्त्मसेविनाम् । दस्यूनामिति यावत् । परिभवोऽभि-

---

१. 'उद्गीर्यन्ते' इति पाठान्तरम्.

**दशरथः**—(संप्रश्रयम्[1] ।) भगवन्विश्वामित्र,

कच्चित्कान्तारभाजां भवति परिभवः कोऽपि शौवापदो वा
प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जन्ते वा हवींषि ।
कर्तुं वा कच्चिदन्तर्वसति वसुमतीदक्षिणः सप्ततन्तु-
र्यत्संप्राप्तोऽसि किं वा रघुकुलतपसामीदृशोऽयं विवर्तः ॥ २५ ॥

**विश्वामित्रः**—(विहस्य ।)

जनयति त्वयि वीर दिशां पतीनपि गृहाङ्गनमात्रकुटुम्बिनः ।
रिपुरिति श्रुतिरेव न वास्तवी प्रतिभयोन्नतिरस्तु कुतस्तु नः ॥ २६ ॥

---

भवः कोऽप्यनिर्वचनीयोऽस्ति । शौवापदो वाभिभवोऽस्ति । अथवा क्रतूनां यज्ञानां प्रत्यूहेन विघ्नेन मखभुजो देवा हवींषि हवनीयद्रव्यं घृतादि न खलु भुञ्जते न वा भक्षयन्ति खलु । जिज्ञासामाह—अयं नखलुशब्दो वितर्के वा । वसुमती पृथ्वी दक्षिणा यस्य तादृशः सप्ततन्तुर्यज्ञो वान्तर्मनसि वर्तते । किमर्थमित्यपेक्षायामाह—कर्तुमिति । अत्र कर्तुमित्यस्यापेक्षया यज्ञस्य यद्यपि कर्मत्वं तथा चानभिहिते कर्मणि द्वितीयायां सप्ततन्तुमिति युज्यते । तथापि वसतीति प्रधानक्रियया प्रथमसंबन्धात्तदपेक्षया यज्ञस्य कर्तृत्वेऽभिहिते कर्तरि प्रथमैव भवति । प्रधानक्रियान्वयस्याभ्यर्हितत्वादित्यवधेयम् । तथा चाचार्यकारिकाप्यत्र—'यदेवोक्तं विशेष्येण तिङा वा यदि वा कृता । विशेषणक्रियानुक्तमप्युक्तं तद्भवेदिति ॥' आनीय गुरुः पूज्यते, आमन्त्र्य ब्राह्मणो भोज्यत इत्यस्योदाहरणम् । पृथ्वी दक्षिणं यज्ञं वा कर्तुं मनो वलत इति तात्पर्यम् । किं वा न परिभवः, न वा क्रतुप्रत्यूहः, न वा यज्ञारम्भः, किं च रघुवंशतपसामीदृशः परिणामो यत्त्वमस्मद्गृहमागतोऽसीति भावः । शुन इव पदमस्येति श्वापदो व्याघ्रः । 'अन्येषामपि दृश्यते' इति दीर्घः । 'तस्येदम्' इत्यणि 'द्वारादीनां च' इत्यैचि शौवापदमिति रूपम् । 'शौवापदो वः' इति पाठे वो युष्माकं कान्तारभाजामित्यन्वयः । 'कान्तारोऽस्त्री महारण्ये विले दुर्गमवर्त्मनि' इति मेदिनीकरः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । 'सप्तन्ततुर्मखः क्रतुः' इति च । 'विवर्तः परिणामे स्यात्' इति मेदिनीकरः । रामभद्रप्राप्तिरूपस्वकार्यसिद्ध्यर्थं दशरथं स्तोतुमुपक्रमते—**जनयतीति** । इह 'जनीजॄष्' इति मित्संज्ञा । 'मितां ह्रस्वः' इति ह्रस्वः । हे वीर, दिशां पतीनपि दिक्पालानपि । यद्वा दिशां नराणां पतीन्नृपतीन् । 'वैश्यप्रेष्यनरा दिशः' इति धरणिः । गृहाङ्गनमात्रकुटुम्बिनो गृहाङ्गनमात्रावस्थायिनः । त्वद्भयात्त्वदीयाङ्गनावस्थितत्वात् । त्वयि जनयति सति रिपुः शत्रुरिति वास्तवी वस्तुसिद्धा श्रुतिरेव न श्रवणमेव न । तुशब्दः पुनरर्थे । नोऽस्माकं प्रतिभयं शत्रुप्रभृतित्रासस्तदुन्न-

---

[1] 'सप्रणयम्' इति पाठान्तरम्.

अपि च ।

दत्तेन्द्राभयविभ्रमाद्भुतभुजासंभारगम्भीरया
त्वद्वृत्त्या शिथिलीकृतस्त्रिभुवनत्राणाय नारायणः ।
अन्तस्तोषतुषारसौरभमयश्वासानिलापूरण-
प्राणोत्तुङ्गभुजंगतल्पमधुना भद्रेण निद्रायते ॥ २७ ॥

---

तिस्तदुत्थानं कुतोऽस्तु । अपि तु न कुतोऽपीति भावः । मात्रपदेन तेषामकिंचित्करत्वं सूचितम् । अत्राङ्गनशब्दो णकारान्त इति केचित्पठन्ति, तदप्रामाणिकम् । न च पृषोदरादिपाठेन णत्वमिति वाच्यम् । पृषोदरादिपाठे प्रमाणाभावात् । तथाविधानुप्रासयमकादेरदर्शनात् । प्रत्युत 'तवर्गपञ्चमोपान्तमङ्गनं केवलं विदुः' इति शब्दभेददर्शनात् । 'अङ्गनं प्राङ्गणे याने कामिन्यामङ्गना मता' इति मेदिनीकरादिकोषे नान्तवर्गे तस्य पाठाच्चेत्यवधेयम् । 'भयंकरं प्रतिभयम्' इत्यमरः । 'प्रतिश्रयः सभायां वाश्रये प्रतिभयं भये' इति विश्वः । पुनः स्तुतिमाह—**दत्तेत्यादि** । न भयमभयम्, विभ्रमो विलासः, अद्भुतमाश्चर्यम्, विभ्रमस्याद्भुतं विभ्रमाद्भुतम्, अभयं च विभ्रमाद्भुतं चेत्यभयविभ्रमाद्भुते । इन्द्रेण सह षष्ठीसमासः । दत्ते इन्द्राभयविभ्रमाद्भुते यया भुजया तादृशी च भुजा चेति कर्मधारये 'स्त्रियाः—' इत्यादिना पुंवद्भावः । तस्याः संभारो धारणं पूर्णत्वं वा तेन गम्भीरयानाकलितस्वरूपया त्वद्वृत्त्या त्वदीयशौर्यादिव्यापारेण नारायणस्त्रिभुवनरक्षार्थं शिथिलीकृतः सन् । उक्तं च—'सजलजो रक्षति शार्ङ्गपाणिः' इति । अन्तस्तोषेणाभ्यन्तरहर्षेण यस्तुषारसौरभमयः शीतलः सुगन्धिश्च तथाविधः श्वासानिलश्चेति समासः । तेनापूरणं पूर्तिर्यस्य प्राणस्य वातविशेषस्य तेनोत्तुङ्ग उच्छ्रितो यो भुजंगः सर्पः स एव तल्पं शयनीयं यथा स्यादेवम् । अधुना संप्रति भद्रेण सुखेन । रक्षाव्याकुलतारहितत्वात् । निद्रायते । निद्रां करोतीत्यर्थः । अयमभिप्रायः—शेषे शेते भगवान्, सर्पस्य च वायुर्भक्ष्यः, तथा च श्वासानिलभक्षणात्तस्य स्वास्थ्य उपजायमाने देहस्य समत्वं जातम्, तेन भगवतः सुखेन निद्रा भवतीति । एतेनेन्द्रादीनामभयदातृत्वेनास्मदादीनामभयप्रदातृत्वं भवतामीषत्करमिति भावः । 'तुषारः शीतलः शीतः' इत्यमरः । 'दोर्दोषा च भुजा भुजः' इत्यपि । 'तल्पं तु शयनीये स्यात्' इति धरणिः । निद्रायत इति 'कर्तुः क्यङ्' इति क्यङ् । **सवैलक्ष्यमिति** । वैलक्ष्यं संकोचः । त्रिभुवनशिरोलंकारभूतोऽपि मामयं विश्वामित्रः केशवेन्द्राभ्यामर्हणीयाभ्यामुत्कर्षयतीत्यत्राश्रवणश्र-

---

१. 'इहाङ्गणपदेऽनुविधायकाभावाण्णत्वश्रुतिरयुक्ता' पृषोदरादित्वाण्णत्वमित्यपि वचोऽमूलकमेव, प्रत्युत 'अङ्गनं प्राङ्गणे जाले कामिन्यामङ्गना मता' इति विश्वादिकोषात् 'तवर्गपञ्चमोपान्तमङ्गनं केवलम्' इति शब्दप्रकाशाच्च नान्तत्वमेवेत्यवधेयमिति मालतीमाधवटीकायां प्रथमाङ्के जगद्धरः.

**दशरथः**—(सवैलक्षस्मितम् ।) भगवन्विश्वमित्र, अभ्यमित्रीणस्य तत्र-भवतः सुनासीरस्य नासीरपूरकेण पदातिपरमाणुना मयापि कदाचिदुद्धृतं धनुर्यन्मूलोऽयमलीकलोकप्रवादो भवन्तमप्याप्याययति ।

**विश्वामित्रः**—(सोत्साहस्मितम् ।) सखे[2]

त्रैलोक्याभयलग्नकेन भवता वीरेण विसारित-
स्तज्जीमूतमुहूर्तमण्डनधनुःपाण्डित्यमाखण्डलः ।
किं चाजस्रमखार्पितेन हविषा संफुल्लमांसोल्लस-
त्सर्वाङ्गीणवलीविलुप्तनयनव्यूहः कथं वर्तते ॥ २८ ॥

---

वणयोरप्यनौचित्यमित्युभयतःपाशा रज्जुरिति भावः । अत्र तावत्प्रथमपाशमपासयितुं स्मितमिति । 'सोत्प्रासः स मनाक्स्मितम्' इत्यमरः । 'अलक्ष्यदशनद्वारं स्मितमिच्छन्ति सूरयः' इति भरतः । द्वितीयपाशमपासयन्नाह—**अभ्यमित्रीणस्येत्यादि** । अभ्यमित्रीणस्य शत्रोरभिमुखं गच्छतः । 'अभ्यमित्राच्छ च' इति चकारात्खः । 'यो गच्छत्यलं विद्विषतः प्रति । सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीणः ॥' इत्यमरः । सुनासीरस्येन्द्रस्य । 'सुनासीरः पुरुहूतः पुरंदरः' इत्यमरः । 'नासीरोऽग्रगन्तरि' इति विश्वः । पदातिषु मध्ये परमाणुरतिलघुः।'अलीकं त्वप्रियेऽनृते' इत्यमरः। प्रवादोऽत्र प्रकृष्टवचनम्। आप्याययति तृप्तं करोति । 'आप्यायी वृद्धौ' । णिचि कृते रूपम् । अयमेतादृशोऽप्यत्यन्तं शतमखपक्षपाती, तस्मादवश्यमध्वररक्षक इत्यभिप्रायादाह—**सोत्साहमिति** । तत्फलितमस्मदायासेनेति भावः । स्वोद्देश्यसिद्धये वारंवारं स्तुतिपूर्वकमुत्तरलयति—**त्रैलोक्येति** । भवता वीरेणेति सहेतुकं विशेषणम् । आखण्डल इन्द्रः । जीमूते मेघे मुहूर्तमल्पकालं मण्डनमाभरणं यद्धनुस्तस्य पाण्डित्यं कौशलं विसारितस्त्याजितः । त्रैलोक्यस्याभयलग्नकेनाभयप्रतिभुवा । किं च स इन्द्रः कथं वर्तते । कष्टसृष्ट्या तिष्ठति । तदभावे हेतुमाह—अजस्रेत्यादि । अनवरतमखार्पितेन यज्ञदत्तेन हविषा घृतादिना संफुल्लं प्रवृद्धं यन्मांसम् । देवानां हविर्भुक्त्वात् । तेनोल्लसन्त्युद्गच्छन्ती या सर्वाङ्गीणा सर्वाङ्गव्यापिनी वली त्रिवली तया विलुप्त आच्छादितो नयनव्यूहो लोचनसमूहो यस्य स तथा । सर्वाङ्गीणेति तद्व्याप्नोतीत्यर्थे 'तत्सर्वादेः' इति खः । 'घनजीमूतमुदिर—' इत्यमरः । 'आखण्डलः सहस्राक्षः' इति च । 'व्यूहस्तर्कसमूहयोः' इति विश्वः । वामदेवो विश्वामित्रवाक्यं द्रढयितुं दशरथं प्रोत्साहयति—**यथाहेत्यादि** । भूकश्यप इति दशरथस्य नामान्तरम् । अनेकधेत्यत्र 'संख्याया विधार्थे धा' इति धा । सुधर्मायां देवस-

---

१. 'सोत्प्रासस्मितम्' इसि पाठान्तरम्. २. 'सखे' इत्यस्मादग्रे 'दशरथ' इत्यधिकं क्वचित्.

**वामदेवः**—महाराज भूकश्यप, यथाह भगवान्कौशिकः । स्वयमनेकधा सुधर्मायामध्यक्षीकृतमहमपि ब्रवीमि ।

त्वय्यर्धासनभाजि किंनरगणोद्गीतैर्भवद्विक्रमै-
रन्तःसंभृतमत्सरोऽपि भगवानाकारगुप्तौ कृती ।
उन्मीलद्भवदीयदक्षिणभुजारोमाञ्चविद्धोच्चर-
द्बाष्पैरेव विलोचनैरभिनयत्यानन्दमाखण्डलः ॥ २९ ॥

**दशरथः**—(सस्मितम् ।) वामदेव, त्वमपि भगवन्तं गाधिनन्दनमनुप्रविष्टोऽसि ।

एतस्मै समराङ्गणप्रणयिने तिष्ठेत कः प्रज्वल-
द्दम्भोलिद्युतिमण्डलोद्भटभुजस्तम्भाय जम्भारये ।
निर्यद्भिर्बहिरेष रोषदहनज्योतिःस्फुलिङ्गैरिव
स्वै रज्यद्भिरपीक्षणैः समतनोदाग्नेयमस्त्रं द्विषाम् ॥ ३० ॥

---

भायाम् । 'स्यात्सुधर्मा देवसभा' इत्यमरः । अध्यक्षं प्रत्यक्षम् । **त्वयीति** । त्वय्यर्धासनभाज्यर्धासन उपविष्टे सति, आखण्डल इन्द्रो विलोचनैरेवानन्दं हर्षमभिनयति प्रकाशयति । कीदृशः । किंनरगणैरुद्गीतैरुच्चैर्गीतैर्भवत्पराक्रमैरन्तरभ्यन्तरे संभृत उद्भिन्नो मत्सरो मात्सर्यं पराभ्युदयासहिष्णुता यस्य सः । स्वपराक्रमातिरिक्तत्वत्पराक्रमश्रवणात् । आकारगुप्तौ बाह्यविकारगोपनक्रियायां कृती कुशलः । दशरथो मत्क्रोधं मा जानात्वित्याशयात् । लोचनैः कीदृशैः । उन्मीलद्यो भवदीयदक्षिणभुजारोमाञ्चः । स्वपराक्रमश्रवणात् । तेन रोमाञ्चेन विद्धा वेधिता अत एवोच्चरन्त उद्गच्छन्तो बाष्पा येषु तैः । अश्रुणः पूर्वावस्था बाष्पः । 'मत्सरो मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान्' इति मेदिनीकरः । 'विद्धं स्याद्वेधिते क्षिप्ते' इति च । अनुप्रविष्टो मिलितः । **एतस्मा इति** । एतस्मै जम्भारय इन्द्राय कस्तिष्ठेत क आत्मानं प्रकाशयेत् । अपि तु न कोऽपि । 'प्रकाशनस्थेयाख्ययोश्च' इति तङ् । 'श्लाघह्नुङ्—' इति संप्रदानता । समराङ्गणप्रणयिने सङ्ग्रामाङ्गणसाधवे । प्रज्वलन्यो दम्भोलिर्वज्रं तस्य द्युतिमण्डलेन तेजःसमूहेनोद्भटः ख्यातो भुजस्तम्भो यस्य तस्मै । सङ्ग्रामाङ्गणे शत्रोनरवस्थाने हेतुमाह—निर्यद्भिरिति । एष इन्द्रो द्विषां शत्रूणामाग्नेयमस्त्रं समतनोद्विस्तारितवान् । कैः । स्वै रज्यद्भिरपि स्वयं रक्तीभवद्भिरपि लोचनैः । 'कुषिरजोः प्राचां श्यन्

---

१. 'वामदेवः' इत्यस्मादग्रे 'विहस्य' इत्यधिकं क्वचित्. २. 'यदाह' इति पाठान्तरम्. ३. 'बन्धोच्चरत्' इति पाठान्तरम्. ४. 'सखे वामदेव' इति क्वचित्.

**विश्वामित्रः**—(सगौरवं दशरथबाहुमामृशन्[1]।) राजर्षे वसिष्ठशिष्य,

संवृत्तोऽयं यदि तव भुजच्छायया संप्रतीन्द्रो
निर्विघ्नश्रीरियमभिनवा कीदृशी ते प्रशस्तिः।
इक्ष्वाकूणां लिखितपठिता स्वर्वधूगण्डपीठ-
क्रीडापत्रप्रकरमकरीपाशुपाल्यं हि वृत्तिः॥ ३१॥

**दशरथः**—भगवन्सर्वाद्भुतनिधे, भगवन्तमनुगन्तुमुक्तिप्रत्युक्तिकया के वयम्। एवं किल त्रिशङ्कुसंकीर्तनोपख्यानपारदृश्वानः पौराणिकाः कथयन्ति।

त्रासोत्कम्पत्रिदशपरिषन्मौलिमाणिक्यमाला-
बालादित्यप्रकरकिरणस्मेरपादारविन्दे।
प्राचीमेतां भुवनरचनामन्यथा निर्मिमाणे
कार्पण्योक्तीस्त्वयि रचितवानन्तरायं महेन्द्रः॥ ३२॥

---

परस्मैपदं च'। कीदृशैः। बहिर्निर्यद्भिर्बहिर्निर्गच्छद्भिः। रोषदहनस्येति रूपकम्। ज्योतिः-स्फुलिङ्गैः। ज्योतिर्युक्ताग्निकणैरिवेत्यर्थः। 'त्रिषु स्फुलिङ्गोऽग्निकणः' इत्यमरः। 'दम्भोलिरशनिर्द्वयोः' इति च। अग्नेरिदमाग्नेयम्। 'सर्वत्राग्निकलिभ्यां ढक्'। आमृशन्स्पृशन्। विश्वामित्रो राजर्षित्वं द्रढयितुं वसिष्ठशिष्येति संबोधनमाह—**संवृत्तोऽयमिति**। तव भुजच्छायया भुजाश्रयेण भुजलक्ष्म्या वा निर्विघ्नश्रीः संप्रतीदानीं यद्ययमिन्द्रः संवृत्तः संपन्नस्तदेयं तव कीदृशी नूतनाभिनवा प्रशस्तिः स्तुतिः। अपि तु न कापि। प्रशस्तेरप्राशस्त्ये बीजमाह—हि यत इक्ष्वाकूणां रघूणां स्वर्वधूनां देवस्त्रीणां यो गण्डपीठेषु क्रीडापत्रप्रकरः पत्रावलीसमूहस्तत्र मकरी जलजन्तुविशेषस्त्री तस्याः पाशुपाल्यं रक्षा सैव वृत्तिः स्थितिः। लिखिता पठिता चेति समासः। लोकोक्तिरियम्। देवकृत्यमपि भवानेव करोतीति भावः। सर्वाद्भुतनिधे इति वक्ष्यमाणाद्भुतकारित्वात्संबोधनम्। उक्तिप्रत्युक्तिकया भाषोत्तरेण के वयम्। अपि तु न केऽपि। अशक्ता इत्यर्थः। किल आगमे। संकीर्तनमित्यधिकरणे ल्युट्। उपाख्यानमितिहासः। दृश्वान इत्यत्र 'दृशेश्च' इति क्वनिप्। पौराणिका इति पुराणं जानन्ति। 'आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग्वक्तव्यः'। सांप्रतं विश्वामित्रं स्तोतुमुपक्रमते—**त्रासोत्कम्पेति**। त्रिदशपरिषद्देवसभा। माणिक्यं रत्नभेदः। तस्य लोहितत्वाद्बालसूर्येण रूपणम्। स्मेरं विकासि। एतां प्राचीं पुरातनीं निर्मिमाणे कुर्वाणे। 'माङ् माने' शानच्। द्विर्वचनमित्वम्। कार्पण्योक्तीर्दैन्यव-

१. 'दशरथस्य बाहुं स्पृशन्'; 'दशरथबाहुमास्पृशन्' इति पाठान्तरम्.

(विहस्य ।)

जवादाराद्धुं त्वामुपनमति वर्गे दिविषदा-
मपव्यस्तो[1] मन्दैरजनि रथहंसैः कमलभूः ।
नियच्छामो जिह्वां न तव चरितेभ्यः किमुत ते
सुधासध्रीचीनामतिपतति[2] वाचामवसरः ॥ ३२ ॥

(अञ्जलिं बद्ध्वा ।) भगवन्, प्रसीद[3] तावत् । उत्तरोत्तरेषां महोत्सवानां कदाचिदपि न तृप्यन्ति पुंसां हृदयानि, यदियं त्वदुपस्थानसुलभसंभावनातिप्रसङ्गसंगीतनर्तकी मे चित्तवृत्तिर्नियोगानुग्रहाय[4] स्पृहयति । अपि च ।

---

चनानि । अन्तरायं विघ्नम् । 'पुरा विश्वामित्रेणान्या सृष्टिः कर्तुमारब्धा । अनन्तरमिन्द्रादीनां दैन्योक्त्या पादपातेन च समुपशमिता' इति पुराणम् । ब्रह्मणोऽपव्यस्ततामुत्प्रेक्ष्याह—**विहस्य जवादिति** । जवाद्वेगाद्दिविषदां देवानां वर्गे त्वामाराद्धुमुपनमत्युपनते सति कमलभूर्ब्रह्मा मन्दैर्मन्थरगमनै रथहंसै रथबद्धहंसैरपव्यस्तोऽजनि विसंस्थुलो जातः । सत्वरकार्ये मन्दगमनादपव्यस्तता । तव चरितेभ्यो जिह्वां न नियच्छामो न निवारयामः । वयं ब्रूम एव तव चरितानीत्यर्थः । किं तु सुधासध्रीचीनाममृतसहचरीणां तव वाचामवसरः प्रस्तावोऽतिपतत्यतिक्रामति । त्वदागमनप्रयोजनं ज्ञातुमिच्छामि तदादेशयेति भावः । अत्र चरितेभ्य इति पञ्चमी । 'प्रस्तावेऽवसरो वर्षे' इति विश्वः । 'व्यस्तो विसंस्थुले ख्याते' इति धरणिः । यद्वा चरितेभ्य इति चतुर्थी । तव चरितेभ्यो जिह्वां न नियच्छामो वयं न दद्मो दातुमसमर्थाः किमुत किं च सुधासध्रीचीनां तव वाचामवसरोऽतिक्रामति । दाणो यच्छादेशः । सध्रीचीनामिति अञ्चतेः सहशब्दोपपदात् 'ऋत्विक्–' आदिसूत्रेण क्विन् । 'सहस्य सध्रिः' । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् । 'अचः' इत्यकारलोपः । 'चौ' इति दीर्घः । उत्तरोत्तरेषामग्रिमाग्रिमाणाम् । महोत्सवानामिति करणे षष्ठी । अत्र यद्यपि षष्ठीविधायकं प्रमाणं नास्ति, तथापि 'पूरण–' इत्यादिसूत्रेण षष्ठीसमासनिषेधात्करणे षष्ठ्यनुमीयते । यथा—'नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः' इति । उपस्थानं पूजास्तवादिकम् । यद्वोपस्थानमुपस्थितिः । संभावना गौरवम्, तस्या अतिप्रसङ्गोऽतिशयः स एव संगीतं तत्र नर्तकी । नियोग आज्ञा तद्रूपोऽनुग्रहस्तस्मै स्पृहयति । 'स्पृहेरीप्सितः' इति संप्रदानता । एता-

---

१. 'अपध्वस्तः' इति पाठान्तरम्. २. 'अभिपतति' इति पाठान्तरम्. ३. प्रसीदतामुत्तरोत्तरेषाम्' इति पाठान्तरम्. ४. 'नियोगानुयोगाय' इति पाठान्तरम्.

एताभिस्तव कौतुकोक्तिभिरपि त्रैविद्यमूर्तैरिव
त्वष्टस्यामरशिल्पिना दिनकृतोऽवच्छेदवेदाक्षरैः ।
पूताः स्मो वयमद्य यद्यपि [1]तदप्याज्ञामपि स्यामहो
वोढुं विष्टिरनर्घता रघुकुले कल्पान्तमुन्मीलतु ॥ ३४ ॥

**विश्वामित्रः**—(विहस्य ।) ऐन्दुमतेय, किमन्यन्नियोज्यम् ।

निर्मुक्तशेषधवलैरचलेन्द्रमन्थ-
संक्षुब्धदुग्धमयसागरगर्भगौरैः ।
राजन्निदं बहुलपक्षदलन्मृगाङ्क-
च्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ ३५ ॥

---

**भिरिति** । एताभिस्तव कौतुकोक्तिभिरपि परिहासवचनैरपि यद्यपि वयं पूताः पवित्राः स्मः, तदपि तथापि तवाज्ञां वोढुमुद्वोढुं विष्टिः कर्मकरः स्यां भविष्यामि । कैरिव । त्रिविद्यैव त्रैविद्यम् । स्वार्थे ष्यञ् । मूर्तिः शरीरम् । त्रैविद्यमूर्तेस्त्रिवेदीशरीरस्य दिनकृतः सूर्यस्यावच्छेदाः खण्डानि तान्येव वेदास्तेषामक्षरैरिव । तथा च वेदतुल्योक्तिसंबन्धात्पावित्र्यं युज्यत एव । अमरशिल्पना विश्वकर्मणा त्वष्टस्य । कुन्दे तनूकृतस्येत्यर्थः । 'तक्षू त्वक्षू तनूकरणे' । कर्मणि क्तः । पुरा विश्वकर्मणा सूर्यः कुन्दे निधाय सुन्दरीकृतः—इति पुराणवार्ता । नियोगकरणे फलमाह—रघुकुलेऽनर्घतामूल्यता । अतिपूज्यता वा । कल्पान्तं कल्पपर्यन्तमुन्मीलतु प्रकाशताम् । तवाज्ञाकरणादिति भावः । 'विष्टिः कर्मकरे त्रिषु' इति मेदिनीकरः । कल्पान्तमिति 'कालाध्वनोः–' इति द्वितीया । ऐन्दुमतेय इन्दुमतीपुत्रः । 'स्त्रीभ्यो ढक्' । नियोज्यं वक्तव्यम् । **निर्मुक्तेति** । हे राजन्, तव यशोभिर्विश्वमशोभि । दीप्तमित्यर्थः । कीदृशैः । बहुलः कृष्णपक्षोऽर्धमासः । बहुलपक्षे कृष्णपक्षे यो दलंस्त्रुटन्मृगाङ्कश्चन्द्रस्तस्य यश्छेदः खण्डं तद्वदुज्ज्वलैः । निर्मुक्तो मुक्तकञ्चुको यः शेषनामा सर्पस्तद्वद्धवलैः । अचलेन्द्रो मन्दरसंज्ञकोऽद्रिः स एव मन्थो मन्थनदण्डस्तेन संक्षुब्धो मथितो यो दुग्धमयः सागरः क्षीरसमुद्रस्तस्य गर्भोऽभ्यन्तरं तद्वद्गौरैः श्वेतैः । संक्षुब्धेत्यत्र 'क्षुब्धस्वान्तध्वान्त–'इत्यादिना मन्थे क्षुब्धनिपातनादपशब्दता नाशङ्क्या । क्षुब्ध इत्येतत्परो निपातः । न तु संक्षुब्ध इत्यत्रापि । सोपसर्गेऽनियमात् । यद्वा मन्थे भाव्ये क्षुब्ध इत्येव भवति, क्षोभे तु क्षुभितं क्षुब्धमिति द्वयमपि भवतीति निपातार्थः । यद्वा क्षुभ्यतेऽनेनेति क्षुप् । सम्यक्प्रकारेण क्षुपं दधातीति संक्षुब्ध इति । 'निर्मुक्तो मुक्तकञ्चुकः' इत्यमरः । 'गौरः पीतेऽरुणे श्वेते' इति मेदिनीकरः । 'बहुला नीलिकायां स्यादेलायां गवि योषिति । कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकम् ॥ पुंस्यग्नौ कृष्णपक्षे च वा-

---

1. 'तथाप्याज्ञामपि स्यामहम्' इति पाठान्तरम्.

पुनरिदानीमपि

यशःस्तोमानुच्चैरुपचिनु चकोरप्रणयिनी-
　रसज्ञापाण्डित्यच्छिदुरशशिधामभ्रमभरान्[1] ।
अपि त्वत्तेजोभिस्तमसि शमिते रक्षतु दिशा-
　मसौ यात्रामैत्रीं नभसि नितरामम्बरमणिः ॥ ३६ ॥

किं तु कतिपयरात्रमायुधसध्रीचा[2] रामभद्रेण संनिहितवैतानव्रतानाम-स्माकमाश्रमपदं सनाथीकरिष्यते । अपि च ।

---

च्यवत्प्राज्यकृष्णयोः' इति मेदिनीकरः । रामभद्रप्रदानेन किमस्माकं प्रयोजनं स्यादिति दशरथस्याग्रिमशङ्कामाशङ्क्य तन्निरासाय प्रदानफलमाह—**पुनरिदानीमपीत्यादि** । इदानीमप्युच्चैरत्यर्थं यशःस्तोमान्यशःसमूहानुपचिनूपचयं नय । रामभद्रप्रदानेनेति भावः । किंभूतान् । चकोरस्य प्रणयिनी प्रिया चकोरी तस्या रसज्ञा जिह्वा तस्या यत्पाण्डित्यं प्रावीण्यं तस्य छिदुरं भेदकर्तृ यच्छशिधाम चन्द्रतेजस्तस्य भ्रमोऽतद्वति तत्प्रकारकं ज्ञानं तस्य भरः प्राचुर्यं येषु तान् । उपचिन्विति 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुक् । अयमर्थः—दर्शनेन तावन्न ज्ञातम्, रसनेनापि चकोरीभिर्न ज्ञातम्, स्त्रीत्वात्तासां मौग्ध्यं यतः । छिदुरमित्यत्र 'विदिभिदिच्छिदेः कुरच्' इति कुरच् । वृत्तिकारस्तु 'कर्मकर्तर्येव कुरच्' इत्याह । अत ईदृशी योजना विधेया—चकोरप्रणयिनीरसज्ञापाण्डित्येन छिदुरः स्वतश्छेदनशीलः शशिधामभिः सह भ्रमभरो येषां तान् । ताभिस्तावद्रसज्ञापाण्डित्येन ज्ञातमसौ शशिकरः । दर्शनेन ज्ञायते किमिदं यशः शशितेजो वेति । एतेन यशसामतिशयो नैर्मल्यं च दर्शितम् । 'अतिशयो भरः' इत्यमरः । इदानीं यशस उत्कर्षमुक्त्वा प्रतापोत्कर्षमाह—अपीति । त्वत्तेजोभिस्त्वत्किरणैः प्रभावैर्वा तमस्यन्धकारे शोके वा शमिते शान्तिं नीते सत्यसावम्बरमणिः सूर्यो दिशां यात्रामैत्रीं गमनेन मैत्रीं मित्रत्वं यदि न रक्षति नितरां रक्षतु तथापि न कापि हानिः । यस्यां दिशि रविरुदेति सा प्राचीत्यादि व्यवहारमात्रे तदन्वयात् । दिशां तमोनाशस्य त्वत्प्रतापैरेव कृतत्वादिति भावः । 'छिदुरं छेदनद्रव्ये' इति मेदिनीकरः । 'स्तोमौघनिकरव्रात–' इत्यमरः । 'रसज्ञा रसना जिह्वा' इति च । 'तेजः प्रभावे किरणे' इति विश्वः । 'तमो ध्वान्ते च शोकेऽपि' इति च । 'द्युमणिस्तरणिर्मित्रः' इत्यमरः । अधुना प्रयोजनमुद्घाटयति—**किं त्विति** । कतिपयरात्रमिति कतिपयशब्दरात्रयोर्विशेषणसमासं कृत्वा 'अहःसर्वैकदेश–' इत्यादिनाच् समासान्तात् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । 'पोटायुवति–' इत्यनेन तु समासे दारकतिपयवत्परनिपातः स्यात् । आयुधसध्रीचायुधद्वितीयेन । वितानो यज्ञस्तस्येदं वैतानं व्रतम् । 'वितानो यज्ञ उल्लोचे' इति मेदिनीकरः । संनिहितयज्ञकर्मणामित्यर्थः । सनाथीक-

---

१. 'भ्रमकरान्' इति पाठान्तरम्. २. 'कतिपयमहोरात्रम्' इति पाठान्तरम्.

मध्येकृत्य घनं धिनोति जलधिः स्वैरम्बुभिर्मेदिनीं
हन्ति स्वैः किरणैस्तमिस्रमरुणं कृत्वान्तराले रविः ।
त्वं रामान्तरितश्च पालय निजैरेव प्रतापैः प्रजा-
मीदृक्कोऽपि परोपकारसुहृदामेष स्वभावो हि वः ॥ ३७ ॥

किं च ।

दृष्टः साक्षादसुरविजयी नाकिनां चक्रवर्ती
मात्स्यो न्यायः कथयति यथा वारुणी दण्डनीतिः ।
पातालेन्द्रादहिभयमथास्त्येव नित्यानुषक्तं
तन्नः पुण्यैरजनि भवता वीर राजन्वती भूः ॥ ३८ ॥

---

रिष्यते सरक्षकं विधास्यते। अभूततद्भावे च्विः। कर्मणि लृट्। ननु रामेण तवाश्रमपदमलंकृतं तेनास्माकं किमायातम्, यतः सर्वः स्वार्थं समीहत इत्याशङ्कानिरासायाह—**अपि चेति** । तथापि करणफलस्य कर्तरि क्व पर्यवसानमित्यत आह—**मध्येकृतेति** । केचित्तु यद्येवं भवतां महत्प्रयोजनं तदा यज्ञरक्षार्थं मयैव गन्तव्यम्, किं फलं रामभद्रगमनेनेति दशरथवचनमाशङ्क्य मध्येकृत्येत्याद्युत्थापयन्ति । जलधिः समुद्रो घनं मेघं मध्येकृत्यान्तरामकृत्वाम्बुभिः पानीयैर्मेदिनीं पृथिवीं धिनोति प्रीणाति । मेघाः खलु समुद्राज्जलमादाय वर्षन्ति, तन्मेघद्वारा समुद्रः पृथिवीं प्रीणातीति भावः । रविः सूर्योऽरुणं स्वसारथिमन्तराले मध्ये कृत्वा किरणैस्तमिस्रमन्धकारं हन्ति नाशयति । त्वमपि रामान्तरितो रामोऽन्तरितो मध्यीभूतो यस्य स तादृशः सन्, राममन्तराले कृत्वा निजैः स्वकीयैः प्रतापैः प्रजां पालय रक्ष । प्रकृतप्रयोजकं रूपमाह—यतः परोपकारसुहृदां वो युष्माकं जलध्यादित्रयाणामीदृगीदृशः कोऽप्यनिर्वचनीयः स्वभावः । तथा च रामद्वारा मत्कार्यमनुपालयेति भावः । मध्येकृत्येति 'मध्येपदे निवचने च' इति गतिसंज्ञा । 'कुगतिप्रादयः' इति समासे क्त्वो ल्यप् । धिनोतीति 'धिन्विकृण्व्योर च' इत्युकारप्रत्ययोऽकारश्चान्तादेशः । 'तमिस्रं तिमिरं तमः' इत्यमरः । 'अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ' इति मेदिनीकरः । 'निजं स्वीये च नित्ये च' इति च । तत्किमन्ये शक्रादयो रक्षका न सन्त्येवेत्यत आह—**दृष्ट इत्यादि** । किं च । अन्यच्चेत्यर्थः । नाकिनां चक्रवर्तीन्द्रः साक्षात्प्रत्यक्षमेव दृष्टः । कीदृशः [1]असुरविजय्यसुरस्यैव जेता, नाधर्मस्येति स्तुतिनिन्दापरं वचनम् । यद्वासुरमात्रविजयी स त्वं पुनरधर्मविजय्यसुरविजयी च । यद्वासुराणां विजयी यतः, [2]अतस्तस्य सकुल्यविजयित्वादन्यायप्रवृत्तस्य राज्ये स्थातुं न युक्तमिति । यद्वासुरादिगतो जयो यस्य तादृशः । [3]यद्वा तस्यासुरविजयित्वात्सदैव युद्धं लग्नमेव वर्तते, तेन तस्य

१. 'प्रभावैः' इति पाठान्तरम्.

**दशरथः**—(सविषादमात्मगतम् ।) कथमिदमस्माकं सकललोकशोक-शङ्कूद्धरणशीलशीतलेभ्यः कौशिकप्रसादेभ्यो[1] रामभद्रप्रवासवैमनस्यमुत्प-

---

स्वास्थ्यं नास्ति, अतः स्थातुमयुक्तं तत्रेति । यद्वा यादृश इन्द्रोऽसुरविजयी तादृशो दृष्ट एव । सोल्लुण्ठं वचनमेतदिति । तदग्रे गणेशादिनासुरा जिताः, अयं त्वशक्त एव कथं पराजेष्य-तीति । यद्वासुराणां विजयोऽसुरविजयः । कर्तरि षष्ठी । सोऽस्यास्तीत्यसुरविजयी । अ-सुरकर्तृकविजययुक्त इत्यर्थः । तथा च स न रक्षाक्षम इति न युक्तं तद्राज्ये स्थातुमिति । वरुणस्येयं वारुणी दण्डो दुष्टानां वधबन्धादिना शासनं तत्प्रकाशिका नीतिरनुशासनम् । राज्यस्थितिरिति यावत् । तथा च वारुणी दण्डनीतिर्वरुणसंबन्धिनी राज्यस्थितिर्यथा तथा मात्स्यो न्यायो व्यवहारः कथयति । मात्स्यो हि न्यायो बलवतां दुर्बलसजातीयभ-क्षकत्वम् । तथा च साधूनामल्पधनानां महाधनैरसाधुभिरुपद्रव इति पश्चिमदिक्पतेर्वरुण-स्याज्ञोक्ता । तथा च तत्राप्यवस्थातुं न सांप्रतम् । अथशब्दः समुच्चये । 'अथ प्रश्नसमुच्चये' इति विश्वः । पातालेन्द्राद्वासुकेरहिभयं सर्पभयं नित्यानुषक्तं नित्यसंबद्धमस्ति । तस्य सर्प-त्वात् । यद्वा यो यस्य प्रतिपक्षः स तस्येश्वर इव । तत्र तस्य शक्तिमत्त्वात् । तेन पाता-लेन्द्रो गरुडस्तस्माद्भयं सर्पाणां नित्यमस्त्येव । तद्रक्षणासमर्थत्वाद्वासुकेः । यद्वा वासुकेरेव सर्पाणां नित्यं भयं कस्यायं वदिष्यति 'गरुडकर्तृकभक्षणार्थं त्वं गच्छ' इति । इति पा-ताले दोष उक्तः । तत्किमस्मासु तादृग्गुणस्य व्यतिरेक इत्यत आह—तत्तस्मान्नोऽस्माकं पुण्यैः हे वीर, भवता त्वया करणभूतेन राजन्वती प्रकृष्टराजयुक्ता भूः पृथ्व्यजनि जाता । कर्तरि चिण् । तथा च । इन्द्रादिभ्योऽपि त्वमद्भुतप्रताप इति भावः । मात्स्य इति 'तस्येदम्' इत्यण् । 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति यलोपाभावः । **स-विषादमिति** । शिशुरामभद्रप्रदानादिति भावः । विषादलक्षणं रसप्रकाशे—'सत्त्व-नाशो विषादः स्यादिष्टानाप्तिरसत्त्वजः । अकर्तव्यादिजनितो दैवव्यापत्तिजो यथा ॥' अस्य चाभिनयः—'निश्वासोच्छ्वासहृत्तापसहान्वेषणकादिभिः । ध्याननिद्रावैमनस्यविषादैश्चा-भिनीयते' आत्मगतमप्रकाशम् । 'हृदयस्थं वचो यत्तु तदात्मगतमुच्यते । यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते ॥' इति भरतः । विषादमेव प्रकटयति—**कथमित्यादि** । शङ्कुः शल्यम् । 'शङ्कुः संख्यान्तरे कीले' इति विश्वः । उद्धरणमुत्पाटनम् । 'उद्धरणं समुद्धारे वान्तान्ने पालनेऽपि च' इति धरणिः । उद्धरणमेव शीलं स्वभावस्तेन शीत-लेभ्यः । सुखजनकेभ्य इत्यर्थः । वैमनस्यं दुःखिचित्तत्वम् । कौशिकप्रसादस्य विसदृश-फलत्वात् । सकलानुरागविषयाच्छीतलवस्तुनोऽपि वैमनस्यं भवतीत्यत्र दृष्टान्तमाह—

---

१. 'कौशिकपादेभ्यः' इति पाठान्तरम्. २. 'अप्युत्पद्यते' इति पाठान्तरम्.

त्स्यते। दृष्टं वा निःशेषानन्दनिःस्यन्दिनीनामपीन्दुकरकन्दलीनां [1]कमलवनीमीलनं [2]कलङ्कस्थानम्। (विहस्य।) का गतिः।

कूर्मराजभुजगाधिपगोत्रग्रावदिक्करिभिरेकधुरीणः।
मां प्रसूय कथमस्तु विगीतो हा परार्थविमुखो रघुवंशः॥ ३९॥

**विश्वामित्रः**—(सस्मितम्।) राजर्षे, ममकारो हि राजपुत्रेषु राज्ञामुपलालनक्लेशाय केवलम्। उपयोगस्तु प्रजानाम्। यथैतत्।

कष्टा वेधव्यथा कष्टो नित्यमुद्वहनक्लमः।
श्रवणानामलंकारः कपोलस्य तु कुण्डलम्॥ ४०॥

**दशरथः**—भगवन्, परमनुगृहीता वयमेवं तत्रभवता संभाव्यमानाः। किं पुनरकृतास्त्रः क्षीर[3]कण्ठो वत्सोऽयमिति [4]मुग्धोऽस्मि।

---

**दृष्टमित्यादि**। जगदानन्ददातॄणामपि चन्द्रकिणकन्दलीनां कमलवनीमुद्रणं कलङ्कस्थानं दृष्टमिति योजना। कमलवनीत्यत्राल्पार्थे ङीष्। गतिरुपायः प्रकारो वा। 'उपायेऽपि प्रकारेऽपि गतिरुक्ता मनीषिभिः' इति धरणिः। अत्र तावदतिप्रियतमरामभद्रस्याप्रदानमेव श्रेय इति विकल्प्य तत्रापि दूषणमाशङ्कते—**कूर्मराजेति**। हा कष्टम्। मां प्रसूय जनयित्वा रघुवंशोऽपि परार्थविमुखोऽन्यकार्यविमुखः सन्कथं विगीतो निन्दितोऽस्तु। अपि तु नास्तु। 'सुगीतः' इति क्वचित्पाठः। तत्र हा कष्टम्। परार्थविमुखोऽन्यप्रयोजनपराङ्मुखः कथमस्तु। अपि तु नास्तु। सुगीतः प्रसिद्धः सन्नित्यर्थः। 'विगीतो निन्दिते मतः' इति विश्वः। कूर्मराजः कच्छपपतिः, भुजगाधिपः सर्पराजः, गोत्रग्रावा कुलपर्वतः, दिक्करी च दिग्गजश्च, एभिः सममेकधुरीणः। धरणीधारक इत्यर्थः। 'कुलं गोत्रम्' इति शाश्वतः। 'ग्रावाचलशैलशिलोच्चयाः' इत्यमरः। एकधुरीण इत्येका चासौ धूश्चैकधुरा। 'ऋक्पूः–' इत्यादिनाच्समासान्तः। 'खः सर्वधुरात्' इत्यनुवृत्तेः 'एकधुराल्लुक्च' इति खः। धूर्भारः। 'धूः स्याद्भारचिन्तयोः' इति विश्वः। विश्वामित्रः स्वप्रयोजनाय रामभद्रविषयकदशरथानुरागं शिथिलयति—**ममकार इति**। ममकारो ममत्वम्। ममशब्दोऽयं विभक्तिप्रतिरूपकोऽव्ययम्। यथा ममतेत्यादौ। उपलालनं दौर्ललित्यम्। अत्र दृष्टान्तमाह—**कष्टेति**। श्रवणानां कर्णानां वेधव्यथा वेधनपीडा कष्टा दुःखप्रदा। वहनक्लम उद्वहनपरिश्रमश्च नित्यम्। कुण्डलं पुनः कपोलस्य गण्डस्यालंकरणम्, न तु श्रवणानाम्। तथा च रामप्रयोजनं खल्वस्मदादीनाम्, न तु भवतामिति भावः। संभाव्यमानाः सम्यक्प्रभाव्यमानाः। अकृतास्त्रोऽशिक्षितायुधवेदोऽनभ्यस्तास्त्रो वा।

---

१. 'कमलिनीमीलनम्'; 'कमलवनीविनिमीलनम्' इति पाठान्तरम्. २. 'अङ्कस्थानम्' इति पाठान्तरम्. ३. 'क्षीरकण्ठश्च' इति पाठान्तरम्. ४. 'प्रमुग्धोऽस्मि' इति पाठान्तरम्.

**विश्वामित्रः**—(विहस्य ।) सखे, तत्रभवन्तं मैत्रावरुणिमृषिं पुरोधाय चरितब्रह्मचर्यव्रतस्य धनुर्वेदसंस्कारास्तावदस्य कृशाश्वप्रसादादस्मास्वायतन्ते ।

**दशरथः**—(सविनयोपरोधम् ।) भगवन्, उच्छ्वसितमपि रघुराजबीजिनां त्वदायत्तमेव, किंमुत[1] कार्मुकविद्यासंप्रदायः । शङ्के सहस्रकिरणकुलैकपक्षपातेनैव सहस्रं वत्सरान्[2] भगवन्तं कृशाश्वमुपासीनो दिव्यास्त्रमन्त्रोपनिषदमध्यगीष्ठाः ।

**विश्वामित्रः**—अलं च ते रामभद्रेऽपि बालोऽयमित्यलीकसंभावनया । दिवस्पृथिव्योस्[3] तिमिरतिरस्करिणीं तरणिरणुतरोऽपि तेजसा तिरस्करोति ।

---

क्षीरकण्ठो दुग्धपायी । बालक इत्यर्थः । मैत्रावरुणिं वसिष्ठम् । पुरोधाय पुरोहितं कृत्वा । 'पुरोऽव्ययम्' इति गतित्वात्समासः । संस्कारोऽपूर्वशक्त्याधानम् । 'अपूर्वशक्त्याधाने च संस्कारोऽनुभवेऽपि च' इति विश्वः । कृशाश्वो विश्वामित्रगुरुः । आयतन्त आयत्ताः । उच्छ्वसितं जीवितम् । रघुराजबीजी रघुराजवंश्यः । बीजं प्रथमपुरुषः प्रधानपुरुषो वा । 'रघुराजबीजानाम्' इति पाठे रघुराजैव बीजान्यङ्कुरकारणानि तेषामुच्छ्वसितमुद्गमः । संप्रदाय उपदेशः । शङ्के तर्कयामि । सहस्रं वत्सरान्सहस्रवर्षान् । 'अत्यन्तसंयोगे द्वितीया' । इह सहस्रशब्देनैकवचनवतैव सहस्रसंख्याया अभिधानं वत्सरशब्देन बहुवचनवता बहुत्वाभिधानम्, अतस्तादृशयोरेवान्वयः । अन्यथा योग्यताया अभावः । तन्मूलकमेव 'विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः' इत्यमराभिधानमपि । उपासीन उपस्थितः । समीपे स्थित इत्यर्थः । 'ईदासः' इतीत्वम् । मन्त्रोपनिषन्मन्त्रबहुलवेदभागभेदः । यद्वा मन्त्रो मन्त्रात्मको वेदः । तद्व्याख्याग्रन्थ उपनिषत् । अध्यगीष्ठा अधीतवानसि । 'इङ् अध्ययने' लुङ् । 'विभाषा लुङ्लृङोः' इति गाङादेशः । गाङ्कुटादिसूत्रेण ङित्त्वे सति 'घुमास्था—' इतीत्वम् । अलं निषेधे । अलं चेत्याद्यर्थान्तरेण द्रढयति—**दिव इति** । अणुतरोऽपि सूक्ष्मतरोऽपि । अभिनवोऽपीति यावत् । तरणिः सूर्यस्तेजसा किरणेन दिवस्पृथिव्योः स्वर्गभुवोस्तिमिरमेव तिरस्करिणीमवरोधिकाम् । 'फलकी' इति प्रसिद्धम् । यद्वा जवनिकापटीम् तिरस्करोत्यपसारयति । तिमिरतिरस्करिणीति तिमिरेण तिरस्करिण्या रूपकम् । दिवस्पृथिव्योरिति । द्यौश्च पृथिवी चेति समासे 'दिवसश्च पृथिव्याम्' इति दिवशब्दस्य दिवसादेशः । 'अणुः सूक्ष्मे व्रीहिभेदे' इति विश्वः । 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी

---

१. 'किं पुनः' इति पाठान्तरम्. २. 'परिवत्सरान्' इति पाठान्तरम्. ३. 'द्यावापृथिव्योः'; 'दिवस्पृथिव्योरन्तराले' इति पाठान्तरम्.

**दशरथः**—( सस्मितम् ।) भगवन्कुशिकवंशकेतो, कस्य तलिनी तादृशी जिह्वा यस्त्वामपि ब्रुवाणमधरोत्तरेणाभिसंधत्ते[1] । (अपवार्य ।) वामदेव, एवमत्रभवान्कौशिको ब्रवीति ।

**वामदेवः**—राजर्षे, किमत्र प्रष्टव्या वयम् ।

कौशिकोऽर्थी[2] भवान्दाता रक्षणीयो महाक्रतुः ।
रक्षिता रामभद्रश्चेदनुमन्यामहे वयम् ॥ ४१ ॥

अपि च ।

जगतीभारखिन्नानां विश्रामो भवतामयम् ।
यद्यथाकामसंपत्तिप्रीतार्थिमुखदर्शनम् ॥ ४२ ॥

किं च विशेषेण ।

पूरयितुमर्थिकामान्मैत्रावरुणेन गोत्रगुरुणा ते ।
संदिशता संदिष्टः समाधिदृष्टोऽयमेवार्थः ॥ ४३ ॥

---

च सा' इत्यमरः । केतुः पताका । तलिनी स्वच्छा । पटुतरेति यावत् । यद्वा विरला । यथा च विश्वः—'तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्' इति । केचित्तु शक्तेति वदन्ति । अधरोऽधोवर्ती वाध्यः । उत्तरः श्रेष्ठो वाधकः । तथा च वाध्यवाधकभावेनेत्यर्थः । अभिसंधत्ते वाधितुमीहते विवदते वा । यद्वा कस्य ब्रह्मणस्तादृशी समर्था जिह्वा स एव तत्र समर्थः । 'कः प्रजापतिरुद्दिष्टः' इत्येकाक्षरः । अपवार्येति । 'रहस्यं तु यदन्यस्य परावृत्त्य प्रकाश्यते । नाट्यधर्मसमावेशात्स्मृतं तदपवारितम् ॥' इति भरतः । एवमिति । किमत्र विधेयमिति भावः । वामदेवो रामप्रदानौपयिकं रूपमाह—**जगतीति** । भवतां रघुवंश्यानां यथाकामं यथेच्छं संपत्त्या प्रीतो योऽर्थी प्रार्थकस्तस्य मुखदर्शनं यदयं विश्रामः । श्रमोपशमहेतुरित्यर्थः । कीदृशानाम् । जगतीभारेण पृथ्वीभारेण खिन्नानाम् । रामभद्रप्रदानौपयिकं पूर्वं कथितं संदेशमनुस्मारयति—**किं चेति** । अयमेव कौशिकागमनानन्तरं रामभद्रप्रदानरूपो मैत्रावरुणेन वसिष्ठेन 'हुतमिष्टं च तप्तं च' (१।१७)इत्यादिपूर्वोक्तेन त्वयि संदिष्टः । ननु तेनानागतोऽयमर्थः कथं ज्ञात इत्यत आह—समाधिना ध्यानेन दृष्टः । वसिष्ठादेशस्यावश्यकर्तव्यतामाह—गोत्रगुरुणेति । गोत्रं कुलम् । अर्थिकामान्प्रार्थ-

---

१. 'अधरोत्तरैः' इति पाठान्तरम्. २. कौशिकेत्यादिश्लोकष्टीकाकारेण न व्याख्यातः कदाचित्प्रक्षिप्तः स्यात्. मूलपुस्तकेषु वर्तत एव.

**दशरथः**—वामदेव, एवमेतत् ।

ध्यान[1]मयदृष्टिपातप्रमुषितकालाध्वविप्रकर्षेषु ।
विषयेषु नैष्ठिकानां सर्वपथीना मतिः क्रमते ॥ ४४ ॥

(विमृश्य ।)

क्रियाणां रक्षायै दशरथमुपस्थाय विमुखे
मुनौ विश्वामित्रे भगवति गते संप्रति गृहान् ।
तपोलेशक्लेशादुपशमितविघ्नप्रतिभये
प्रवृत्ते यष्टुं वा रघुकुलकथैवास्तमयते ॥ ४५ ॥

(मुनिं प्रति ।) जगद्गुरो गाधिनन्दन,

त्वं चेद्दीक्षिष्यमाणो मे रामभद्रं प्रतीक्षसे ।
तन्नः पतिव्रतावृत्तमियं चरतु मेदिनी ॥ ४६ ॥

---

कामिलषितान्पूरयितुं संदिशता। तथा च रामोऽवश्यं दातुमर्ह इति भावः । **ध्यानेति ।** नैष्ठिकानां निष्ठावतां मुनीनां मतिर्विषयेषु कार्येष्विन्द्रियार्थेषु सर्वपथीना सर्वपथव्यापिनी । सर्वकुलमार्गव्यापिनीति यावत् । क्रमते वृद्धिं याति । न केनापि प्रतिबध्यत इत्यर्थः । 'वृत्तिसर्गतायनेषु क्रमः' इति तङ् । कीदृशेषु । ध्यानमयी या दृष्टिस्तस्याः पातेन प्रमुषितो दूरीकृतः कालस्यातीतानागतस्याध्वनो मार्गस्य विप्रकर्षो दूरत्वं येषु । योगज्ञानस्वरूपेण चक्षुषा सर्वं पश्यतीत्यर्थः । पूर्वं कूर्मराजेत्यादिना सामान्यतोऽनिष्टमात्रमाशङ्कितम्, इदानीमतिक्रोधशीलात्तपस्विनोऽत्यन्तानिष्टमाशङ्कते—**क्रियाणामिति** । क्रियाणां यज्ञानां प्रकृतत्वात् । रक्षायै दशरथं मामुपस्थाय संगतीभूय भगवति विश्वामित्रे मुनौ विमुखेऽप्राप्तकामेऽनन्तरं गृहान्गते ततस्तपोलेशक्लेशात्स्वल्पतपोव्ययादुपशमिते दूरीकृते विघ्नप्रतिभये विघ्नत्रासे । अथ मुनौ यष्टुं यज्ञं कर्तुं प्रवृत्ते सति रघुवंशकथास्तमयतेऽस्तं नाशमेष्यत्येव । 'अय गतौ' वर्तमानसामीप्ये लट् । अस्तमिति मान्तमव्ययम् । तस्मादवश्यं रामो दातुमर्ह इति भावः । **त्वमित्यादि** । हे मुने, त्वं यदि दीक्षिष्यमाणो यज्ञं करिष्यन्रामं प्रतीक्षसे प्रत्यवेक्षकमिच्छसि, ततो नोऽस्माकमियं मेदिनी पतिव्रतावृत्तं पतिव्रताचरित्रमेकपतित्वं चरतु । चरति वा । तदा वर्तमानसामीप्ये लट् । पत्युर्व्रतं यस्याः सा पतिव्रता । तस्या वृत्तं चरित्रमेकपतित्वम् । अयमाशयः—य एवास्याः पती रक्षिता तद्व्रतवृत्तं चरितमनुगच्छति । पतिशब्दस्तु 'पा रक्षणे' पातेर्डतिः । तस्माद्रक्षणात्पतिः । तथा च राम एवास्याः पतिर्भवत्विति भावः । यद्यपि सर्वपतितया कुलटात्वं भवति, न तु पतिव्रतात्वम्, तथापि य एवास्या रक्षिता स एव पतिरिति नियमान्न दोषः । यथा

---

१. 'ज्ञानमय' इति पाठान्तरम्.

(नेपथ्याभिमुखः ।) कः कोऽत्र भोः ।

(प्रविश्य)

**दौवारिकः**—किमाज्ञापयति देवः ।

**दशरथः**—आहूयतां रामभद्रः ।

**वामदेवः**—लक्ष्मणश्च ।

**दशरथः**—(सस्मितम् ।) ऋषे, पृथक्प्रयत्नापेक्षी नायमर्थः । न खलु प्रकाशमन्तरेण तुहिनभानुरुज्जिहीते ।

(दौवारिको निष्क्रान्तः ।)

(ततः प्रविशतो रामलक्ष्मणौ ।)

**रामः**—(सहर्षम् ।)

सुराधीशक्रोधाज्जगदपरथा कर्तुमपरे
पुराणब्राह्मणो भुवनपितरः सप्त च कृताः ।
धृतास्तुष्टेनामी बहिरपि च वैश्वानरपथा-
त्कथा पौराणी यच्चरितमितिह स्म प्रथयति ॥ ४७ ॥

कथं सोऽपि भगवान्विश्वामित्रः स्वयमस्माभिरुपचरिष्यते । (इति प-

---

पाञ्चाल्याः पञ्चपाण्डवस्वामित्वेऽपि नासतीत्वं वृत्तमिति । एतेन या मम पतिव्रता कैकेयी तस्या वृत्तं चरित्रं रामप्रवासभरतराज्यप्राप्तिरूपं मेदिनी चरत्वनुसरत्विति सूचितमिति गण्डः । गण्डलक्षणं तु भरते—'अनावरणभाव्यर्थवादो गण्ड इति स्मृतः' इति । 'वृत्तं वृत्तेऽप्यधीते च चरित्रेऽपि' इति विश्वः । **नेपथ्य इति** । तल्लक्षणमहमलिखं प्रागेव । दौवारिक इत्यत्र द्वारे चरतीति ठक् । 'द्वारादीनां च' इत्यैच् । अयमर्थो लक्ष्मणागमनरूपः । उज्जिहीते । उदेतीत्यर्थः । 'ओहाङ् गतौ' । 'ई हल्यघोः' । अभ्यासस्य 'भृञामित्' इतीत्वम् । **सुराधीशेति** । पौराणी पुराणसंबन्धिनी इतिह कथा ऐतिह्यकथा यच्चरितं विश्वामित्रचरितं प्रथयति ख्यातं कारयति स्म । तत्किमित्यत आह—सुराधीशेति । सुराधीशस्येन्द्रस्य क्रोधादपरथान्यथा जगत्कर्तुमपरेऽन्ये पुराणब्रह्माणः । अग्निष्वात्ताद्यपेक्षयापरत्वम् । सप्त च भुवनपितरो मरीच्यत्रिप्रभृतयः सप्तर्षयः कृताः । ततो नानादेवप्रणिपातात्तुष्टेन संतोषं गच्छतामुना कौशिकेनामी ब्रह्माणो वैश्वानरपथाद्बहिर्धृताः । वैश्वानरपथ आकाशविशेषस्थानम्, यत्र सप्तर्षयः सन्ति । यद्वा वैश्वानरपथोऽग्निपथस्तत्र सप्तर्षयः सन्ति तद्बहिरेव । यद्वा वैश्वानरपथाद्धविर्दानाद्बहिरेव बाह्य एव धृताः । आहुतिभागिनो न कृता इत्यर्थः । प्रथयतीति । 'प्रथ आख्याने' घटादिः । 'लट् स्मे' इति भूते लट् । रूपयन्ना-

१. 'स्वयमुपचरिष्यतेऽस्माभिः' इति पाठान्तरम्.

रिकामन्पुरोऽवलोक्य[1] हर्षातिशयं रूपयन् ।) नूनं विनयनम्रयोस्तातवामदेवयो-स्तृतीयः[2] प्रशान्तपावनीयाकृतिः स भगवान्विश्वामित्रो भविष्यति ।

**लक्ष्मणः**—(साश्चर्यस्मितम् ।) आर्य[3],

अयमयमीदृशप्रशमविश्वसनीयतनु-
र्भुवनभयंकरीः कथमधत्त रुषोऽपि मुनिः ।
स्थितमिदमेव वा मृदुमनोज्ञतुषारतमा-
स्तमसि सति ज्वलन्ति सहसैव महौषधयः ॥ ४८ ॥

**रामः**—वत्स लक्ष्मण, एवं दुरवगाहगम्भीराश्चित्रीयन्ते[4] महान्तः । अपि च ।

व्रतविहतिकरीभिरप्सरोभिः सह जगदस्य निगृह्णतो गृणन्ति ।
नमदमरशिरःकिरीटरोचिर्मुकुलितरोषतमांसि चेष्टितानि ॥ ४९ ॥

---

टयन् । नूनं निश्चये । पूयतेऽनयेति पावनी । करणे ल्युट् । लक्ष्मणस्य कनिष्ठत्वाद्रामं प्रत्यार्यपदेनाभिधानम् । तदुक्तं भरते—'विप्रामात्याग्रजा आर्या नटीसूत्रकृतौ मिथः' इति । **अयमयमिति** । 'संभ्रमे द्वे भवतः' इति द्विर्वचनम् । अयं मुनिर्विश्वामित्रः कथं रुषोऽपि क्रोधानप्यधत्तेति योजना । ईदृशेन प्रशमेन शान्त्या विश्वसनीयतनुरपीत्याश्चर्य-स्फोरणम् । रुषः कीदृशीः । भुवनभयंकरीः । 'मेघर्तिभयेषु कृञः' इति खश् । 'अरुर्द्विषदजन्तस्य–' इति मुम् । कथमित्याक्षेपसमाधानाय स्वयमेवार्थान्तरं न्यस्यति—स्थितमिति । इदमेव वा स्थितम् । युक्तमेतदित्यर्थः । महौषधयो दिव्यलतास्तमस्यन्धकारे सति सहसैव हठेनैव ज्वलन्ति । कीदृश्यः । मृद्व्यः सुकुमाराः, मनोज्ञा रमणीयाः, तुषारतमा अतिशीतलाः । एतादृश्योऽपीत्यर्थः । अथ च तमसि क्रोधे । लक्ष्मणवाक्यमनुमोदते—**एवमिति** । दुरवगाहोऽनवगाह्यः । गम्भीरो महान् । चित्रीयन्त आश्चर्यं कुर्वन्ति । 'नमोवरिवश्चित्रङः क्यच्' । ङित्करणसामर्थ्यात्तङ् । दुरवगाहगम्भीरमहिमत्वमेव स्फोरयति—**व्रतेत्यादि** । अस्य कौशिकस्य चेष्टितानि कर्मभूतानि पौराणिका गृणन्ति वदन्ति । 'गॄ शब्दे' क्र्यादिः । कीदृशानि । नमन्तो येऽमरा देवास्तेषां शिरःकिरीटानां शिरोमुकुटानां यद्रोचिस्तेजस्तेन मुकुलितानि संकुचितानि रोषरूपाणि तमांसि यत्र तानि । व्रतविहतिकरीभिस्तपोनाशकारिणीभिरप्सरोभिः सह जगद्विष्टपं

---

१. 'विलोक्य'; 'अवलोक्य च' इति पाठान्तरम्. २. 'तृतीया प्रशान्तपावनीयमाकृतिः' इति पाठन्तरम्. ३. केषुचित्पुस्तकेषु 'आर्य' इति नास्ति. ४. 'गम्भीरचरिताः' इति पाठान्तरम्.

वामदेवः—(सहर्षं दृष्ट्वा।) कथमागतो रामभद्रः। (मुनिं प्रति।) भगवन्,

ब्रह्मज्योतिर्विवर्तस्य चतुर्धा देहयोगिनः।
ऋष्यशृङ्गचरोरंशः प्रथमोऽयं महाभुजः॥ ५०॥

विश्वामित्रः—(सहर्षसंभ्रममवलोक्य।) वामदेव, किमुच्यत आरण्यकेषु किमपि प्रकृष्टतमं ब्राह्मण्यमृष्यशृङ्गस्य। न केवलममुना वत्सेन ब्रह्मर्षिर्विभाण्डकः पुत्रवतां धुरमारोपितः, दशरथोऽपि।

दशरथः—भगवन्, एवमेवैतत्।

ये मैत्रावरुणं पुरोहितवतो वंशे मनोर्जज्ञिरे
तास्ता वैनयिकीः क्रिया विदधिरे येषां च युष्मादृशः।
तेषामञ्चलमेष ते दशरथः संप्रत्यमी ये पुन-
र्जातास्ते ध्रुवमृष्यशृङ्गतपसामैश्वर्यमिक्ष्वाकवः॥ ५१॥

---

निगृह्णतो भस्मीकर्तुमिच्छतः। व्रतविहतिकरीभिरिति 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टः। टित्त्वात् ङीप्। 'विष्टपं भुवनं जगत्' इत्यमरः। वामदेवो रामभद्रं परिचाययति—ब्रह्मेत्यादि। ऋष्यशृङ्गस्य मुनिविशेषस्य चरोर्हव्यान्नस्यायं महाभुजो रामः प्रथमोंऽश आद्यो भागः। कीदृशस्य। ब्रह्मतेजःपरिणामस्य चतुर्धा चतुष्प्रकारेण रामादिराजपुत्रचतुष्टयत्वेन देहयोगिनः शरीरभागिनः। 'अंशः स्कन्धे च भागे च' इति विश्वः। 'जलावर्तेऽप्यथ चरुः पुमान्हव्यान्नभाण्डयोः' इति धरणिः। ब्रह्मज्योतिर्विवर्तोऽयमिति कृत्वा लीलामात्रेणैव मदिष्टसाधनक्षम इत्याशयादाह—सहर्षमिति। अत एव संभ्रम आदरः। आरण्यकेषु वनवासिषु मध्ये। 'अरण्यान्मनुष्ये' इति वुञ्। ब्राह्मण्यं ब्रह्मकर्म। ब्राह्मणादित्वात्ष्यञ्। वत्सेन पुत्रप्रायेण। 'पुत्रादौ तर्णके वर्षे वत्सः' इति विश्वः। अमुना ऋष्यशृङ्गेण। 'विभाण्डकस्यापि ऋष्यशृङ्गप्रसादादेव पुत्रो वृत्तः' इति पुराणम्। विश्वामित्रवाक्यमनुमोदमान एव ऋष्यशृङ्गस्तुतिमाह—ये मैत्रावरुणमिति। ये राजानो मैत्रावरुणं वसिष्ठं पुरोहितवतः पुरोहितं कुर्वतः। यद्वा पुरोऽग्रे हितवतोऽर्पितवतः। मनोर्वंशे जज्ञिरे जाताः। येषां च राज्ञां युष्मादृशो भवद्विधास्तास्ताः प्रसिद्धा वैनयिकीर्विनयप्रधानाः। यद्वा विनयाधारहेतुभूताः। क्रिया व्यापारकलापान्विदधिरे विहितवन्तः। ते तवायं दशरथस्तेषां राज्ञामञ्चलं प्रान्तदेशः। 'अञ्चल' इति ख्यातेः अञ्चलशब्दस्याजहल्लिङ्गतयान्वयः। संप्रत्यधुना ये पुनरमी रामादय इक्ष्वाकवो जातास्ते ध्रुवं निश्चितमृष्यशृङ्गतप-

---

१. 'रामं दृष्ट्वा सहर्षम्' इति पाठान्तरम्. २. 'आलोक्य' इति पाठान्तरम्. ३. 'प्रकृष्टतमं किमपि' इति पाठान्तरम्. ४. 'राजर्षिर्दशरथोऽपि' इति पाठान्तरम्. ५. 'वामदेवः' इति पाठान्तरम्. ६. 'मैत्रावरुणिम्' इति पाठान्तरम्. ७. 'अञ्चलः' इति पाठान्तरम्.

(रामलक्ष्मणावुपसर्पतः ।)

**दशरथः**—वत्सौ, भगवानेष निःशेषभुवनमहनीयो महामुनिः कौशिकः प्रणम्यताम् ।

**रामलक्ष्मणौ**—(उपसृत्य ।) भगवन्विश्वामित्र, सावित्रौ रामलक्ष्मणावभिवादयेते ।

**विश्वामित्रः**—वत्सौ, आयुष्मन्तौ भूयास्ताम् । (इति भुजाभ्यां गृहीत्वा रामं निर्वर्ण्य[1] च सबहुमानम्[2] । आत्मगतम् ।)

वसिष्ठोक्तैर्मन्त्रैर्दधति जगतामाभ्युदयिकीं
धुरं संप्रत्येते दिनकरकुलीनाः क्षितिभुजः ।
गृहे येषां रामादिभिरपि कलाभिश्चतसृभिः
स्वयं देवो लक्ष्मीस्तनकलशवारीगजपतिः ॥ ५२ ॥

---

सामैश्वर्यं परिणामः । अत्राप्यजहल्लिङ्गता । वैनयिकीरिति 'विनयादिभ्यष्ठक्' इति ठक् । उपसर्पतः समीपं गच्छतः । महनीयः पूजनीयः । सावित्रौ सूर्यापत्ये । 'तस्यापत्यम्' इत्यण् । भूयास्तामित्याशीर्लिङ् । मध्यमपुरुषद्विवचनम् । निर्वर्ण्य दृष्ट्वा । तदुक्तम्—'समौ निर्वर्णननिभालनौ' इति । सबहुमानं प्रचुरसंमानं यथा स्यादेवम् । विश्वामित्रश्छलतो वसिष्ठं स्तौति—**वसिष्ठोक्तैरिति** । एते दिनकरकुलीनाः सूर्यवंशजाताः क्षितिभुजो राजानः संप्रति वसिष्ठोक्तैर्मन्त्रैर्जगतामाभ्युदयिकीमभ्युदयप्रयोजनां धुरं भारं दधति वहन्ति । जगतामाभ्युदयिकभारधारणे हेतुमाह—येषामिति । येषां राज्ञां गृहे रामादिभी रामलक्ष्मणभरतशत्रुघ्नरूपाभिश्चतसृभिः कलाभिश्चतुर्भिरंशैर्देवो नारायणः स्वयमस्ति साक्षादस्ति । अस्तीत्यध्याहार्यम् । 'यत्र क्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रयोक्तव्यः' इति भाष्यकारवचनात् । देवः कीदृशः । लक्ष्म्याः स्तनावेव कलशौ तावेव वारी गजवन्धनी तत्र गजपतिर्हस्तिराजः । इह कलशाभ्यां स्तनौ रूप्येते, वार्या च कलशौ इति रूपकरूपकोऽयमलंकारः । यदाह दण्डी—'मुखपङ्कजरङ्गेऽस्मिन्भ्रूलतानर्तकी तव । लीलानृत्यं करोतीति रम्यं रूपकरूपकम् ॥' इति । 'स्तनविषमवारी—' इति पादे विषमा कठिना वारी विषमवारी तस्या गजपतिरिव । अत्र तु रूपकम् । एतेन 'विशेषणद्वारा—' इति न्यायेन नारायणोऽत्र लभ्यते । आभ्युदयिकीमिति 'तदस्य प्रयोजनम्' इति ठक् । कुलीना इत्यत्र 'कुलात्खः' इति खः । न च 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तदन्तत्वाभावात्खप्रत्ययाभाव इति वाच्यम् । परिभाषाया ज्ञापकमूलत्वादनित्यत्वात् 'ज्ञापकसिद्धं न सर्वत्र' इति वचनात् । यद्वा दिनकरा इव कुलीना दिनकरकुलीनाः । 'वारी स्याद्गज-

१. 'वामदेवः' इति पाठान्तरम्. २. 'च निर्वर्ण्य' इति पाठान्तरम्.

अपि च।

त्वं तास्ताः स्मृतवानृचो दशतयीस्त्वत्प्रीतये यज्वभिः
स्वाहाकारमुपाहितं हविरिह त्रेताग्निराचामति।
त्वां क्षीरोदजलेशयं क्रतुलिहः[1] पृथ्वीमवातीतर-
न्नुद्वृत्ता दशकंधरप्रभृतयो निग्राहितारस्त्वया॥ ५२॥

**वामदेवः**—(सस्मितम्[2]।) वत्सौ, अयमत्रभवान्भवन्तौ नेतुमागतः।

**रामलक्ष्मणौ**—यदभिरुचितं भवते ताताय[3] च।

(दशरथस्तौ सस्नेहमादाय 'भगवन्कौशिक' इत्यर्धोक्ते मन्यूत्पीडनिगृह्यमाणकण्ठो वामदेवस्य मुखमीक्षते।)

---

बन्धन्याम्' इति धरणिः। वसिष्ठस्तुतिप्रसङ्गाद्रामं स्तुत्वा स्वातन्त्र्येण विष्णुरूपतया पुनस्तं स्तौति—**त्वमिति**। त्वं तास्ता अनिर्वचनीयस्वरूपा दशतयीनामधेया ऋचः स्मृतवान्। ब्रह्मरूपित्वात्। दशतयीनामधेया ऋचो ऋग्वेदे बह्व्यः सन्ति। यद्वा दशतयीर्दशावयवाः। 'संख्याया अवयवे तयप्'। त्वत्प्रीतये यज्वभिर्याज्ञिकैः स्वाहाकारं स्वाहाकृत्वोपाहितं दत्तं हविर्घृतादि त्रेतारूपोऽग्निस्त्रेताग्निराचामति खादति। 'चमु अदने'। 'ष्ठिवुक्लमुचमां शिति' इति दीर्घः। स्वाहाकारमिति 'द्वितीयायां च' इति णमुल्। ननु वीप्सायां णमुल्विधानात्कथमत्रावीप्सायां तदिति चेन्न। 'अनुदात्तं पदमेकवर्जम्' इति ज्ञापकादवीप्सायामपि णमुलो विधानात्। त्रेताग्निरिति 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः। अग्नित्रयमिदं त्रेता' इत्यमरः। अत्र यद्यपि त्रेताशब्देनैवाग्नित्रयं लभ्यते तथाप्यग्निशब्दोपादानं स्फुटार्थम्। यथा करिकलभ इत्यत्र करिशब्द इति। यद्वा त्रेताशब्दस्य नानार्थत्वादग्निस्वरूपत्रेताबोधनार्थमग्निपदम्। क्षीरोदस्य समुद्रस्य जलेशयं जलशायिनं त्वां क्रतुलिहो देवाः। दुष्टदानवनिग्रहार्थमित्यर्थात्। अवातीतरन्नवतारितवन्तः। क्षीरोदशब्देन रूढ्या समुद्र एवोच्यते। यद्वा जलशब्देन लक्षणया क्षीरमुच्यत इत्यनयोर्न सामानाधिकरण्यविरोधः। जलेशयमिति 'अधिकरणे शेतेः' इति टः। 'शयवासवासिष्वकालात्' इत्यलुक्। अवातीतरन्नित्यवतरेर्ण्यन्ताल्लुङ् चङ्। ण्यन्तत्वाद्विकर्मकता। उद्वृत्ता गतचरित्रा गर्विष्ठा वा। दशकंधरप्रभृतयो रावणादयस्त्वया निग्राहितारस्त्वयैव निगृहीतव्याः। एतेन रावणवधपर्यन्तमस्माकमुद्देश्यमिति सूचितम्। निग्राहितार इति ग्रहेर्लुटि कर्मणि तङि रसि 'स्यसिच्—' इत्यादिना चिण्वद्भावाद्वृद्धिरिट् च। अयं कौशिकः। भवते ताताय चेत्यत्र 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानता। मन्युर्दैन्यम्। दुःखमिति यावत्। 'मन्युर्दैन्ये क्रतौ क्रुधि' इति विश्वः। उत्पीडः समूह उद्गमो वा।

---

१. 'क्रतुभुजः' इति पाठान्तरम्. २. केषुचित्पुस्तकेषु 'सस्मितम्' इति नास्ति. ३. 'ताताय भवते च' इति पाठान्तरम्.

**वामदेवः**—इमौ तौ रामालक्ष्मणौ । (इत्यर्पयति ।)

(विश्वामित्रः सादरं गृह्णाति ।)

(नेपथ्ये शङ्खध्वनिः[1] ।)

(वामदेवो निमित्तमनुमोदमानो दशरथमुल्लासयति ।)

(पुनर्नेपथ्ये)

**वैतालिकः**—सुखाय माध्यंदिनी संध्या भवतु देवस्य । संप्रति हि

किरति मिहिरे विष्वद्रीचः करानतिवामनी
स्थलकमठवद्देहच्छाया जनस्य विचेष्टते ।
गजपतिमुखोद्गीर्णैराप्यैरपि त्रसरेणुभिः
शिशिरमधुरामेणाः कच्छस्थलीमधिशेरते ॥ ५४ ॥

अपि चेदानीं पटीरतरुकोटरकुटीरमध्यासीनाः[2]
प्रत्यक्षरस्रुतसुधारसनिर्विषाभि-
राशीर्भिरभ्यधिकभूषितभोगभाजः ।

---

निगृह्यमाणोऽभिभूयमानः। दशरथो वामदेवस्य मुखमीक्षत इति । इमौ तौ रामलक्ष्मणौ। मुनये समर्प्येतामिति भावः । निमित्तं शुभलक्षणम् । नेपथ्ये वैतालिकः पठति । सुखाय सुखार्थम् । तादर्थ्ये चतुर्थी । माध्यंदिनीति मध्यं दिनस्य मध्यंदिनम् । यद्वा 'मध्य मध्यं दिनण् चास्मात्' इति दिनण् । मध्यशब्दस्य मध्यमादेशः । मध्यंदिनस्येयं माध्यंदिनी । अण् । ङीप् । वैतालिक एव मध्याह्नं वर्णयति—**किरतीति** । मिहिरे सूर्ये विष्वद्रीचः सर्वतो गमनशालिनः करान्किरति क्षिपति सति जनस्य देहच्छाया स्थलस्थितकच्छपवद्विचेष्टते चलति । अतिवामन्यतिखर्वा । मध्याह्ने पादप्रदेशेऽतिसूक्ष्मा छाया दृश्यत एवेति भावः । अपिः समुच्चये । एणा हरिणा अपि कच्छस्थलीं जलबहुलप्रदेशमधिशेरते । तत्र स्वपन्तीत्यर्थः । कीदृशीम् । हस्तिराजमुखेनोद्गीर्णैः क्षिप्तैराप्यैर्जलीयैस्त्रसरेणुभिर्द्व्यणुकत्रयारब्धैर्द्रव्यैः शिशिरमधुरां शीतलां मनोहरां च । विष्वद्रीच इति विष्वगञ्चतीत्यर्थे 'ऋत्विग्–' इत्यादिना क्विन् । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इत्यद्र्यादेशे रूपम् । अतिवामनीति गौरादित्वान्ङीष् । अधिशेरत इति 'शीङो रुट्' । कच्छस्थलीमिति 'अधिशीङ्–' इत्यादिना कर्मता । 'मिहिरारुणपूषणः' इत्यमरः । 'विष्वङ् विष्वगञ्चति' इति च । 'परमाणुश्च द्व्यणुकं त्रसरेणुस्ततो रजः । त्रसरेणुभिरष्टाभिरथ रेणुरिति स्मृतः' इति शिक्षा । 'कमठः कच्छपे पुंसि' इति मेदिनीकरः । 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः । 'पृषतैणर्ष्यरोहिताः' इत्यपि । **अपि चेदानीमिति** । पटीरतरुश्चन्दनवृक्षस्तस्य यः कोटरो रन्ध्रः स एव कुटी-

---

१. 'शङ्खध्वनिर्मङ्गलगीतिश्च' इति पाठः. २. 'मध्यमध्यासीनाः' इति पाठः.

गायन्ति कञ्चुकविनिह्नुतलोमहर्ष-
स्वेदोर्मयस्तव गुणानुरगेन्द्रकन्याः ॥ ५५ ॥

**विश्वामित्रः**—सखे दशरथ, प्रियमपि तथ्यमाह वैतालिकः ।

मन्दोद्धूतैः शिरोभिर्मणिभरगुरुभिः प्रौढरोमाञ्चदण्ड-
स्फायन्निर्मोकसंधिप्रसरदविगलत्संमदस्वेदपूराः ।
जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं
वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ ५६ ॥

रोऽल्पकुटी तामध्यासीनाः सर्पराजकन्यास्तव गुणान्गायन्ति । आशीभिर्दंष्ट्राभिरभ्यधिकमत्यन्तं भूषितोऽलंकृतो यो भोगः फणा तद्वत्यः । अधिकभूषणममृतरसेन निर्विषत्वात् । कीदृशीभिः । प्रत्यक्षरमक्षरेऽक्षरे । प्रतिर्वीप्सायाम् । क्षरितो यः सुधारसस्तेन निर्विषाभिः । सुधारसेन निर्विषत्वमुचितम् । कञ्चुकेन निर्मोकेन विनिह्नुतो गोपितो लोमहर्षो रोमोद्गमः स्वेदोर्मिघर्मकल्लोलश्च यासां ताः । 'पटीरश्चन्दनतरौ' इति मेदिनीकरः । कुटीर इत्यत्र 'कुटीशमीशुण्डाभ्यो रः' । 'अल्पा कुटी कुटीरः स्यात्' इत्यमरः । 'अधिशीङ्स्थासां कर्म' इति कर्मता । 'भोगः सुखेऽवने चाहेः शरीरफणयोरपि ।' इति मेदिनीकरः । 'स्वेदस्तु स्वेदने घर्मे' इति च । 'आशीः स्यादहिदंष्ट्रायाम्' इत्यपि । प्रियमपीत्यत्रापिशब्द एकत्र प्रियतथ्ययोर्दुर्लभतामाह । तथा च किरातार्जुनीये—'हितं मनोहारि च दुर्लभं वचः' इति । 'वैतालिका बोधकरा बन्दिनः स्तुतिपाठकाः' इत्यमरः । वैतालिकवाक्ये तथ्यत्वं स्थापयति—**मन्दोद्धूतैरिति** । जिह्वायुग्मेनाभिपूर्णं यदाननं मुखम् । सर्पाणां द्विजिह्वत्वात् । तेन विषमं कृत्वा समुद्गीर्णो यो वर्णोऽक्षरं तेनाभिरामं मनोहरं यथा स्यादेवम् । नारीणामविस्पष्टवचनानामेव रमणीयत्वात् । भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति गायन्ति । वेलायां समुद्रतीरे यः शैलः पर्वतस्तस्याङ्कभाजः पर्वतमध्यस्थाः । 'भजो ण्विः' शिरोभिर्लक्षिताः । इत्थंभूतलक्षणे तृतीया । मणिभरेण गुरुभिर्गुरुतरैः । तादृशसर्पशिरसि मणेरवश्यंभावात् । अत एव मन्दोद्धूतैर्लघुलघु चालितैः । प्रौढ उद्गतो रोमाञ्चो दण्ड इव रोमाञ्चदण्डः । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः । तेन स्फायन्वृद्धिं गच्छन् । आत्मनेपदानित्यत्वादत्र न तङ् । यो निर्मोकसंधिः कञ्चुकावकाशस्तस्मात्प्रसरन्नविगलंश्च संमदो हर्षः स्वेदपूरो घर्मप्रवाहो यासां तास्तथा । प्रसरदविगलदित्येतयोः संमदस्वेदपूरयोर्यथाक्रममन्वयः । यद्वोभयमुभयत्रान्वयि । भुजगवधूनां हर्षातिशयेन रोमाञ्चदण्डो वृत्तस्तेन निर्मोकसंधिरुच्छ्वसितः । अनयोश्च मध्यं स्वेदपूरैः पूरितं संध्यभावात्तन्न गलितमिति निर्गलितोऽर्थः । 'नाटकाङ्केऽपि संधिः स्यादवकाशेऽपि चेष्यते' इति धरणिः । 'प्रमोदामोदसंमदाः' इत्यमरः । 'वेला तत्तीरनीरयोः' इति च । प्रत्यासीदति प्रत्यासन्नो भवति । दीक्षा यज्ञः । निष्ठुराणामिति निर्धारणे षष्ठी । प्रथमे आद्याः ।

(सविनयविलक्षस्मितं च ।) राजर्षे, प्रत्यासीदति दीक्षाप्रवेशसमयः । तदेवंविधमधुरगोष्ठीभङ्गनिष्ठुराणां प्रथमे तावद्वयमेव भवितुमिच्छामः ।

(दशरथो रामलक्ष्मणाववलोक्य बाष्पभरोत्तरङ्गितलोचनो मुनिं प्रति 'भगवन्' इत्यर्धोक्ते वाचःस्तम्भं नाटयति ।)

**वामदेवः**—(ससंभ्रमम् ।) भगवन्कौशिक, साधय । शिवाः सन्तु पन्थानो वत्सयो रामलक्ष्मणयोः ।

(इत्युत्थाय सर्वे यथोचितमाचरन्ति ।)

**विश्वामित्रः**—एवमास्यतां भवद्भिः । (इति राजपुत्राभ्यामनुगम्यमानो निष्क्रान्तः ।)

**दशरथः**—(दीर्घमुष्णं च निःश्वस्य ।) वामदेव, नूनमिदानीमस्मानिव भगवन्तमपि कौशिकमकारणवत्सलं वत्सो मे रामभद्रः

क्वचिदस्मद्वियोगार्तिदुःखी दुःखाकरिष्यति ।
अपूर्वविषयालोकसुखी च सुखयिष्यति ॥ ५७ ॥

**वामदेवः**—( विहस्य ।) राजर्षे, वयं वा कौशिको वेति क्व पुनरेष कक्षाविभागो रामभद्रमाधुर्यस्य । पश्य ।

यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपा-
मुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता ।

---

'प्रथमचरम–' इति जसि विकल्पेन सर्वनामसंज्ञा । उत्तरङ्गित चञ्चलम् । साधय गच्छ । 'साधयेति च गत्यर्थः' इति भरतः । यद्वा साधय कार्यमिति शेषः । शिवाः कल्याणयुक्ताः । निःश्वस्येति । रामस्यापि विश्लेषो मयीति भावः । अकारणवत्सलं निरुपधिबन्धुम् । **क्वचिदिति** । 'वत्सो मे रामभद्रो भगवन्तं कौशिकमपि' इति मस्तकस्थमादायास्मद्वियोगार्त्योस्मद्विश्लेषपीडया दुःखी सन्दुःखाकरिष्यति दुःखितं करिष्यति । 'दुःखात्प्रातिलोम्ये' इति डाच् । अपूर्वविषयस्य, अर्थात्तपोवनविवर्तस्य, आलोकनेन सुखी सन्सुखयिष्यति सुखिनं करिष्यति । विषयो वस्तु । 'अर्तिः पीडाधनुष्कोट्योः' इत्यमरः । कक्षा स्पर्धा । 'कक्षा प्रकोष्ठः स्पर्धा च' इति । माधुर्यस्य सौशील्यस्य । वयं वा कौशिको वेत्यादि पोषकं सज्जनानामनिमित्तं प्रेमोत्थापयितुमाह—**यदिन्दोरिति** । अपां निधिः समुद्र इन्दोश्चन्द्रस्य यद्व्यसनं विपत्तिमुदयमुच्छ्रायं वान्वेत्यनुगच्छति, तत्रा-

---

१. 'दशरथः—(सविनयविलक्षस्मितम् ।); विश्वामित्रः—राजर्षे' इति पाठः. २. 'तावद्भवितुम्' इति पाठः. ३. 'उत्तम्भितलोचनः' इति पाठः.

अयं कः संबन्धो यदनुहरते तस्य कुमुदं
विशुद्धाः शुद्धानां ध्रुवमनभिसंधिप्रणयिनः ॥ ५८ ॥

**दशरथः**—(विमृश्य[1] ।) एवमेतत् ।

रत्नाकरो जनयिता सहजश्च वर्गः
किं कथ्यताममृतकौस्तुभपारिजाताः ।
किं तैरचिन्त्यमिह तत्पुनरन्यदेव
तत्त्वान्तरं कुमुदबन्धुरसौ यदिन्दुः ॥ ५९ ॥

(पुनरवलोक्य[2] ।) कथं लोचनपथमतिक्रान्तः सरामलक्ष्मणो भगवान् । तद्वयमपि वत्सप्रवासदुर्मनायमानां दक्षिणकोशलेश्वरसुतां देवीमुपेत्य सान्त्वयामः ।

(इति निष्क्रान्ताः सर्वे ।)

इति मुनीन्द्रसंवादो नाम प्रथमोऽङ्कः ।

---

नुगमेऽयमुपाधिः कारणम् । प्रयोजको धर्म इति यावत् । जनिकर्तुर्जननकारणस्य पितुः प्रकृतिता स्वभावो जयति । तत्र जन्यजनकभाव एव संबन्धः । जनकः समुद्रः, जन्य इन्दुः, अतो जन्यवृद्धिक्षयौ जनको धत्त इत्युचितमेव । यद्वा जननकारणस्य प्रकृतिः कार्यं भवति । तथा च समुद्रो जनकः सन्वृद्धिक्षयवानिति तज्जन्येऽपि वृद्धिक्षयौ युज्येते । उपाधिं विनापि व्यसनोदयौ दृष्टावित्याह—कुमुदं कर्तृ तस्य चन्द्रस्य यद्व्यसनमुदयं वानुहरतेऽनुगच्छत्यनुकरोति वा । चन्द्रे ह्युदयति सति कुमुदमुन्मीलति, तस्मिन्नस्तमिते निमीलति तदित्यनुगमेऽयं कः संबन्धो जन्यजनकभावादिः । अपि तु न कोऽपि । कथमेवमत आह—विशुद्धा इति । ध्रुवं तर्कयामि । विशुद्धाः शुद्धानामभिसंधानं विना प्रिया भवन्तीत्यर्थः । तथा च यद्यप्यत्र न संबन्धस्तथापि निरुपाधिरेव चन्द्रकुमुदयोः साहजिकी प्रीतिरिति भावः । प्रकृतेऽपि रामस्य तादृश एव गुणविभवो यत्सर्वान्सुखयतीति । अनुहरत इति 'हरतेर्गतताच्छील्ये' इति तङ् । 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः । 'जनिरुत्पत्तिरुद्भवः' इत्यपि । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः' इति मेदिनीकरः । 'ध्रुवं निश्चिततर्कयोः' इति विश्वः । प्रणयः 'प्रेम्णि विश्वासे' इति च । वामदेवोक्तमनुवदति—**रत्नाकर इति** । अस्य चन्द्रस्य रत्नाकरो जनयितोत्पादकः । सहजः सोदर्यो वर्गोऽमृतादयः किं कथ्यताम् । तदुपमानाभावात् । अमृतादिभिः सहजैस्तैः किम्, अपि तु न किमपि । इह पुनस्तदन्यदेवाचिन्त्यमचिन्तनीयस्वरूपं तत्त्वान्तरं स्वभावान्तरं स्वभावविशेषो यदसाविन्दुः कुमुदबन्धु-

---

1. 'विमृश्य' इति पुस्तकान्तरे नास्ति. 2. 'पुरोऽवलोक्य' इति पाठान्तरम्.

रित्यस्ति । तथा च स्वाभाविकरूपनिबन्धनो व्यपदेश इति भावः । अमृतकौस्तुभपारिजाता इत्यत्र 'समुदायिभ्योऽन्यः समुदायः' इति न्यायात्समुदायिभ्यो बहुवचनम् । 'सगर्भ्यसहजाः समाः' इत्यमरः । 'कौस्तुभो मणिः' इत्यपि । 'तत्त्वं स्वभावे सत्ये च' इति धरणिः । दक्षिणकोशलेश्वरसुतां कौशल्याम् । सान्त्वयामः समाश्वासयामः । 'अङ्के प्रवेशः पात्राणां नाहेतुः परिकीर्तितः । अर्थंप्रसङ्गमालम्ब्य तेषां निर्गम इष्यते ॥ विस्तारो गुणसंपत्तेः स्वभावादुद्धृतिर्नहि । वैरस्याय भवेदङ्को दीर्घो रोगीव पण्यताम् ॥ नैकत्राङ्के प्रशंसन्ति बहुपात्रविभावनाम् । न चैकैकरसोद्रेकं नापि विस्तरयोजनम् ॥ क्रोधप्रसादशोकाः शापोत्सर्गौ च विद्रवोद्वाहौ । अद्भुतदर्शनमङ्के क्वापि प्रत्यक्षजा न स्युः ॥ युद्धं राज्यभ्रंशो मरणं नगरोपरोधं च । अप्रत्यक्षाणि भवन्ति प्रवेशकैः संविधेयानि ॥ न कार्यं शयनं रङ्गे नाट्ययोगमपेक्षता । केनचिद्व्यपदेशेन तद्विच्छेदं च कारयेत् ॥ शस्त्राघातं वधं चैव मैथुनं युद्धमेव च । नैते प्रत्यक्षतो नाट्ये दर्शनीयाः कथंचन ॥ भवेदर्थवशाद्वापि पुरुषः सहितः स्त्रिया । न च तच्चुम्बनं कुर्यान्निर्व्योजालिङ्गनं न च ॥ दन्तच्छेदं नखच्छेदं तथा लज्जाकरं च यत् । भोजनं सलिलक्रीडां रङ्गमध्ये परित्यजेत् ॥ बीजार्थयुक्तियुक्तं च कृत्वा कार्यं यथा रसम् । निष्क्रमं तु ततः कुर्यात्सर्वेषां रङ्गवर्तिनाम् ॥' इति नाटकसूत्रात्तथा समाचरन्नेव कविराह—इति निष्कान्ताः सर्वे इत्यादि । अङ्कलक्षणमाह भरतः—'प्रस्तुतार्थोपसंहारो यत्राङ्कः सोऽभिधीयते' इति । अत्र च प्रियापरितोषापेक्षया प्रस्तुतार्थोपसंहार इति सर्वं सुन्दरमिति ॥

इति समस्तप्रक्रियाविराजमानरिपुराजकंसनारायणभवभक्तिपरायणश्रीहरिनारायण-
पदसमलंकृतमहाराजाधिराजश्रीमद्भैरवसिंहदेवप्रोत्साहितवैजोलीग्राम-
वास्तव्यखौआलवंशप्रभवश्रीरुचिपतिमहोपाध्यायविरचिताया-
मनर्घराघवटीकायां प्रथमोऽङ्कः ।

द्वितीयोऽङ्कः ।

(ततः प्रविशति यजमानशिष्यः ।)

**शिष्यः**—अये, प्रभातप्रायैव रजनी । तथा हि ।

तमोभिः पीयन्ते गतवयसि पीयूषवपुषि
ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिशः ।
सरोजानां कर्षन्नलिमयमयस्कान्तमणिव-
त्क्षणादन्तःशल्यं तपति पतिरद्यापि न रुचाम् ॥ १ ॥

अपि च ।

जाताः पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारकाः
प्राचीमङ्कुरयन्ति किंचन रुचो राजीवजीवातवः ।

---

विश्वामित्रयागरक्षणार्थं रामभद्रस्य तपोवनागमनं तत्प्रासङ्गिकाहल्यायाः पूर्वरूपप्राप्तिस्ताटकावधो मारीचादेर्दूरापसरणादिकं सम्यक्सूचयितुं शुनःशेपप्रवेशमाह—**ततःप्रविशतीति** । एतावानेव द्वितीयाङ्कार्थः । यजमानो यः सोमवति यज्ञे दीक्षितः । स च कौशिकस्तस्य शिष्यः शुनःशेपः । प्रभातप्राया प्रभातसदृशी । 'प्रायो बाहुल्यतुल्ययोः' इति धरणिः । प्रभातप्रायत्वमस्याः कुतोऽवगतमित्यत आह—**तमोभिरिति** । तमोभिरन्धकारैर्दिशः पीयन्ते । आच्छाद्यन्त इत्यर्थः । पीयूषवपुष्यमृतमहसि चन्द्रे गतवयसि गलितवयसि वृद्धे सति । पश्चिमाशामारोहतीति यावत् । कीदृशैः । ज्वलिष्यन्सूर्योदयाद्यो मार्तण्डोपलपटलः सूर्यकान्तमणिसमूहस्तस्य धूमैरिव । धूमस्य श्यामत्वात्तमस्त्वेन रूपणम् । अन्योऽपि धूमो ज्वलिष्यतो वह्नेः पूर्वं दिशो व्याप्नोतीति ध्वनिः । समिदाहरणरूपगुरुकार्याय त्वरमाणः सत्वरमनुदेध्यमाणं सूर्यमप्याक्षिप्याह—रुचां पतिः सूर्योऽद्याप्येवंवृत्तेऽपि न तपति । नोदेतीत्यर्थः । किं कुर्वन् । सरोजानां पद्मानामलिमयं भ्रमररूपमन्तःशल्यमन्तःस्थितलोहभागं कर्षन्बहिः कुर्वन्सन् । अयस्कान्तमणिवदिति समाकर्षणमात्रदृष्टान्तः । यथायस्कान्तो मणिविशेषोऽयो लोहमाकर्षति तथेत्यर्थः । यद्वा सरोजानामन्तः पद्माभ्यन्तरादलिमयं शल्यं कर्षन् । अन्तःशब्दोऽव्ययं पञ्चम्यन्तः । पञ्चम्याश्चाव्ययाल्लुक् । यद्वायो लोहकान्तमणिर्लोहाकर्षणमणिः । सरोजानामित्यादिनादित्योद्गमो न वृत्त इति सूच्यते । आदित्योदये सति पद्मविकासस्तद्विकासे च तत्र स्थितानामलीनां बहिर्निःसरणमिति स्वरूपानुवादः । 'विकर्तनार्कमार्तण्डमिहिरारुणपूषणः' इत्यमरः । 'उपलः प्रस्तरे रत्ने' इति मेदिनीकरः । इदानीमविनाभाविलिङ्गमाह—**जाता इति** । पक्वो यः पलाण्डुः 'पियाजु' इति प्रसिद्धस्तद्वत्पाण्डुर्धूसरा मधुरा मनोहरा च या कान्तिस्तत्क्षेपिकास्तारका जाता वृत्ताः । किंचन रुचः किंचिद्दीप्तयः प्राचीं पूर्वां दिशमङ्कुरयन्त्युद्गे-

लूतातन्तुवितानवर्तुलमितो विम्बं दधच्चुम्बति
प्रातः प्रोपितरोचिरम्बरतलादस्ताचलं चन्द्रमाः ॥ २ ॥

(सर्वतोऽवलोक्य च ।)

दिङ्मण्डलीमुकुटमण्डनपद्मराग-
रत्नाङ्कुरे किरणमालिनि गर्भितेऽपि ।
सौखप्रसुप्तिकमधुव्रतचक्रवाल-
वाचालपङ्कजवनीसरसाः सरस्यः ॥ ३ ॥

---

दयन्ति । अङ्कुरयुक्तां कुर्वन्तीत्यर्थः । यद्वा किं चापि चेत्यर्थः । रुचो दीप्तयः पूर्वां दिशं नाङ्कुरवतीं कुर्वन्ति । तथा चाद्याप्यरुणोदयो न वृत्त इत्यर्थः । कीदृश्यः । राजीवानां पद्मानां जीवातवो जीवनौषधानि । आदित्यसंवन्धिन्य इत्यर्थः । अङ्कुरोऽस्यास्तीति 'तत्करोति' इति णिच् । 'णाविष्ठवत्प्रातिपदिकस्य' इतीष्ठवद्भावात् 'विन्मतोर्लुक्' । किंचनशब्दोऽव्ययं किंचिदर्थे । चन्द्रमा इतोऽम्बरतलादाकाशात् । गत्वेति शेषः । अस्ताचलमस्तपर्वतं चुम्बत्यालिङ्गति । 'चुवि वक्त्रसंयोगे' इति वक्त्रपदमुपलक्षणम् । 'अङ्गारचुम्बितमिव व्यथमानमास्ते' इति भवभूतिप्रयोगदर्शनात् । तलं स्वरूपम् । 'स्वरूपानूर्ध्वयोस्तलम्' इत्यमरः । यद्वाम्बरतलादितो गतश्चुम्बति । 'इण् गतौ' क्तः । लूता मर्कटकृमिः । मर्कटसूत्रविस्तारवद्वर्तुलं विम्बं मण्डलं दधत् । तनोतेर्घञ् । प्रोपितरोचिः । अपगततेजा इत्यर्थः । दधदिति 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । 'विसप्रसूनराजीव—' इत्यमरः । 'जीवातुर्जीवनौषधम्' इति । 'हरिणः पाण्डुरः पाण्डुः' इति च । साश्चर्यमाह—**दिङ्मण्डलीति** । सौखप्रसुप्तिकाः सुखशयनप्रश्नकर्तारो ये मधुव्रता भ्रमरास्तेषां चक्रवालं मण्डलं तेन वाचाला वहुभाषिणी । सशब्देति यावत् । या पङ्कजवनी पद्मवनी तया सरसाः सोल्लासाः सशब्दा वा । 'रस शब्दे' । 'पुंसि संज्ञायां घः प्रायेण' इति घः । सरस्यः सरोवराः । सन्तीति शेषः । जाता इति वानुषञ्जनीयम् । योऽपि सुखशयनप्रष्टा सोऽपि प्रातरुत्थायागच्छति । मधुकरसमूहा अपि प्रातरेव मधुपानाय तत्र गच्छन्तीति सुखसुप्तप्रष्टृत्वेन रूपिताः । सौखप्रसुप्तिक इति 'पृच्छतौ सुस्नातादिभ्यः' इति ठक् । किरणमालिनि सूर्ये गर्भितेऽपि संजातगर्भे सति । तारकादित्वादितच् । गगनतिरोहितेऽपीत्यर्थः । यद्वा गर्भ इवाचरति । 'सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः' इति क्विपि कृते क्तः । कीदृशे । दिशां मण्डली दिक्समूहस्तस्या यन्मुकुटमलंकारभेदस्तस्य मण्डनः शोभयिता यः पद्मरागः । 'क्रुधमण्डार्थेभ्यश्च' इति कर्तरि करणे वा युच् । पद्मरागश्चासौ रत्नं चेति कर्मधारयः । तस्याङ्कुर इवाङ्कुर इति रूपकम् । एतेनाभरणत्वेनातिमनोहारित्वमुक्तम् । यदाह कालिदासः—'आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः । उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥' इति । सूर्यस्याभिनवत्वेन मनोहारित्वाल्लोहितत्वाच्च पद्मरागरत्नाङ्कु-

अपि च ।

प्राचीविभ्रमकर्णिकाकमलिनीसंवर्तिका संप्रति
द्वे तिस्रो रमणीयमम्बरमणेर्द्यामुच्चरन्ते रुचः ।
सूक्ष्मोच्छ्वासमपीदमुत्सुकतया संभूय कोषाद्बहि-
र्निष्क्रामद्भ्रमरौघसंभ्रमभरादम्भोजमुज्जृम्भते ॥ ४ ॥

अपि च ।

एकद्विप्रभृतिक्रमेण गणनामेषामिवास्तं यतां
कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्तिकाः ।

---

रत्वेन रूपणम् । अङ्कुरपदप्रक्षेपोऽतिलौहित्यप्रकटनार्थः । 'मकि मण्डने' । 'मकेरुट् न-लोपश्च' इति न्यासकारमतेन मकुट इति भवति । 'मकुटं मुकुटं विदुः' इति शब्दभेदा-न्मुकुटशब्दोऽप्यस्तीत्यवधेयम् । अनेन पद्येनारुणोदयः सूचितः । 'अङ्कुरोऽभिनवोद्भिदि' इत्यमरः । 'चक्रवालं तु मण्डलम्' इति च । कलिकात्रोटने निन्दाश्रवणाद्विकसितानामेव कुसुमानां त्रोटने बोधिते तानि विकसितानि न वेति ज्ञातुं सर्वतोऽवलोकनमपूर्वं प्रकटयन्सू-र्यकिरणानां किंचिदुदयमाह—**प्राचीत्यादि** । अम्बरमणेरादित्यस्य द्वे द्विसंख्याकास्ति-स्त्रिसंख्याका रुचः किरणा रमणीयं यथा स्यादेवं द्यामुच्चरन्ते । आकाशं प्रति गच्छन्ती-त्यर्थः । 'उदश्चरः' इत्यादिना तङ् । कीदृश्यः । प्राच्या दिशो विलासार्थं कर्णिका कर्णाभ-रणं या कमलिनी पद्मिनी तस्याः संवर्तिका नवदलानीव । एतदुक्तं भवति—प्राचीवि-लासिन्या पद्मदलभ्रमादभिनवसूर्यकिरणा एवाभरणीकृता इति भावः । यद्वा प्राच्या दिशो विभ्रमेण विलासेन कर्णिकाः कर्णालंकाराः । 'कर्णललाटात्कनलंकारे' इति कन् । कमलिनीसंवर्तिकाः कमलिनीनवपत्राणि । यद्वा संवर्तयन्ति प्रकाशयन्ति संवर्तिकाः । ण्वुल् । प्रकाशिका इत्यर्थः । अनयोर्विशेषणसमासः । भिन्नमेव वा पदम् । तस्य कार्य-माह—अल्पकिरणोदयात्सूक्ष्मोच्छ्वासमल्पप्रकाशमपीदमम्भोजं पद्ममुज्जृम्भतेऽत्यर्थं वि-कसति । न तु किंचिदुन्मीलितं सत् । कुतो हेतोरत्यन्तं विकसतीत्यत आह—कस्मात् । संभूय मिलित्वोत्सुकतयोत्कण्ठितत्वेन कोषात्कुड्मलाद्बहिर्निष्क्रामन्निर्गच्छन्यो भ्रमरौघ-स्तस्य संभ्रमभरात्त्वरातिशयात् । यद्वा सूक्ष्मोच्छ्वासं संभूय प्राप्य । 'संभूतिर्वर्तने प्राप्तौ' इति भरतः । अल्पदीधित्युदयात्किंचिद्विकसितं पद्ममनन्तरमेकदैव बहिर्गच्छद्भिर्भ्रमरैर-त्यन्तविकासः कृत इति तात्पर्यम् । निष्क्रामदिति 'क्रमः परस्मैपदेषु' इति दीर्घत्वम् । 'कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि । क्रमुकादिच्छदांशेऽब्जे वराटे कर्णभूषणे ॥' इति विश्वः । 'संवर्तिका नवदलम्' इति च । संभ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपि ॥' इ-त्यपि । सूर्यकिरणाः क्रमेणोद्गच्छन्त इत्यत्र परिहासपूर्वं मानमाह—**एकद्वीति** । अस्तं यतामस्तं गच्छतामेषां किरणानामेकद्विप्रभृतिक्रमेणैकद्व्यादिरूपेण गणनामिव कुर्वाणा

भूयोऽपि क्रमशः प्रसारयति ताः संप्रत्यमूनुद्यतः
संख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान् ॥ ५ ॥

अपि च ।

प्रत्यासन्नसुरेन्द्रसिन्धुरशिरःसिन्दूरसान्द्रारुणा
यत्तेजस्त्रसरेणवो वियदितः प्राचीनमातन्वते[1] ।
शङ्के संप्रति यावदभ्युदयते तत्तर्कुटङ्कोन्मृजा-
रज्यद्बिम्बरजश्छटावलयितो देवस्त्विषामीश्वरः ॥ ६ ॥

---

नलिनी पद्मिनी या दशशतान्यम्भोजसंवर्तिकाः पद्मनवदलानि समकोचयत्संकोचितवती, ताः संवर्तिका दशशतान्येव संप्रतीदानीं भूयोऽपि पुनरप्युद्यत उदयं गच्छतो भानोः सूर्यस्य सहस्रं करान्कौतुकेनेव संख्यातुं गणयितुं क्रमशः प्रसारयति । कमलानां सहस्रपत्रत्वाद्भानोरपि सहस्रकिरणत्वाद्यथा यथा किरणा अस्तं यान्ति तथा तथा कमलिनीपत्राणि मुद्रितानि भवन्ति । यथोदयन्ते तथा तथा विकसितानि भवन्तीति भावः । यतामिति इणः शतरि रूपम् । यद्यपि दशशतशब्दो नपुंसकस्तथापि संवर्तिकाशब्देन स्त्रीलिङ्गेन विशेष्यभावो भवत्येव । 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः' इति वचनात् । विशेषणविशेष्यभावश्चार्थयोरिति लिङ्गविशेषोपस्थाप्यताया अतन्त्रत्वात् । सहस्रं करानित्यत्र करगतं बहुत्वं सहस्रगतं चैकत्वं विवक्षितम् । अतो भिन्नवचनत्वेऽपि सामानाधिकरण्यम् । 'करो वर्षोपले रश्मौ' इति मेदिनीकरः । अनेककिरणेनालंकुर्वतोऽपि नभस्तलं सूर्यस्योदयं प्रति कुतो विलम्ब इत्यत्र निमित्तमाशङ्कते—**प्रत्यासन्नेति।** शङ्के तर्कयामि । त्विषामीश्वरः पतिर्देवः सूर्यः । तदिति पूर्वप्रसिद्धिख्यापनाय । तर्कुः कुम्भकारस्य चक्राकारशिलाभाण्डं तत्र या टङ्केन दारणेन 'टांकी' इति प्रसिद्धेन । उन्मृजा शुद्धिः । तक्षणमिति यावत् । षित्त्वादङ् । तेन रज्यद्रक्तीभवत् । कर्मकर्तरि श्यन्, परस्मैपदं च । यद्बिम्बं मण्डलं तस्य रजश्छटया कणसमूहेन वलयितो वेष्टितः सन् यावदभ्युदयत उदेष्यति । 'यावत्पुरानिपातयोर्लट्' इति भविष्यति लट् । तावदेव ततत्रसरेणव इतोऽस्मिन्प्रदेशे प्राचीनं पूर्वदेशसंबन्धि वियदाकाशमातन्वत आच्छादयन्ति । प्राचीनमित्यत्र प्राचः 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । इत इति आद्यादित्वात्तसिः सप्तम्यन्तात् । यद्वा इतोऽस्मात्कारणाच्छङ्क उत्प्रेक्ष इति योज्यम् । यद्वा यावदित्युपक्रम उदयत इति वर्तमानतैव । 'अय गतौ' तङि रूपम् । 'त्वष्टृटङ्कोन्मृजा' इति पाठे त्वष्टुर्विश्वकर्मण इत्यर्थः । कीदृशाः । प्रत्यासन्नो निकटो यः सुरेन्द्रः । पूर्वदिगधिपत्वात् । तस्य यः सिन्धुरो हस्ती ऐरावतस्तस्य मस्तकसिन्दूरेण सान्द्रं निविडं यथा तथारुणा अत्यन्तलोहिताः । न तु स्वभावतः, किं तूपाधिसंभेदात्तथा । 'टङ्को नीलकपित्थे च खनित्रे

---

१. 'आचिन्वते' इति पाठान्तरम्.

पुरोऽवलोक्य ।) कथमिदमुदयाचलमौलिमाणिक्यमर्कमण्डलमद्यापि न विहा-यस्तलमलंकरोति । तदस्मद्गुरोर्वितायमानयज्ञस्य कुलपतेः कौशिकस्यादे-शात्समिदाहरणाय प्रस्थितोऽस्मि । तत्त्वरितं गच्छामि । (इति परिक्रामति ।)

(प्रविश्य संभ्रान्तो वटुः ।)

**वटुः**—अज्ज सुणस्सेह, किं वि अच्चरिअं भीसणं च वट्टदि ।

**शुनःशेफः**—(सचमत्कारं परिवृत्य ।) सखे पशुमेढ्र, किमाश्चर्यं भीषणं च वर्तते ।

**पशुमेढ्रः**—अज्ज रामो त्ति को वि खत्तिअकुमारो आअदो त्ति सु-णिअ कोदूहलेन धावन्तस्स तवोवणपेरन्तपरिट्ठिदा पत्थरपुत्तलिआ सच्चमाणुसीभविअ मम ज्जेव्व संमुहं परावडिदा । तं पेक्खिअ उत्तरास-ङ्गवक्कलं वि उज्झिअ पलायिदो म्हि ।

**शुनःशेफः**—(विहस्य ।) सखे, साधु कृतम् । दिष्ट्या हि जीवतः पुनरावृत्तिः ।

---

टङ्कणे स्त्रियाम्' इति मेदिनीकरः । महामृगः पुष्करिदीर्घमारुतौ विलोमजिह्वो जलका-क्षसिन्धुरौ' इति हस्तिपर्याये हारावली । 'वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी' इत्यमरः । चिरतरसमयापेक्षणे समिदाहरणत्वरयोत्पित्सुराह—**कथमिति** । अद्यापि । एतावतापि कालेनेत्यर्थः । विहायस्तलमाकाशम् । वितायमानयज्ञस्य विस्तारीक्रियमाण-यज्ञस्य । 'तनोतेर्यकि' इत्यात्वम् । वटुवाक्ये—**अज्जेत्यादि** । 'आर्य शुनःशेफ, किमप्या-श्चर्यं भीषणं च वर्तते' [इति च्छाया ।] 'आर्येति ब्राह्मणं ब्रूयात्' इति भरतः । शुनःशेफ इत्यत्र 'शेफपुच्छलाङ्गूलेषु शुनः संज्ञायाम्' इत्यलुक् । पशुमेढ्रवाक्ये—**अज्जेत्यादि** । 'अद्य राम इति कोऽपि क्षत्रियकुमार आगत इति श्रुत्वा कुतूहलेन धावतस्तपोवनपर्य-न्तपरिस्थिता प्रस्तरपुत्रिका सत्यमानुषीभूय ममैव संमुखं परापतिता । तां प्रेक्ष्य उत्तरा-सङ्गवल्कलमप्युज्झित्वा पलायितोऽस्मि' [इति च्छाया ।] अत्र पुत्रिका 'पुतळी' इति प्र-सिद्धा । परापतितागता । उत्तरासङ्गमुपरिवस्त्रम् । उज्झित्वा त्यक्त्वा । शुनःशेफः सो-पहासमाह—सखे, साधु कृतमिति । पुनरावृत्तिः पुनरागमनम् । हि यस्माज्जीवत एव दृष्टा तस्मात्त्वमुत्तरीयं त्यक्त्वा समायातोऽसीति त्वया साधु शोभनं कृतम् । जीवने सति पुनरागम्यत इति भावः । यद्वा पुनरावृत्तिः पुनर्जन्म । 'पुनरावृत्तिदुर्लभम्' इत्यादौ तथा दर्शनात् । तेन जीवत एव तावदिह तव पुनर्जन्म दृष्टमित्यर्थः । यद्वा पुनरावृत्तिरेव जीवतो जनस्य मया दृष्टा । लोकोक्तिरियम् । 'पुनरावृतिः' इति क्वचित्पाठः । तत्र

१. 'नभःस्थलम्' इति पाठः. २. 'त्वरितम्' इति पाठः. ३. 'गोदमतवोवण' इति पाठः.

**पशुमेढ्रः**—ता रक्खदु मं अज्जो इमाए दुट्ठरक्खसीए मुहादो । (इति वेपमानः पादयोः पतति ।)

**शुनःशेफः**—(सस्मितमुत्थाप्यालिङ्ग्य च ।) [1]वयस्य, शृणोषि भगवतो गोतमस्य महर्षेरहल्यां नाम धर्मदारान् ।

**पशुमेढ्रः**—जा जणअवंसपुरोहिदस्स तत्थभवदो सदाणन्दस्स जणणी । [2]तदो तदो ।

**शुनःशेफः**—सेयं पुरा पुरुहूतखण्डितचरित्रा तस्य दीर्घतपसो मुनेर्मन्युना निजमेव तदिन्द्रियदौर्बल्यमेवं विवर्तमानमनुभवन्ती संप्रत्यस्य रघुराजपुत्रस्य तेजसा तस्मादन्धकारान्निरमुच्यत । तदलमावेगेन ।

**पशुमेढ्रः**—(उन्मील्य चक्षुषी सर्वतोऽवलोक्य) । अहो अच्चरिअं । अज्जस्स पसादेण पुणो वि जीअलोए पविट्ठो म्हि । तह वि सङ्कज्जरो अज्ज वि ण मं परिच्चअदि । ता अज्ज सुणस्सेह, मुहुत्तअं विसमीअदु ।

---

जीवतो जनस्य पुनरावृत्तिः पुनरावरणम् । वास इति यावत् । हि यतो दृष्टातस्त्वमुत्तरीयं त्यक्त्वा समायातोऽसीति भद्रं कृतमिति भावः । **ता रक्खदु इति ।** तद्रक्षतु मामार्य एतस्या दुष्टराक्षस्या मुखात्' [इति च्छाया ।] वेपमानः कम्पमानः । आरोपितभयादिति भावः । शुनःशेफोऽस्य त्रासोपशमनार्थमहल्यावृत्तान्तकथनायोपक्रमते—वयस्येत्यादि । 'दाराः पुंभूम्नि' इत्यमरः । पशुमेढ्रवाक्ये—**जा इति ।** या जनकवंशपुरोहितस्य तत्रभवतः शतानन्दस्य जननी । ततस्ततः' [इति च्छाया ।] इह तत्रभवतः पूज्यस्य । 'जननी तु दयामात्रोः' इति विश्वः । **सेयमित्यादि ।** सेयमहल्या पुरुहूतेनेन्द्रेण खण्डितं नाशितं चरित्रं यस्यास्तादृशी दीर्घतपसो मुनेर्गौतमस्य । दीर्घं तपो यस्येति बहुव्रीहिः । यद्वा दीर्घतपा इति गोतमस्यैव नाम । तस्य मन्युना क्रोधेन । शापेनेति यावत् । निजं स्वीयमिन्द्रियदौर्बल्यमिन्द्रियासामर्थ्यमेवंविधं प्रस्तरपुत्रिकारूपं विवर्तमानं परिणतमनुभवन्ती संप्रत्यस्य रघुराजपुत्रस्य रामस्य तेजसा प्रभावेण रश्मिना वा तस्मादन्धकाराच्छापात् । अन्धकार इवान्धकारः शापः । यद्वान्धमदृशं करोतीत्यन्धकारो मुनिशाप एव । कर्मण्यण् । निरमुच्यत स्वयं मुक्ता । 'मुच्लृ मोक्षणे' लङि कर्मकर्तरि रूपम् । अन्यदप्यन्धकारं तेजसा तिरस्क्रियत इति ध्वनिः । कथा चात्रातिप्रसिद्धैव । अलं निष्फलम् । आवेगेन भयेन । **अहो इति ।** 'अहो आश्चर्यम् । आर्यस्य प्रसादेन पुनरपि जीवलोके प्रविष्टोऽस्मि । तथापि शङ्काज्वरोऽद्यापि न मां परित्य-

---

१. 'वत्स, शृणोषि'; 'वयस्य, न भेतव्यम् । 'शृणोषि' इति पाठः. २. 'शुनःशेफः—अथ किम् । पशुमेढ्रः—तदो तदो' इति पाठः.

*. रात्रि: कस्मात् - प्रसमयात् भूतानि नक्तञ्चारीणि उपरमयतीतराणि ध्रुवीकरोति वा - दीयन्ते अस्यामवश्याया इति रात्रि: - इति यास्क:



**शुनःशेफः**—सखे, भयमिति किमेतद्ब्राह्मणस्य । तत्पर्यवस्थापयात्मानम् ।

(इत्युपविशतः ।)

**पशुमेढ्रः**—(चिरं विमृश्य निःश्वस्य च सविस्मयम् ।) कधं विसयमिअतिण्हासलज्झलाए भअवदो हरिणो वि हरिणदा विटप्पीअदि ।

**शुनःशेफः**—(विहस्य ।) साधु ब्रवीषि । अल्पीयान्खल्वयं लोकः कथमैहिकसुखाध्यवसायाद्वै अमूर्भूयस्यो रात्रयः पराहण्यन्ते । किं तु मनोहारिभिराहार्यैराह्रियमाणलोचनद्वितयस्यापि न जनो विवेकमङ्कुशयितुमर्जति । तदार्य शुनःशेफ, मुहूर्तं विश्रम्यताम्' [इति च्छाया ।] अत्र जीवलोके प्रविष्टोऽस्मि जीवितोऽस्मि । पर्यवस्थापय संवृणु । **विमृश्येत्यादि** । अहह सुरपतिरपि कथमेतादृशं कर्म कृतवानिति भावः । अत एव निःश्वासोपि । **कधमिति** । 'कथं विपयमृगतृष्णासलज्जलया भगवतो हरेरपि हरिणता विटप्यते' [इति च्छाया ।] इह विषय एव मृगतृष्णा मरीचिका तस्याः सलज्जलयास्फालनेनाघातेन । अनर्थ एवार्थित्वजननात् । अतिशोभया वा । भगवतो हरेरपीन्द्रस्यापि हरिणता हरिणत्वम् । पशुत्वमिति यावत् । यद्वा हरिणता पाण्डुरत्वम् । तत्तु मन्मथभावात् । 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः । विटप्यतेऽर्ज्यते । विटपिरयं चुरादिरर्जने वर्तते । यद्वा 'अर्जतेर्विटप्यः' इति प्राकृतसूत्रात्तथा । विषयस्य विरसोदर्कतयासारत्वेन मरीचिकया रूपणम् । 'मृगतृष्णा मरीचिका' इत्यमरः । 'हरिश्चन्द्रार्कवाताश्वशक्रभेकयमादिषु' इति मेदिनीकरः । 'मृगः पशौ कुरङ्गे च' इति च । 'स्यादास्फाले सलज्जला' इति हारावली । 'सलज्जला तु शोभायाम्' इति रत्नकोषः । अल्पीयानल्पाशयः । अत्यर्थेनाल्पो वा । 'द्विवचनविभज्य–' इतीयसुन् । अल्पीयस्त्वमेव द्रढयति—**कथमिति** । ऐहिकमेतज्जन्मजम् । इहशब्दाद्भवार्थे ठञ् । अध्यात्मादित्वाद्वा । ऐहिकसुखाध्यवसायादेतज्जन्मसुखयत्नात् । वै पादपूरणे संबोधने वितर्के वा । अमूरामुष्मिक्यो रात्रयः सुखानि पराहण्यन्ते नाश्यन्ते । लोकेनेति शेषः । 'हन्तेरत्पूर्वस्य' इति णत्वम् । रात्रिशब्देन सुखमुपलक्ष्यते । सुखकालत्वात् । अत एव क्षणमुत्सवं ददातीति क्षणदेति रात्रिव्यपदेशः । अथवा विषयस्यैव तादृशं महत्त्वमित्याह—किं त्विति । मनोहारिभिराहार्यैराभरणादिभिराह्रियमाणस्याकृष्यमाणस्य लोचनद्वितयस्यापि जनो लोको विवेकं निर्मलज्ञानमङ्कुशयितुमङ्कु-

१. 'पर्युपस्थापय'; 'पर्यवष्टम्भय' इति पाठौ. २. 'विश्रम्य विमृश्य च' इति पाठः. ३. 'ब्रवीति भवान्' इति पाठः. ४. 'अन्यथा कथम्' इति पाठः. ५. 'सुखाध्यवसायलुब्धैः'; 'सुखाध्यवसायात्' इति पाठौ. ६. 'आह्रियमाणस्य' इति पाठः. ७. 'द्वयस्य' इति पाठः. ८. 'ईष्टे' इति पाठः.

धीष्टे । किं पुनर्नयनसहस्रतयस्य तादृशि विभवे मरुतां पतिः । चक्षुःप्रीतिमुद्भवन्तीमनूद्भवन्ति चापराणि कुसुमचापचापलानि ।

**पशुमेढ्रः**—(विहस्य ।) मण्णे एदाए एव्व मुणिघरणीए पुण्णपरिणामो एत्थ रामभद्दस्स पवासे कारणम् ।

**शुनःशेफः**—इदं तावत्प्रथमम् ।

**पशुमेढ्रः**—(साभ्यर्थनम् ।) अज्ज, दुदीअं वि सुणिदुं इमिणादे वअणेण पज्जुस्सुओ म्हि ।

**शुनःशेफः**—सखे, त्वयि किमकथनीयं नाम । अस्ति किष्किन्धायां पुरंदरस्य नन्दनो वालिर्नाम [1]प्लवगराजः । तं च रजनीचरचक्रवर्तिना दशकंधरेण सह [2]प्रवृत्तमैत्रीकमवलोक्य वानराच्छभल्लगोलाङ्गूलप्रभृतीनामाचार्यः सर्वा[3]मात्यानुमतो जाम्ववानवादीत् ।

---

शीकर्तुं नाधीष्टे न समर्थो भवति । किं पुनर्नयनसहस्रतयस्य सहस्रावयवस्य तादृश्यनिर्वचनीये विभवे वागपारसंपत्तौ सत्यां विवेकमङ्कुशं कर्तुं मरुतां पतिरिन्द्रोऽधीश्वरः स्यात् । अपि तु न कदापि । यतः—'यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥' इति । लोचनद्वितयस्येत्यत्र 'अधीगर्थ–' इत्यादिना कर्मणि षष्ठी । नयनसहस्रतयस्येति 'संख्याया अवयवे तयप्' । 'सहस्रनयनस्य' इति क्वचित्पाठः । तत्र सहस्रं च तानि नयनानि चेति विशेषणसमासे 'दिक्संख्ये संज्ञायाम्' इति नियमादसंज्ञायां समास एव न स्यात् । बहुवचनप्राप्तिश्च । उच्यते—सहस्रं नयनानामिति समाहारे द्विगुः । पात्रादित्वात्स्त्रीत्वनिषेधः । त्रिभुवनवत् । अनयोर्मानुपेन्द्रयोर्नेत्रवैषम्यकथनेन प्रकृते किं प्रतिपादितं स्यादित्याशङ्क्य चक्षुषस्तत्रासाधारणीं कारणतामाह—चक्षुःप्रीतीति । उद्भवन्तीमुपजायमानां चक्षुःप्रीतिं चाक्षुषरागमनुलक्ष्यीकृत्यापराण्यधिकानि कुसुमचापचापलानि मन्मथविकारा उद्भवन्ति । 'अनुर्लक्षणे' इति द्वितीया । **मण्णे इत्यादि** । 'मन्ये एतस्या एव मुनिगृहिण्याः पुण्यपरिणामोऽत्र रामभद्रस्य प्रवासे कारणम्' [इति च्छाया ।] इह परिणामः परिणतिः । इदं तावत्प्रथमम् । अपरमपि वालिवधादिकमस्तीति हृदयम् । अभ्यर्थना प्रार्थना । **अज्जेति** । 'आर्य, द्वितीयमपि श्रोतुमनेन तव वचनेन पर्युत्सुकोऽस्मि' [इति च्छाया ।] इह पर्युत्सुक उत्कण्ठितः । **अस्तीत्यादि** । पुरंदरस्येन्द्रस्य नन्दनः पुत्रः । 'नन्दनं वासवोद्याने नन्दनो हर्षके सुते' इति मेदिनी-

---

१. 'प्लवंगमराजः' इति पाठः. २. 'प्रवृद्ध' इति पाठः. ३. 'अनुगतः' इति पाठः.

**पशुमेढ्रः**—(सकौतुकम् ।) तदो तदो ।

**शुनःशेफः**—ततश्च राजन्मायाविनी खल्वियं राक्षसजातिः । विशेषेण महेन्द्रावस्कन्दकन्दलितविक्रमः पितृवैरी तवायं रावणः । अपि च त्वदीयदोर्मूलसंपीडनगलितपौरुषो न विश्वविजयीति स्वयमाशङ्कनीयः । नापि सामन्तान्तरजिघृक्षायामन्तरावर्तिनि समुद्रे लघुसमुत्थः । तदनेन विराद्धमण्डलेन सहासुरविजयिना मैत्रमनर्थानुबन्धि । किं च सर्वथेयमनुपकारिणी पुलस्त्यापत्येषु प्रीतिरिति भगवानिहोदाहरणं हरिणाङ्कशेखरः ।

---

करः । वालिरिति ह्रस्वेकारान्तोऽपि । तथा च विश्वप्रकाशः—'ऐन्द्रिर्वाली च वालिश्च' इति । प्लवगो वानरः । **तं चेत्यादि** । जाम्बवान्भल्लूकराजो वालिमन्त्री दशकंधरेण रावणेन प्रवृत्तमैत्रीकं तं वालिनमवलोक्यावादीदिति योजना । कीदृशेन । रजनिचरा राक्षसास्तेषां चक्रवर्तिना सार्वभौमेन । अच्छभल्ला भल्लूकाः । 'ऋक्षाच्छभल्लभल्लूकाः' इत्यमरः । 'ऋक्षभल्ल–' इति पाठे भल्लूक एवोच्यते । गोलाङ्गूलः कृष्णमुखो वानरभेदः । 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरः । **विशेषेणेत्यादि** । महेन्द्रावस्कन्देनेन्द्रपराभवेण कन्दलितो नवीभूतो विक्रमो यस्य तादृशो रावणस्तव पितृवैरी । भवतो महेन्द्रपुत्रत्वात् । त्वदीयदोर्मूलसंपीडनेन कक्षायन्त्रणेन गलितं भ्रष्टं पौरुषं यस्य तादृशः । अत एव न विश्वविजयी । भवतैव जितत्वात् । तेनावश्यमाशङ्कनीयः । पुरा किल वालिना रावणं कक्षायामारोप्य सप्तसु समुद्रेषु संध्यावन्दनं कृतम्–इति पुराणम् । नापि सामन्तान्तरस्य राजान्तरस्य जिघृक्षया ग्रहीतुमिच्छयान्तरावर्तिनि मध्यस्थिते समुद्रे लघु शीघ्रं समुत्थः समुत्थानं यस्य तादृशः । न शीघ्रं पारगमने शक्त इत्यर्थः । त्वद्दोर्मूलसंपीडनगलितपौरुषत्वात् । समुत्थ इत्यत्र 'सुपि स्थः' इति योगविभागाद्भावे कः । यथा सुस्थ इत्यादौ । तात्पर्यमुपसंहरति—**तदनेनेति** । विराद्धं विरुद्धं मण्डलं राष्ट्रं द्वादशराजचक्रं वा यस्य तेन सह मैत्रं मित्रतानर्थानुबन्धि अनर्थसहितम् । अनर्थमनुबद्धुं शीलं यस्य तादृशम् । असुरविजयिना न सुरेभ्यो विजयो भङ्गो यस्य तेन । यद्वासुरश्चासौ विजयी च तेन । यद्वा न सुरो विजयी यस्य तेन । अशब्दो निषेधार्थः । अमानोनाप्रतिषेधवचनादिति न्यायात् । 'सुरविजयिना' इति वा पाठः । 'मण्डलं परिधौ कोषे देशे द्वादशराजके' इति विश्वः । सोपहासं मित्रताविघटकं दृष्टान्तमाह—**किं चेति** । पुलस्त्यो मुनिविशेषः । हरिणाङ्कशेखरः शिवः । विप्रकृष्टदेशावस्थितत्वेन मित्रस्याप्यनुपकारकत्वे मान्द्यं न शङ्क्यत इत्याशङ्कावारकमेकालयस्थेऽपीति विशेषणम् । एकगृहस्थितेऽपि सख्यौ धनाधिनाथे कुबेरे । कुबेरशिवयोः कैलासावस्थायित्वात् । त्रि-

---

१. 'विहस्य' इति पाठः. २. 'विराद्धभुवनमण्डलेन' इति पाठः. ३. 'सुरासुरविजयिना' इति पाठः. ४. 'अनर्थानुबन्धि भविता' इति पाठः. ५. 'शेखरोऽपि' इति पाठः.

तथा हि ।

उक्षा रथो भूषणमस्थिमाला भस्माङ्गरागो गजचर्म वासः ।
एकालयस्थेऽपि धनाधिनाथे सख्यौ दशेयं त्रिपुरान्तकस्य ॥ ७ ॥

**पशुमेढ्रः**—(सहासम् ।) अहो ठेरभल्लूअस्स मन्तोवण्णासो परिहास-कुसलदा अ । तदो तदो ।

**शुनःशेफः**—ततश्च तद्वचनं जराप्रलपितमित्युपहसति हरीश्वर उ-पांशु तदनुमत्या महामात्यस्य केसरिणः[1] पुत्रो हनुमान्कुमारं सुग्रीवमादाय[2] ऋष्यमूकं नाम पर्वतदुर्गमनुप्रविष्टः[3] ।

**पशुमेढ्रः**—(साकूतम् ।) अज्ज, जो सो मारुदी तेदामल्लो त्ति सुणी-अदि ।

**शुनःशेफः**—अथ किम् ।

**पशुमेढ्रः**—(सविचिकित्सम् ।) अज्ज, जधा तधा भोदु । सामी सामी ज्जेव । तं परिच्चइअ णसरिसो तारिसस्स महाणुभाअस्स पडिऊलपरिग्गहो ।

---

पुरान्तकस्य महादेवस्येयं दारिद्र्यद्योतिका दशावस्था । दशास्वरूपमाह—उक्षा वृषः स एव रथः स्यन्दनम् । वाहनमिति यावत् । अस्थिमाला भूषणमलंकरणम् । भस्माङ्गरा-गोऽङ्गानुलेपनम् । गजचर्म वासो वस्त्रम् । तथा च पुलस्त्यापत्येन समं मैत्रं न योग्य-मिति भावः । 'दशावस्थादीपवर्त्योः' इति विश्वः । 'उक्षा भद्रो बलीवर्दः' इत्यमरः । त्रिपुरान्तकत्वेन योग्यतोक्ता—**अहो इत्यादि** । 'अहो स्थविरभल्लूकस्य मन्त्रोपन्यासः परिहासकुशलता च । ततस्ततः' [इति च्छाया ।] इह ठेरः स्थविरः । 'राजन्मायाविनी राक्षसजातिः' इति मन्त्रस्य मन्त्रणाया उपन्यास उद्गारः । उक्षा रथ इत्यादि परिहास-कुशलता । जराप्रलपितं वृद्धत्वेन निरर्थभाषितम् । 'प्रलापोऽनर्थकं वचः' इत्यमरः । हरीश्वरे वानरराजे वालिनि । उपांशु एकान्ते । 'उपांशु उपभेदे स्यादुपांशु विजनेऽव्य-यम्' इति विश्वः । 'रहश्चोपांशु चालिङ्गे' इत्यमरश्च । तदनुमत्या जाम्बवत्संमत्या । इह 'हनुमान्केसरिणः क्षेत्रजः पुत्रोऽञ्जनायां वायुना जातः' इति पुराणम् । 'हनूमान्हनु-मानपि' इति शब्दभेदः । साकूतं साभिप्रायम् । **अज्जेति** । 'आर्य, योऽसौ मारुतिस्त्रे-तामल्ल इति श्रूयते' [इति च्छाया ।] इह त्रेता द्वितीययुगं तत्र मल्लो वीरः श्रूयते । सोऽयमिति शेषः । यद्वा त्रेतामल्लोऽस्यैव नाम । तदुक्तम्—'आञ्जनेयो हनूमान्स्यात्त्रे-तामल्लश्च मारुतिः' इति । 'अथ किं स्वीकियार्थकम्' इति भरतः । सविचिकित्सं स-

---

१. 'केसरिनाम्नः' इति पाठः. २. 'आदाय सुग्रीवम्' इति पाठः. ३. 'पर्वतं सदु-र्गम्' इति पाठः.

**शुनःशेफः**—(विहस्य।) पुरैव[1] किलायमाञ्जनेयो भगवतः सहस्रकिरणाद्व्याकरणविद्यामधीयानस्तदात्मजन्मनो वानरयोनेः सुग्रीवस्य साहायकमभिप्रायज्ञो गुरुदक्षिणीचकार।

**पशुमेढ्रः**—(सानन्दम्[3]।) हुं। ता उचिदं जेव्व गुरुपुत्तो सबह्मचारी वा अणुवट्टीअदि। तदो तदो।

**शुनःशेफः**—ततश्चाहिभयोपजापजर्जरं सुहृद्गृहमुपश्रुत्य[4] राक्षसराजः खरदूषणत्रिशिरोभिर्महामात्यैरधिष्ठितमात्मबलैकदेशं सिन्धोरुदीचि कूले वालिप्रतिग्रहाय प्राहिणोत्।

**पशुमेढ्रः**—कधं अपरिहीणमित्तधम्मो वि सो रक्खसो।

---

निन्दम्। विचिकित्सायाः प्रयोजकं रूपकमाह—**अज्जेति**। 'आर्य, यथा तथा भवतु। स्वामी स्वाम्येव। तं परित्यज्य तत्सदृशस्तादृशस्य महानुभावस्य प्रतिकूलपरिग्रहः' [इति च्छाया।] इह प्रतिकूलो वालिवैरी सुग्रीवस्तस्य परिग्रहः स्वीकारः। 'प्रतिग्रहः' वा पाठः। तत्राप्ययमेवार्थः। वालिनोऽसन्मार्गप्रपन्नत्वादेव परं न सुग्रीवसपक्षत्वम्, किंतु प्रकारान्तरेण तत्त्वमिति तदुपपादयति—**पुरैवेति**। किलागमे। अयमाञ्जनेयोऽञ्जनीपुत्रो हनुमान्सहस्रकिरणादादित्याद्व्याकरणविद्यामधीयानः पठंस्तदात्मजन्मनः सूर्यपुत्रस्य सुग्रीवस्य साहायकं साहाय्यम्। द्वितीयत्वमित्यर्थः। गुरुदक्षिणीचकार गुरुदक्षिणां कृतवान्। वानरयोनेरिति योनिराकरः। 'योनिः स्यादाकरे हेतौ' इति विश्वः। नन्वादित्यस्वरसं विनैव किं तथा कृतवानित्यत आह—अभिप्रायज्ञः। तस्येति शेषः। आशयवेत्तेत्यर्थः। साहायकमिति सहायशब्दात् 'योपधाद्गुरूपोत्तमाद्वुञ्' इति भावे वुञ्। **हुमित्यादि**। 'हुं। तदुचितमेव गुरुपुत्रः सब्रह्मचारी वानुवर्त्यते। ततस्ततः' [इति च्छाया।] इह हुं वितर्के। 'हुं वितर्के परिप्रश्ने' इति विश्वः। 'हुं तर्के स्यात्' इत्यमरोऽपि। सब्रह्मचारी एकब्रह्मव्रताचारः। सहाध्येता वा। 'एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः' इत्यमरः। अहिभयं स्वपक्षभयम्, उपजापो भेदः, ताभ्यां जर्जरं जीर्णम्। 'महीभुजामहिभयं स्वपक्षप्रभवं भयम्' इत्यमरः। 'समौ भेदोपजापौ' इति च। सुहृद्गृहं वालिवेश्म। राक्षसराजो रावणः। उदीचि उत्तरे। 'उद ईत्' इतीत्वेऽञ्चते रूपम्। वालिप्रतिग्रहाय वालिरक्षायै। यत्तु क्वचिद्ग्रहणायेति व्याख्यानं तन्मन्दम्। 'कधं अपरिहीणमित्तधम्मो वि सो रक्खसो' इत्यग्रिमग्रन्थविरोधात्। प्राहिणोत्प्रहितवान्। **कधमित्यादि**। 'कथमपरिहीनमित्रधर्मोऽपि स राक्षसः' [इति च्छाया।]

---

१. 'सखे पुरैवाञ्जनेयो' इति पाठः. २. 'व्याकरणम्' इति पाठः. ३. 'सानन्दम्' इति पुस्तकान्तरे नास्ति. ४. 'सुहृत्कुलम्' इति पाठः.

**शुनःशेफः**—सखे, किमुच्यते । रावणः खल्वसौ ।

प्रियाकर्तुं त्वस्मै नवनिजशिरःकर्तनरस-
प्रहृष्यद्रोमा यः स परमिह लङ्कापरिवृढः ।
विलक्षव्यापारं किमपि ददृशुर्यस्य दशमं
शिरस्ते मूर्धानः क्षणधृतपुनर्जन्मसुभगाः ॥ ८ ॥

**पशुमेढ्रः**—(सकौतुकम् ।) तदो तदो ।

**शुनःशेफः**—ततः सुकेतुसुता नागसहस्रबलधारिणी ताडका नाम राक्षसी तस्मादनीकादागत्य मनुष्यमण्डलविहारकौतुकादिमामस्मदीयां भूमिमधिवसति ।

---

इह अपरिहीनमत्यक्तम् । मित्रधर्मो मैत्र्यम् । कथमद्भुतमित्यर्थः । राक्षसो हि कस्य मित्रं भवतीति भावः । किमुच्यते । इदं त्वल्पमित्यर्थः । किं क्षेपे । खलु वाक्यालंकारेऽनुनये वा । असौ प्रसिद्धः । पुलस्त्यापत्यं रावणः । तथा च रावणो महावीरो महासत्त्व इति प्रसिद्ध एवायमर्थ इति भावः । इममेव श्लोकेनाह—**प्रियाकर्तुमिति** । तुः पुनरर्थे । अस्मै वालिने प्रियाकर्तुं प्रियं विधातुम् । उपकर्तुमिति यावत् । स लङ्काप्रभुरेव परम् । समर्थ इति शेषः । नान्यः । यद्वा त्वस्मै । अन्यस्मै त्वशब्दः सर्वादिरन्यार्थः । 'प्रभौ परिवृढः' इति निपातनम् । प्रियाकर्तुमिति 'सुखप्रियादानुलोम्ये' इति डाच् । स कः । नवसंख्याकनिजशिरःकर्तनरसेन प्रहृष्यदुच्छ्वसद्रोम यस्य तादृशो यः । रोमाञ्चवानित्यर्थः । इह च नव च तानि निजशिरांसीति समासं कृत्वा कर्तनरसेन समासे 'दिक्संख्ये संज्ञायाम्' इत्यसंज्ञायां समासाभाव इति न वाच्यम् । संज्ञायामित्यस्य प्रायिकत्वात् । यद्वा नवो नूतनश्चासौ निजः शिरःकर्तनरसश्चेति समासः । अभूतपूर्वत्वाच्छिरःकर्तनस्य नवरसत्वम् । यद्वा नवानां निजशिरसां समाहार इति द्विगुः । अकारान्तोत्तरपदत्वाभावान्न स्त्रीत्वम् । क्वचित् 'प्रियाकर्तुं कस्मैचन' इति पाठः तत्र कस्मैचनानिर्वचनीयस्वरूपाय भगवते शिवाय प्रियाकर्तुं तादृशरोमाञ्चवान्स परमिह रावण एवेति योज्यम् । 'केवलेऽपि परं मतम्' इति धरणिः । त्वस्मै इत्यत्र 'क्रियाग्रहणमपि कर्तव्यम्' इति संप्रदानता । 'कर्तनं तु द्वयोश्छेदे' इति विश्वः । विलक्षत्रपावान्व्यापारो यस्य तत् । क्षणेनाल्पकालेन धृतं यत्पुनर्जन्म तेन सुभगाः प्रसिद्धाः स्पृहणीया वा । अपरे दशमादन्ये मूर्धानः । ते दशमं शिरो विलक्षं दृष्टवन्त इत्यर्थः । 'मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः । सुकेतुर्नाम यक्षः । नागो हस्ती सर्पो वा । बलं सामर्थ्यं सैन्यं वा । 'नागः पन्नगमातङ्ग–' इति मेदिनीकरः । अनीकात्खराद्यधिष्ठितसैन्यात् । 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिनीकरः । 'मण्डलं स्याद्द्वादशराजसु देशेऽपि कीर्तितम्' इति विश्वः । विहारः क्रीडा । भूमिमधिवसतीत्यत्र 'उपान्वध्याङ्वसः' इत्यधिकर-

**पशुमेढ्रः**—(सकौतुकम्।) णाअसहस्सबला इत्थीअत्ति ति अस्सुदपुव्वं क्खु एदं। तदो तदो।

**शुनःशेफः**—ततश्च श्रौतस्य विधेः प्रत्यूहमस्याः शङ्कमानः कुलपतिरिमौ दाशरथी रामलक्ष्मणावानीतवान्।

**पशुमेढ्रः**—जाणे रामभद्दो त्ति को वि रक्खसाणं उवरि अवइण्णो क्खु एसो।

**शुनःशेफः**—सखे, एवमेतत्। रामभद्र इति कोऽप्ययं चतुरक्षरो राक्षसरक्षासिद्धमन्त्रः। विशेषेण पुनरिदानीं भगवता कौशिकेन ब्रह्मज्योतिषस्तादृशं विवर्तमाश्चर्यं दिव्यास्त्रमन्त्रपारायणमध्यापितः।

**पशुमेढ्रः**—मण्णे मन्तमईहिं अत्थदेवदाहिं समं बलादिबलाओ सत्तीओ वि रामे संकमिस्सन्ति।

**शुनःशेफः**—अथ किम्। तदपि वृत्तमेव[1]।

**पशुमेढ्रः**—अज्ज, णं भणामि जइ णिआओ जेव्व सत्तीओ णिआओ जेव्व अत्थविज्जाओ। ता किं त्ति अत्तणो विग्घोवसमे राहवस्स गोरअमुप्पादेदि तत्थभवं कोसिओ। अहवा[2] पाहुणहत्थेण सप्पमारणं क्खु एदम्।

---

णस्य कर्मत्वम्। **णाअसहस्सेति**। 'नागसहस्रबला स्त्री अस्तीत्यश्रुतपूर्वं खल्वेतत्। ततस्ततः' [इति च्छाया।] श्रौतस्य श्रुतिविहितस्य। श्रुतिर्वेदः। विधेः कर्तव्यस्य प्रत्यूहं विघ्नमस्या राक्षस्याः सकाशात्। **जाणे इति**। 'जाने रामभद्र इति कोऽपि राक्षसानामुपर्यवतीर्णः खल्वसौ' [इति च्छाया।] चतुरक्षरो रामभद्र इति। ब्रह्मज्योतिषो वेदतेजसः। विवर्तं फलम्। दिवि भवं दिव्यम्। दिव्यास्त्रमन्त्रपारायणं दिव्यास्त्रोपस्थितिहेतुकं मन्त्रसमूहरूपवेदभागम्। 'साकल्यासङ्गवचने पारायणतुरायणे' इत्यमरः। **मण्णे-इत्यादि**। 'मन्ये मन्त्रमयीभिरस्त्रदेवताभिः समं बलातिबले शक्ती अपि रामे संक्रमिष्यतः' [इति च्छाया।] द्वित्वे बहुवचनमिति प्राकृतपरिभाषा। इह बलातिबला च शक्तिद्वयम्। एतद्ग्रहणान्मासमेकं तृप्तेन पुंसा स्थीयत इत्यनुभाव इह। **अज्जेति**। 'आर्य, ननु भणामि यदि निजा एव शक्तयो निजा एवास्त्रविद्याः। तत्किमित्यात्मनो विघ्नोपशमे राघवस्य गौरवमुत्पादयति तत्रभवान्कौशिकः' [इति च्छाया।] स्वयमेव शत्रुशमनशक्तत्वात्कथं तथा न करोतीति भावः। 'अथवा प्राघुणहस्तेन सर्पमारणं ख-

१. 'संवृत्तमेव' इति पाठः. २. (विहस्य।) 'अहवा' इति पाठः.

**शुनःशेफः**—सखे, अनभिज्ञोऽसि। स्वयं प्रयोगादन्तेवासिभिर्विहितः प्रयोगो महिमानमाचार्याणामुपचिनोति। पश्य

स्थानेषु शिष्यनिवहैर्विनियुज्यमाना
विद्या गुरुं हि गुणवत्तरमातनोति।
आदाय शुक्तिषु बलाहकविप्रकीर्णै
रत्नाकरो भवति वारिभिरम्बुराशिः॥ ९॥

किं च दीक्षिष्यमाणा[1] न क्रुध्यन्तीति रक्षितारं क्षत्रियमुपाददते।

**पशुमेढ्रः**—अज्ज, सोहणं मन्तेसि। अण्णं वि किं वि पुच्छिदुकामो ह्मि।

**शुनःशेफः**—किं तत्।

**पशुमेढ्रः**—सव्वधा णिगूढं वि वाणराणं छग्गुणअं कधं अज्जेण पडिवण्णम्।

---

त्वेतत्' [इति च्छाया।] अस्योपलक्षणस्यायमभिसंधिः—सर्पो यदि भक्षयिष्यति तदा प्राघुणकं न चेत्तदा सर्पमारणमभिलषितमेव। तथा प्रकृतेऽपि यदि राक्षसा भक्षयिष्यन्ति तदा राममथ न तदा रक्षोमारणं श्रेय एवेति। 'प्राघुणस्त्वतिथिर्द्वयोः' इति त्रिकाण्डशेषः। 'जइ णिआओ जेव्व' इत्यादि पशुमेढ्रवाक्य उत्तरयति—**स्वयं प्रयोगादिति**। स्वयं प्रयोगादात्मप्रयुक्तेः। अन्तेवासिभिः शिष्यैः करणभूतैः। उपचिनोत्युपचितीकरोति। तदेव स्पष्टयति—**स्थानेष्विति**। हि यतः शिष्यनिवहैश्छात्रसमूहैः स्थानेषु समीचीनेषु विनियुज्यमाना सती विद्या गुरुमाचार्यं गुणवत्तरमतिगुणमातनोति विस्तारयति। अत्र दृष्टान्तमाह—आदायेति। अम्बुराशिः समुद्रः। आदाय। अर्थात्समुद्रादेव। वारि। बलाहकेन मेघेन शुक्तिषु विप्रकिर्णैः स्वातीनक्षत्रयोगाद्विक्षिप्तैः। विशब्दस्य विशेषार्थाभिधायकत्वात्। वारिभिः पानीयैः करणभूतैः। मुक्तारूपेण परिणतैरिति भावः। रत्नाकरो भवति रत्नानामुत्पत्तिस्थानं भवति। क्वचित् 'आधाय' इति पाठः। तत्र शुक्तिष्वाधायारोप्येत्यर्थः। 'बलाहको गिरौ मेघे' इति मेदिनीकरः। **अज्जेति**। 'आर्य, शोभनं मन्त्रयसे' [इति च्छाया।] शोभनं कथयसीत्यर्थः। यद्यपि 'मत्रि गुप्तपरिभाषणे' इति पठ्यते तथापि लक्षणया भाषणमात्रेऽपि प्रयोगः। यद्वा धातोरनेकार्थत्वादिदम्। **अण्णं वीति**। 'अन्यदपि किमपि प्रष्टुकामोऽस्मि' [इति च्छाया।] 'सर्वथा निगूढमपि वानराणां षाड्गुण्यं कथमार्येण प्रतिपन्नम्' [इति च्छाया।] प्रष्टुकाम इत्यत्र 'तुं काममनसोरपि' इत्यमूलोपः। निगूढं गुप्तम्। षाड्गुण्यं मन्त्रणा। आर्येण

---

१. 'दीक्षमाणाः' इति पाठः.

शुनःशेफः—सखे, सर्वमेतदयोध्यायात्रायां समाधिमयेन चक्षुषा साक्षात्कृतत्रिभुवनवृत्तान्तस्य तातविश्वामित्रस्य मुखादश्रौषम्। (सर्वतोऽवलोक्य।) [1]अये, प्राभातिकी [2]भुवनस्य लक्ष्मीः। तथा हि।

प्रत्यग्रज्वलितैः पतङ्गमणिभिर्नीराजिता भानवः
सावित्राः कुरुविन्दकन्दलरुचः प्राचीमलंकुर्वते।
प्रौढध्वान्तकरालितस्य वपुषश्छायाछलेन क्षणा-
दप्रक्षालितनिर्मलं जगदहो निर्मोकमुन्मुञ्चति॥ १०॥

अपि च।

पीत्वा भृशं कमलकुड्मलशुक्तिकोषा
दोषातनीं तिमिरवृष्टिमथ स्फुटन्तः।

---

भवता। प्रतिपन्नं ज्ञातम्। यात्रा गमनम्। समाधिर्ध्यानम्। साक्षात्प्रत्यक्षम्। 'साक्षात्प्रत्यक्षतुल्ययोः' इति विश्वः। वृत्तान्तो वार्ता। अश्रौषं श्रुतवानस्मि। लुङि सिचि वृद्धौ च रूपम्। प्राभातिकी प्रभातभवा। 'कालाट्ठञ्'। प्रसक्तानुप्रसक्त्या गुरुकार्यबाधशङ्कया पशुमेढ्रमतिमित्रमन्यत्र दत्तचित्तं कारयितुं समिदाहरणाय जिगमिषुराह—प्रत्यग्रेति। सावित्राः सौराः। 'तस्येदम्' इत्यण्। भानवः किरणाः प्राचीं पूर्वां दिशमलंकुर्वतेऽनुरञ्जयन्ति। कीदृशाः। कुरुविन्दस्य पद्मरागस्य यत्कन्दलं प्रकाण्डः। अङ्कुरमिति यावत्। तद्वद्रुक्शोभा येषां ते तथा। यद्वा कुरुविन्दः पद्मरागः, कन्दलं नवपल्लवः, तयोरिव रुचो येषां ते। यद्वा कन्दलं नवाङ्कुरम्। 'कन्दलं स्यात्पल्लवे च नवाङ्कुरे' इति विश्वः। अतिलोहिता इत्यर्थः। प्रत्यग्रज्वलितैरभिनवदीप्तैः पतङ्गमणिभिः सूर्यकान्तैर्नीराजिताः। निर्मन्थिता इत्यर्थः। नीराजना शान्तिकर्म। तेजोञ्छन इति प्रसिद्धम्। किरणोत्कर्षमुक्त्वा तैर्जगन्नैर्मल्यमाह—इदं च जगच्छायाछलेनातपाभावव्याजेन वपुषः शरीरस्य निर्मोकं कञ्चुकमुन्मुञ्चति त्यजति। कीदृशं जगत्। अप्रक्षालितं सदपि निर्मलम्। अत्राहो आश्चर्यम्। अन्यद्धि वस्तु प्रक्षालनान्निर्मलम्। एतत्तु न तथेति चित्रम्। विरोधाभासः। कीदृशस्य वपुषः। प्रौढमुपचितं यद्ध्वान्तमन्धकारं तेन करालितस्य लेपितस्य। विभावना नामायमलंकारः। यदाह दण्डी—'प्रसिद्धहेतुव्यावृत्त्या यत्किंचित्कारणान्तरम्। यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना॥' इति। 'पतङ्गः शलभे शालिप्रभेदे विहगे रवौ' इति मेदिनीकरः। 'कुरुविन्दः पद्मरागः' इति धरणिः। पीत्वेति। कमलानां ये कुड्मलाः कलिकास्ता एव शुक्तयस्तासां कोषाः कर्तृभूता दोषातनीं रात्रिभवां तिमिरवृष्टिमन्धकारवृष्टिं भृशमत्यर्थं पीत्वानुस्फुटन्तः सन्तो निर्यन्त्रि-

---

१. 'अहो' इति पाठः. २. 'भुवनलक्ष्मीः' इति पाठः.

निर्यन्मधुव्रतकदम्बमिषाद्वमन्ति
विभ्रन्ति कारणगुणानिव मौक्तिकानि ॥ ११ ॥

अपि च ।

विकसितसंकुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्ष्याः ।
कलिकाः कथयति नूतनविकासिनीर्मधुलिहामर्घः ॥ १२ ॥

([1]आदित्यमण्डलं निर्वर्ण्य ।)

कटुभिरपि कठोरचक्रवाकोत्करविरहज्वरशान्तिशीतवीर्यैः ।
तिमिरहतमयं महोभिरञ्जञ्जयति जगन्नयनौघमुष्णभानुः ॥ १३ ॥

तदनुजानीहि मां समिदाहरणाय ।

---

र्गच्छन्यो मधुव्रतसमूहस्तस्य मिषाद्व्याजान्मौक्तिकानि मुक्ताफलानि वमन्त्युद्गिरन्ति । ननु मधुव्रतानां श्यामत्वान्मुक्तानां च श्वेतस्वभावत्वात्कथं तुल्यतेत्यत आह—कारणगुणान्विभ्रन्तीव दधानानीव । कारणगुणा हि कार्ये गुणमारभन्त इति सिद्धान्तः । अत्र च तिमिरवृष्टिपानं कारणं कार्यं च मधुव्रतरूपमुक्ताफलमित्यर्थः । 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । 'दोषा रात्रौ भुजेऽपि च' इति विश्वः । दोषातनीमिति दोषाशब्दात् 'सायं चिरं–' इत्यादिना ट्युट्टुट् च । **विकसितेति** । मधुलिहां भ्रमराणामर्घ आदरो नूतनविकासिनीस्तद्दिनविकासिताः कलिकाः कर्मभूताः कथयति । कलिका एता इति ज्ञानं तत्रत्यानां कुरुत इत्यर्थः । कीदृशीः । पूर्वदिने विकसितानि प्रफुल्लितानि रात्रौ संकुचितानि निमीलितानि पुनर्वर्तमानदिने विकस्वराणि विकासशीलानि यान्यम्बुजानि पद्मानि तत्र लर्दुक्ष्या दुर्ज्ञेयाः । नानावस्थपद्मदर्शनेन कलिकाविकसितसंदेहे यत्र भ्रमरादरस्तत्र मधुप्राचुर्यज्ञानात्कलिकात्वं निश्चीयत इति भावः । विकस्वरेष्वित्यत्र 'स्थेशभास–' इत्यादिना वरच् । यद्वार्घो मकरन्दो मधुलिहां कृते नूतनविकासिनीः कलिकाः कथयति । 'पूजायां मकरन्देऽपि भवेदर्घस्तथादरे' इति विश्वः । 'मधुलिहामोघः' इति पाठ ओघः समूहः । योजना तु पूर्वैव । निर्वर्ण्य निरूप्य । **कटुभिरपीति** । उष्णभानुः सूर्यो जयति । किं कुर्वन् । महोभिस्तेजोभिस्तिमिरेणान्धकारेण हतं प्रतिहतं जगन्नयनौघं संसारस्य लोचनसमूहमञ्जन्नक्तीकुर्वन्सन् । अन्येनाप्यौषधेन चक्षुषोऽञ्जनं क्रियते । तेनापि तिमिरादिरूपव्याधिविशेषो हन्यत इति ध्वनिः । क्वचित् 'तिमिरभरम्', क्वचित् 'तिमिरमयम्' इति पाठः । तद्द्वयेऽपि योजनार्थयोरविशेषः । कीदृशैः । कटुभिरपि तीक्ष्णैरपि सद्भिः कठोरोऽसह्यो यश्चक्रवाकसमूहविरहज्वरस्तस्य शान्तावुपरामे शीतः पराक्रमो येषां तादृशैः । तीक्ष्णैरपि शीतलैरिति विरोधाभासः । यद्वा कटुभिरपि रूक्षैरपि । आतपो हि कटुरूक्ष इति द्रव्यगुणः । यच्च वस्तु कटु भवति तदपि

---

१. 'आदित्यं निर्वर्ण्य च' इति पाठः.

**पशुमेढ्रः**—अहं वि खत्तिअकुमाराणं दंसणे उक्कण्ठिदोह्मि । ता केहिं कहिं पेक्खामि ।

**शुनःशेफः**—(विहस्य ।) नन्वेतावेव यज्ञवाटमुत्तरेण विहारभूमिषु क्रीडतः । तदुपेत्य निःशङ्कमवलोकय ।

(इति निष्क्रान्तौ ।)

विष्कम्भकः ।

(ततः प्रविशतो रामलक्ष्मणौ ।)

**रामः**—अहो विचित्रमिदमायतनं सिद्धाश्रमपदं[1] नाम भगवतो गाधिनन्दनस्य ।

तत्ताहक्तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभि-
र्मेध्या वत्सतरी विहस्य वटुभिः सोल्लुण्ठमालभ्यते ।

---

शीतवीर्यं सच्चक्षुष्यं भवति । यथा पिप्पल्याश्चक्षुषि शीतवीर्यत्वम् । तथा च वैद्यकम्—'चक्षुष्या पिप्पली शीतवीर्या च' इति । 'मह उत्सवतेजसोः' इति विश्वः । अनुजानीहि स्वीकुरु । समित्काष्ठम् । समिदाहरणायेति तादर्थ्ये चतुर्थी । **अहं वीति** । 'अहमपि क्षत्रियकुमारयोर्दर्शन उत्कण्ठितोऽस्मि । तत्कथय कुत्र प्रेक्षे' [इति च्छाया ।] खत्तिअकुमाराणं इति 'प्राकृते द्विवचनस्य बहुवचनं नित्यम्' इति बहुवचनम् । यज्ञवाटं यज्ञस्थानं यज्ञमार्गं वा । 'वाटो मार्गे वृतिस्थाने' इति विश्वः । 'एनपा द्वितीया' इति द्वितीया षष्ठ्यर्थे । उत्तरेणोत्तरासु । 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इति सप्तम्यर्थे एनप् । विहारः क्रीडा । निष्क्रान्तौ । पशुमेढ्रशुनःशेफाविति शेषः । विष्कम्भको नाम पात्रभेदः । तथा च भरतः—'वृत्तवर्तिष्यमाणानां कथाङ्गानां निवेदकः । संक्षेपोक्तिः स विष्कम्भो मध्यपात्रप्रयोजितः ॥ कुतोऽपि स्वेच्छया प्राप्तः संबन्धो नोभयोरपि । विष्कम्भकः स विज्ञेयः कथार्थस्यापि सूचकः ॥ विष्कम्भको द्विधा ज्ञेयः शुद्धः संकीर्ण एव च । शुद्धो मध्यमपात्रेण संकीर्णो मध्यमाधमैः ॥ संस्कृतोक्त्या च शुद्धः स्यात्संकीर्णो नीचभाषया' । तत्र शुद्धो यथा मालतीमाधवे श्मशानाङ्के कपालकुण्डला । उन्मत्तमाधवे सौदामिनी । संकीर्णो यथा रामानन्दे क्षपणककापालिकौ । 'असूचितस्य पात्रस्य प्रवेशो नैव युज्यते । ततो विष्कम्भकेणास्य सूचनं रचयेद्बुधः ॥' इति संगीतकल्पतरुवचनात् । 'नन्वेतावेव' इत्यादिना सूचितयो रामलक्ष्मणयोः प्रवेशमाह—**ततः प्रविशत इति** । आयतनं स्थानम् । सिद्धाश्रमपदं वामनमूर्तेर्हरेः स्थानम् । कुतो विचित्रमिदमायतनमित्यत आह—**तत्ताहगिति** । वटुभिर्मुनिबालकैर्विहस्य सो-

---

[1] 'सिद्धाश्रमं नाम' इति पाठः.

अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटै-
रापीतो मधुपर्कपाकसुरभिः प्राग्वंशजन्मानिलः ॥ १४ ॥

**लक्ष्मणः**—आर्य, किलात्रैव

देवः कौस्तुभकिंजल्कनीलोत्पलमसौ हरिः ।
स्वयं किमपि तत्तेपे तपः कपटवामनः ॥ १५ ॥

इत्थमेतन्महातीर्थमध्यासीना द्विजातयः ।
अकुतोभयसंचाराः षट्कर्माणि प्रयुञ्जते ॥ १६ ॥

---

लुण्ठं सोपहासं यथा भवति तथा मेध्या विशुद्धा वत्सतरी वर्षद्वयवयस्का गौरालभ्यते मार्यते । आङ्पूर्वो लभिर्मारणार्थः । यदाह—'श्वेतं छागमालभेत' इति । 'आलम्भपिञ्ज-विशरघातोन्माथवधा अपि' इत्यमरः । वत्सतरीमारणं चातिथावागते विहितमेव । 'महोक्षं वा त्वत्सतरीं दद्यादतिथये गृही' इति स्मृतेः । 'इदानीं मयानीतं नवतृणं भुङ्क्ष्व' इति लोकोक्त्योपहासः । सोल्लुण्ठतायां निमित्तमाह—तत्तादृगिति । तद्दुःखजनकं तादृग्व-त्सीयं यत्तृणपूलकं तस्योपनयनमुपस्थापनं तस्य क्लेशाद्गुरुभारवहनश्रमाच्चिरद्वेपिभिः । अन्योऽपि द्वेष्युपहस्य मार्यत इति ध्वनिः । एषोऽपि प्राग्वंशे जन्म यस्य तादृशो हविर्गृ-हपूर्वजातोऽनिलो वायुः प्रतनूभवति । प्रकर्षेण कृशो भवतीत्यर्थः । मधुपर्कपाकेन हूयमा-नमधुपर्कस्य पाकेन सुरभिरत एवातिथिभिः सोच्छ्वासाः सप्रकाशा ये नासापुटास्तैरा-समन्ताद्भावेन पीतः । अत एव कृशतरोऽपि । 'प्राग्वंशः प्राग्घविर्गेहात्' इत्यमरः । 'गन्धवाहानिलाशुगाः' इति च । 'मेध्यं पूते मेधसे च' इति धरणिः । अत्रैव सिद्धा-श्रम एव । किल प्रसिद्धौ । न केवलमनेन प्रकारेणाश्रमपदस्य वैचित्र्यम्, किं त्वतिपावि-त्र्यमप्यस्तीत्याह—**देव इति** । असौ हरिर्देवो नारायणोऽत्रैव स्वयमात्मना किमपि तद-निर्वचनीयं तपस्तेपे तप्तवान् । अन्ये तपस्विनो भगवदाराधनार्थमेव तपः कुर्वते । अयं तु भगवान्किमिति तपः करोतीत्यनिर्वचनीयत्वं तपसः । कीदृशः । कौस्तुभो मणिभेदः स एव किंजल्कः केसरो यस्य तन्नीलोत्पलमिव नीलोत्पलम् । ततश्च द्वयोर्विशेषणस-मासः । इह भगवतोऽतिश्यामत्वान्नीलोत्पलत्वेन रूपणम् । कौस्तुभस्य भगवतो हृन्मध्य-स्थितत्वाद्दीप्तिमत्त्वाच्च किंजल्केन रूपकम् । रूपकोऽयमलंकारः । कपटवामनो माया-वामनमूर्तिः । हरिणा त्रिविक्रमेण किल बलिच्छलनार्थं वामनरूपं कृत्वा तत्र सिद्धाश्रमे तपः कृतम्—इति पुराणम् । 'किंजल्कः केसरोऽस्त्रियाम्' इत्यमरः । 'खर्वो ह्रस्वश्च वा-मनः' इति च । **इत्थमिति** । द्विजातयो ब्राह्मणाः षट्कर्माणि प्रयुञ्जते । कुर्वत इत्यर्थः । अकुतोभयेन संचारो यषां ते । असुब्विभक्तिकत्वात्तसिलोऽलुक् । इत्थमनेन वामनतप-स्याधिकरणत्वेन यदेतन्महातीर्थं तदध्यासीनाः । महातीर्थमित्यत्र 'आन्महतः—' इत्या-दिनात्त्वम् । तीर्थस्य च महत्त्वं महाजनपरिग्रहेण । 'यदध्यासितं महद्भिस्तद्धि तीर्थं

(अन्यतश्च दृष्ट्वा ।)[1] आर्य,

> पश्यैते पशुबन्धवेदिवलयैरौदुम्बरीदन्तुरै-
> र्नित्यव्यञ्जितगृह्यतन्त्रविधयो रम्या गृहस्थाश्रमाः ।
> यत्रामी गृहमेधिनः प्रचलितस्वाराज्यसिंहासना
> वैतानेषु कृपीटयोनिषु पुरोडाशं वषट्कुर्वते ॥ १७ ॥

**रामः**—(सहर्षस्मितम् ।)[2] वत्स,[3] इतोऽपि तावत्कृतार्थयावश्चक्षुषी[4] । प्रसन्नपावनोऽयमृषीणां समवायः । इदममीषाम्

प्रचक्षते' इति स्मृतिः । 'तीर्थं शास्त्रे पुरे क्षेत्रे' इति विश्वः । 'दानमध्यापनं पितृतर्पणातिथिपूजनम् । होमो बलिश्च विप्राणां षट्कर्माणि दिने दिने' । यद्वा यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाः षट्कर्माणि । प्रयुञ्जत इत्यत्र 'प्रोपाभ्यां युजेः—' इति तङ् । **पश्येत्यादि** । हे आर्य रामभद्र, एते पुरोवर्तिनो गृहस्थाश्रमा रम्याः । सन्तीति शेषः । तान्पश्येत्यन्वयः । तानित्यध्याहार्यम् । यद्वा वाक्यार्थस्यैव कर्मत्वम् । तत्र वाक्यस्याप्रतिपादकत्वान्न द्वितीया । कीदृशाः । पशुबन्धो यागविशेषस्तस्य वेदिः परिष्कृता भूमिस्तस्या वलयैर्मण्डलैः करणभूतैर्नित्यं व्यञ्जितो व्यक्तीकृतो गृह्यतन्त्रविधिर्गृह्यसिद्धान्तविधानं येषु ते । यद्वा पशूनां बन्धो यत्र सा पशुबन्धवेदिस्तासां वलयैः समूहैः । कीदृशैः । औदुम्बर्युदुम्बरकाष्ठस्थूणा तया दन्तुरैरुन्नतैः । पशुबन्धयागे हि पशुर्बध्यते, औदुम्बरीस्पर्शश्च क्रियते । यदाह—'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति । 'उदुम्बरस्तु देहल्यां वृक्षभेदे च' इति मेदिनीकरः । यद्वा औदुम्बरी सर्पफणाकारः काष्ठभेदः । यः खलु यज्ञस्थाने पशुबन्धार्थं निखाय ध्रियते तेन दन्तुरैः । यत्र गृहस्थाश्रमे गृहमेधिनः सपत्नका गृहस्था वैतानेषु यज्ञसंबन्धिषु कृपीटयोनिषु वह्निषु पुरोडाशं चतुर्मुष्टिव्रीहिनिर्मिताश्वशफाकारपिष्टकम् । 'चतुरो मुष्टीन्निर्वपति', 'अश्वशफाकारः पुरोडाशः' इति श्रुत्या तादृक्पिष्टस्य पुरोडाशपदवाच्यत्वविधानात् । वषट्कुर्वते । जुह्वतीत्यर्थः । तदुक्तम्—'स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा' इति । प्रचलितं कम्पितं स्वाराज्यस्य स्वर्गराज्यस्य सिंहासनं येभ्यस्ते । ममैते किं स्वामिनो भवेयुरिति तेषां कम्प इति भावः । प्रचलितमिति 'चल कम्पने' णिच् । 'कम्पने चलिः' इति मित्संज्ञा । गृहमेधिन इति गृहा दाराः । 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' । तेषां मेधः संगमः । 'मेधृ संगमे' । स एषामस्तीति गृहमेधिनः । 'अत इनिः' । 'दन्तुरस्तून्नतदन्ते तथोन्नतनतेऽपि च' इति मेदिनीकरः । 'कृपीटयोनिर्ज्वलनः' इत्यमरः । 'वेदिः परिष्कृता भूमिः' इति च । **इत इति** । इतोऽत्रेत्यर्थः । आद्यादित्वात्सप्तम्यां तसिः । कृतार्थयावश्चरितार्थीकुर्वः । 'तत्क-

१. 'अन्यत्र च' इति पाठः. २. 'सहर्षम्' इति पाठः. ३. 'वत्स, लक्ष्मण' इति पाठः ४. 'तावत्कृतार्थय' इति पाठः.

पूरयित्वेव सर्वाङ्गमतिरिक्ताः शिराततीः।
जटारूपेण बिभ्राणैः शिरोभिर्गहनं सदः॥ १८॥

किं च।

तपःकृशतरैरङ्गैः स्रष्टुमाकारितैरिव।
सायं प्रातरमी पुण्यमग्निहोत्रं प्रयुञ्जते[1]॥ १९॥

(इति परिक्रामतः।)

**लक्ष्मणः**—(सहासम्।) आर्य, रमणीयमितो वर्तते।

वालेयतण्डुलविलोपक[2]कदर्थिताभि-
रेताभिरग्निशरणेषु सधर्मिणीभिः।
त्रा[3]सहेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगे मुनयो हसन्ति॥ २०॥

---

रोति–' इति णिच्। समवायः समूहः। इदानीमतिशान्तरूपं वैचित्र्यमाह—**इदममीषामिति।** अमीषामृषीणामिदं सदः सभा शिरोभिर्मस्तकैर्गहनं विषमम्। अस्तीति शेषः। कीदृशैः। जटारूपेण जटाव्याजेन शिराततीः शिरासमूहान्बिभ्राणैर्धारयद्भिः। ननु शिरायाः शरीराभ्यन्तरस्थायित्वात्कथं बहिर्भाव इत्यत आह—सर्वाङ्गं सर्वावयवं पूरयित्वातिरिक्ता अवशिष्टा बहिर्भूताः। ननु तथाप्यत्यन्तासंभवेन बाधितोऽयमर्थः 'बहिरनुष्णः' इतिवदित्यत आह—इवेति। इवशब्द उत्प्रेक्षायाम्। यद्वा इवशब्दो भिन्नक्रमः 'ततीः' इत्यस्यानन्तरं द्रष्टव्यः। नैता जटाः किं तु शिराततीरिवेति भावः। यद्वा इदं सदः सभास्थानं शिरोभिर्गहनं वनमिव। शिरास्वरूपास्ततीर्लता बिभ्राणैः। अन्यदपि वनं लतां धत्त इति ध्वनिः। तत्किमेषामाकारः स्वाभाविक एवेत्याह—**किं चेत्यादि।** अमी मुनयः सायं प्रातश्च पुण्यं पवित्रमग्निहोत्रं यागविशेषं प्रयुञ्जते कुर्वते। अङ्गैः शरीरैर्लक्षिताः। 'इत्थंभूतलक्षणे' इति तृतीया। कीदृशैः। तपसा कृशतमैः। अत एव स्रष्टुमाकारितैरिव। इवशब्दो भिन्नक्रमः। स्रष्टुमिवाकारितैः। उत्कीर्णैरित्येके। अन्यत्रापि चित्रलिखनादौ प्रथमं रेखा क्रियते, ततो वर्णिकाभिः पूर्यत इति ध्वनिः। एतेऽप्यस्थिपुञ्जरूपाः, अतः सृष्ट्यर्थं किमानीता इति भावः। न केवलमृषीणामेव प्रशान्तस्वभावत्वम्, किं तु तत्पत्नीनामपीति प्रकटयन्वैचित्र्यान्तरं दर्शयति—तदित्यादिना मुनयो हसन्तीत्यनेन। मृगे हरिणे त्रासहेतुमपि तस्य मृगस्य भयकारणमपि दण्डमाघ्रातुमिच्छति सति मुनयो हसन्तीति संबन्धः। मृगादीनां दण्डादिदर्शनाद्भयसद्भाव इति तावद्वस्तुगतिः। तत्रान्यथादर्शनादतिकौतुकेन हासः। कीदृशम्। सधर्मिणीभिर्द्वितीयाभिः।

---

१. 'उपासते' इति पाठः. २. 'विलेप' इति पाठः. ३. 'उत्त्रास' इति पाठः.

**रामः**—(परिक्रामन्सकौतुकानुरागम्।) वत्स, इतस्तावत्[1]।

आर्द्रप्रसूतिरियमङ्गनयज्ञवेदि-
नेदिष्ठमेव हरिणी तृणुते तृणं[2] च।
वत्सीयतापसकुमारकरोपनीत-
नीवारनिर्वृतमपत्यमवेक्षते[3] च॥ २१॥

अपि च।

विष्वक्तपोधनकुमारसमर्प्यमाण-
श्यामाकतण्डुलहृतां च पिपीलिकानाम्।
श्रेणीभिराश्रमपथाः प्रथमानचित्र-
पत्रावलीवलयिनो मुदमुद्वहन्ति॥ २२॥

---

पत्नीभिरिति यावत्। प्रकृतत्वान्मुनीनामेव। अग्निशरणेष्वग्निगृहेषूदस्यमानमुत्क्षिप्यमाणम्। 'असु क्षेपणे'। कीदृशीभिः। वल्यर्थं ये तण्डुलास्तेषां विलोपेनाहरणेन। भक्षणेनेति यावत्। कदर्थिताभिर्दुःखिताभिः। वालेयेत्यत्र 'छदिरुपधिवलेर्ढञ्'। 'वालेयो गर्दभे पुंसि मृदौ बलिहिते त्रिषु' इति विश्वः। 'शरणं गृहरक्षित्रोः' इति च। 'द्वितीया सहधर्मिणी' इत्यमरः। न केवलमनयोर्वृद्धत्वे प्रशान्तस्वभावत्वम्, किं तु बालस्यातिचञ्चलस्वभावस्यापि प्रशान्तत्वमित्युपपादयन्वैचित्र्यान्तरमाह—**आर्द्रेत्यादि**। इयं हरिणी तृणं तृणुते खादति च अपत्यमवेक्षते परिपालयति च। चकारद्वयं तुल्यकालताद्योतनार्थम्। अपत्यावेक्षणप्रयोजकं रूपमाह—आर्द्रप्रसूतिरिति। अभिनवप्रसूतेत्यर्थः। कीदृशं तृणम्। अङ्गने या यज्ञवेदिस्तस्या नेदिष्ठमतिनिकटस्थम्। कीदृशमपत्यम्। वत्सीया वत्सेभ्यो हिता ये तापसकुमारास्तैः करैरुपनीता ये नीवाराः 'तुरी' इति प्रसिद्धास्तैर्निर्वृतं संतुष्टम्। तृणुत इति 'तृणु अदने' तनादिरुभयपदी। 'संज्ञापूर्वको विधिरनित्यः' इति गुणाभावः। व्याकरणान्तरे तु विकल्प एव गुणे। नेदिष्ठमिति 'अन्तिकबाढयोर्नेदसाधौ' इतीष्ठनि अन्तिकस्य नेदादेशः। 'नेदिष्ठमन्तिकतमम्' इत्यमरः। वत्सीयेत्यत्र 'तस्मै हितम्' इति छः। **विष्वगिति**। आश्रमपथा आश्रममार्गा मुदं हर्षमुद्वहन्तीति संबन्धः। आश्रमाणां पन्था आश्रमपथः। 'ऋक्पूः–' इत्यः। कीदृशाः। पिपीलिकानां श्रेणीभिः पङ्क्तिभिः प्रथमाना ख्याता या चित्रा पत्रावली पत्रलेखा सैव वलयो यत्र तादृशाः। कीदृशीनाम्। विष्वक्सर्वत्र तपोधनकुमारैर्ये समर्प्यमाणा दीयमानाः श्यामाकानां 'सामा' इति प्रसिद्धानां तण्डुलास्तदुपहारिकाणाम्। 'क्विप्च' इति क्विप्। श्यामाकतण्डुलस्यातिश्वेतस्वभावत्वात्पिपीलिकानां श्यामत्वात्कियतीनां च तासामीषल्लोहितत्वाच्चित्ररूपपत्राव-

---

1. 'इदं तावत्' इति पाठः. 2. 'तृणानि' इति पाठः. 3. 'अपेक्षते' इति पाठः.

**लक्ष्मणः**[1]—अहो पशूनामप्यपत्य[2]वात्सल्यम् । अहो शिशूनामपि सत्कर्मताच्छील्यम् ।

**रामः**[3]—(अन्यतोऽवलोक्य ।)

मुनिविनियोगविलूनप्ररूढमृदुशाद्वलानि बर्हींषि ।
गोकर्णतर्णकोऽयं तर्णोत्युपकण्ठकच्छेषु ॥ २३ ॥

(इति[4] परिक्रामतः ।)

**लक्ष्मणः**—आर्य,

इयमेभिरालवालैः पदे पदे ग्रन्थिलासु कुल्यासु ।
[5]तीव्रतमा जलवेणिः प्रवहति विश्रम्य विश्रम्य ॥ २४ ॥

---

लीवलयत्वमुचितम् । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । वात्सल्यं प्रेमा । ताच्छील्यं तत्स्वभावत्वम् । मृगाणामपि द्वेषिविषयकात्यन्तनिर्भरत्वं दर्शयन्वैचित्र्यान्तरमाह—**मुनीति** । अयं गोकर्णतर्णको हरिणविशेषबालक उपकण्ठकच्छेषु कच्छसमीपेषु बर्हींषि कुशांस्तर्णोति खादति । 'तृणु अदने' उभयपदी । पक्षे गुणः । उपकण्ठः समीपम् । अतिगर्तजलबहुलं स्थानं कच्छः । नदीतटं वा । 'जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः । 'कच्छो नदीतटेऽनूपे' इति विश्वः । कीदृशानि । मुनिभिर्विनियोगार्थं क्रियानिमित्तं विलूनान्युत्पाटितानि ततः प्ररूढान्युत्पन्नानि शाद्वलानि हरितानि येषां तादृशानि । यद्वा मुनिविनियोगविलूनानि, प्ररूढमृदुशाद्वलानि चेति कर्मधारयः । 'शादो जम्बालशष्पयोः' इत्यमरः । 'शष्पं बालतृणम्' इति च । शादोऽस्यास्तीति 'नडशादाड्ड्वलच्' । 'शाद्वलः शादहरिते' इत्यमरः । न च शाद्वलशब्देन बर्हिःशब्देन च तृणविशेषाभिधानात्पौनरुक्त्यापत्तिरिति वाच्यम् । शाद्वलशब्दस्यात्र लक्षणया हरितमात्रवृत्तित्वात् । 'गोकर्णोऽश्वतरेऽपि स्यान्मृगसर्पविशेषयोः' इति मेदिनीकरः । 'तर्णको बालकः समौ' इत्यमरः । चेतनानां प्रशान्तस्वभावत्वमुक्त्वाचेतनानामप्याह—**इयमिति** । इयं तीव्रतमातिवेगवती जलवेणिर्वेण्याकारं जलम् । सूक्ष्मत्वात्कुटिलत्वाच्च वेण्या रूपणम् । यद्वा जलपूर्णा वेणिः प्रवाहो जलवेणिः । 'नद्यादेरन्तरे वेणिः केशस्यापि च बन्धने' इति विश्वः । कुल्यासु कृत्रिमनदीषु विश्रम्य विश्रम्य पुनः पुनर्विश्रामं कृत्वा प्रवहति निःसरति । किंभूतासु । एभिरालवालैर्वृक्षमूले जलधारकैः 'थल' इति प्रसिद्धैः पदे पदे स्थाने स्थाने सकलतरूणां जलप्राप्त्यर्थं ग्रन्थिलासु पर्ववतीषु । विषमास्वित्यर्थः । सिध्मादित्वाल्लच् । प्रवहतीत्यत्र 'प्राद्वहः' इति परस्मैपदम् । 'कुल्या स्यात्कृ-

---

१. 'लक्ष्मणः—(दृष्ट्वा)' इति पाठः. २. 'प्रसव' इति पाठः. ३. 'रामः' इति केषुचित्पुस्तकेषु नास्ति. ४. 'इत्युभौ' इति पाठः. ५. 'तीव्रतरा जलवेणी' इति पाठः.

**रामः**—वत्स, साधु दृष्टम्[1]।

आलवालवलयेषु भूरुहां मांसलस्तिमितमन्तरान्तरा।
केरलीचिकुरभङ्गिभङ्गुरं सारणीषु पुनरम्बु दृश्यते ॥ २५ ॥

तदेहि। भगवतीं[2] कौशिकीमालोकयन्तौ मुहूर्तमात्रमात्मानं पुनीवहे[3]। (परिक्रम्यावलोक्य च।) क्वचित्सांक्रामिकोऽपि विशेषो नैसर्गिकमतिशेते[4]। तथा हि।

जडस्वच्छस्वादुप्रकृतिरुपहूतेन्द्रियगणो
गुणो यद्यप्यासामयमयुतसिद्धो विजयते।
तथाप्युत्कर्षाय स्फुरति[6] सरितामाश्रमसदा-
मिदानीं वानीरद्रुमकुसुमजन्मा परिमलः ॥ २६ ॥

**लक्ष्मणः**—आर्य, पुरस्तादनुकौशिकीतीरमालोकय[5]।

---

त्रिमा सरित्' इत्यमरः। रामोऽतिरम्यत्वेन लक्ष्मणवचनमनुवदति—**आलवालेति**। अम्बु पानीयं सारणीषु स्वल्पनदीषु। यद्वा सारण्यो जलप्रवाहिकास्तासु। पुनर्दृश्यते। कीदृशम्। केरली केरलदेशजाता स्त्री तस्याश्चिकुरभङ्गिः केशकुटिलता तद्वद्भङ्गुरं स्वतः कुटिलम्। केरलदेशस्त्रीणां चिकुराः कुटिला भवन्तीति प्रसिद्धिः। भूरुहां वृक्षाणामालवालवलयेषु वृक्षमूलजलधारकसमूहेष्वन्तरान्तरा मध्ये मध्ये मांसलं प्रचुरम्। सिध्मादित्वाल्लच्। स्तिमितं निश्चलं चेति कर्मधारयः। 'स्वल्पनद्यां च सारणी' इति विश्वः। 'आलवालः स्थितो मूले वृक्षस्य जलधारके' इति च। कौशिकीं नदीभेदम्। पुनीवहे पवित्रीकुर्वः। सांक्रामिक आगन्तुकः। नैसर्गिकं स्वाभाविकम्। उभयोरप्यध्यात्मादित्वाट्ठञ्। अतिशेतेऽभिभवति। सांक्रामिकेण नैसर्गिकस्याभिभवोपपादनार्थं नैसर्गिकं रूपमाह—**जडेति**। आसां सरितां नदीनामयुतसिद्धः पृथक्सिद्धः। 'यु मिश्रणे'। युतं मिलितं न युतमयुतम्। यद्वायुतसिद्धः स्वाभाविको गुणो यद्यपि विजयते। प्रत्यक्षविषयीभवतीत्यर्थः। कीदृशः। जडस्वच्छस्वादुप्रकृतिभूतः स्वभावभूतो यस्य गुणस्य स तथा। तेन जलत्वं स्वच्छत्वं स्वादुत्वं च लभ्यते। अत एवोपहूत आहूतः। आकृष्ट इति यावत्। इन्द्रियगणो येन स तथा। इदानीमुपपाद्यमाह—तथापि वेतसवृक्षपुष्पजन्मा परिमलो गन्ध आश्रमसदामाश्रमाश्रितानामुत्कर्षाय प्रकर्षाय स्फुरति। आश्रमसदामिति 'सत्सूद्विष—' इति क्विप्। 'शीतवानीरवञ्जुलाः' इत्यमरः। 'विमर्दोत्थे परिमलो गन्धमात्रेऽपि दृश्यते' इति विश्वः। अनु समीपे। अवलोकनक्रियापेक्षसमुदायवाक्यार्थस्यात्र

---

१. 'दृष्टम्। अहो' इति पाठः. २. 'कौशिकीभगवतीमवलोकयन्तौ मुहूर्तम्' इति पाठः. ३. 'पुनीमहे' इति पाठः. ४. 'नैसर्गिकमधिकम्' इति पाठः. ५. 'पश्य' इति पाठः. ६. 'श्रयति' इति पाठः.

तैर्मेधाजननव्रतप्रणयिभिर्व्यूहैर्वटूनामियं
सिक्ता नित्यवसन्तविभ्रमवती रम्या पलाशावली ।
एतस्यां हरिणारिपाणिजसृणिश्रेणिश्रियः कोरका
गोपायन्ति तपोवनं वनकरिक्रीडाकराकर्षणात् ॥ २७ ॥

( नेपथ्ये )

रामभद्र, कियच्चिरमवलोकनेन कृतार्थीक्रियन्ते तपोवनविहारभूमयः । संप्रति हि

परिणमयति ज्योतिर्वृत्त्या यजूंषि रुचां पतिः
किमपि शमिनः[1] सावित्राख्यं रहस्यमुपासते ।
गुरुरयमनुष्ठास्यन्[2]माध्यंदिनीं सवनक्रिया-
मिह मखविधौ नेदीयांसं भवन्तमपेक्षते ॥ २८ ॥

---

कर्मता केचित्तु अनुकौशिकीतीरमिति क्रियाविशेषणम् । यद्वानुशब्देन सह कौशिकीतीरपदस्य 'अनुर्यत्समया' इत्यव्ययीभावे सप्तमी । 'तृतीयासप्तम्योर्बहुलम्' इत्यम् । इदानीमचेतनानामप्यनिष्टजनकाद्रक्षकत्वेन च्छलतो मुनीनां तपःप्रभावमाह—**तैरिति** । इयं पलाशावली पलाशवृक्षश्रेणी रम्या । अस्तीति शेषः । कीदृशी । वटूनां मुनिशिशूनां व्यूहैः समूहैः सिक्ता । अत एव नित्यं सर्वदा वसन्तस्य ऋतुविशेषस्य विभ्रमो विलासो विशिष्टो वा भ्रमस्तद्वती । किमर्थं तैः पलाशावली सिच्यत इत्यत आह—मेधेति । 'धीर्धारणावती मेधा' इत्यमरः । मेधाजननाख्यं व्रतं छन्दोगब्रह्मचारिभिः क्रियते । तत्र जलेन पलाशमूलसेचनं क्रियत इति समाचारः । एतस्यां पलाशावल्यां कोरकाः कलिका वनकरिणां वनहस्तिनां क्रीडया यत्करेण स्थूलहस्तेन कर्षणं तस्मात्तपोवनं गोपायन्ति रक्षयन्ति । 'गुपू रक्षणे' 'गुपूधूप–' इत्यादिनायः । रक्षणकारणं कलिकाविशेषणमाह—हरिणारेः सिंहस्य ये पाणिजा नखास्त एव सृणिश्रेण्यङ्कुशपङ्क्तिस्तद्वच्छ्रीः शोभा यासां तास्तथा । 'व्यूहस्तु बलविन्यासे निर्मले वृन्दतर्कयोः' इति धरणिः । 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः । 'कलिका कोरकः पुमान्' इति च । प्रस्तुतयज्ञरक्षामपहायाप्रस्तुतेऽत्यन्तासक्तिं रामभद्रस्याशङ्क्य रसान्तराय शुनःशेफः प्रेरयति—**नेपथ्य इत्यादि** । अयमेव चूडिकानामालंकारः । तथा च भरतः—'अन्तर्जवनिकासंस्थैः सूतमागधवन्दिभिः । अर्थोपक्षेपणं यद्धि क्रियते सा तु चूडिका ॥' इति । कृतार्थः कृतप्रयोजनः । विहारः क्रीडा । **परीत्यादि** । रुचां पतिः सूर्यो ज्योतिर्वृत्त्या ज्योतीरूपतया यजूंषि परिणमयति । परिणतानि करोतीत्यर्थः । मध्याह्ने यजुर्मयत्वादा-

---

१. 'यमिनः' इतिः. २. 'अधिष्ठास्यन्' इति पाठः.

**रामः**—(अ[1]श्रुतमभिनीय सानुरागम्।)

वा[2]रांस्त्रीनभिषुण्वते विदधते वन्यैः शरीरस्थिती-
रैणेय्यां त्वचि संविशन्ति वसते चापि त्व[3]चस्तारवीः।
तत्पश्यन्ति च धाम नाभिपततो यच्चार्मणे चक्षुषी
धन्यानां वि[4]रजस्तमा भगवती चर्येयमाह्लादते ॥ २९ ॥

(नेपथ्ये पुनस्त[5]देव पठ्यते।)

**रामः**—(श्रुत्वा ससंभ्रममूर्ध्वमवलोक्य च[6]।) कथं ग[7]गनमध्यमध्यारूढो निदाघदीधितिः। व[8]त्स, तदेहि। यज्ञवाटमधिष्ठाय क्रमेण कृताह्निकस्य भगवतः कौशिकस्य प्रत्यनन्तरीभवावः।

(इति परिक्रामतः।)

---

दित्यस्य। 'ऋङ्मयः प्रातरादित्यो मध्याह्ने च यजुर्मयः। सायं साममयश्चेति त्रयीमय उदाहृतः॥' इति पुराणम्। अत एवाग्रे वक्ष्यति—'एतत्त्रयीमयं ज्योतिरादित्याख्यं निमज्जति' इति। शमिनो मुनयः। सावित्राख्यं सावित्री मध्याह्नसंध्या तस्याः संबन्धि सावित्रं तेन तदाख्या यस्य तत्। यद्वा सवितृदेवताकं सावित्रनामधेयं वा रहस्यं तत्त्वम्। मन्त्रमिति यावत्। उपासते। सेवन्त इत्यर्थः। अयं गुरुर्विश्वामित्रो मखविधौ यज्ञविधौ मध्यंदिनभवां सवनक्रियां स्नानव्यापारमनुष्ठास्यन्। अनुष्ठानं कर्तुमिति यावत्। तुमर्थे लृट्। भवन्तं रामभद्रं नेदीयांसं निकटस्थमपेक्षते। 'सवनं त्वध्वरे स्नाने' इति विश्वः। 'रहस्तत्त्वे रसे गुह्ये' इति च। नेदीयांसमिति 'अन्तिकबाढयोर्नेदसाधौ' इति नेदादेशः। आश्रमवैचित्र्यदर्शनासक्तमनाः पुनराश्रममेवोपवर्णयति—वारानिति। धन्यानामियं विरजस्तमा विगतरजस्तमोगुणा। सात्त्विकीत्यर्थात्। चर्या कृतिराह्लादते। सुखयतीत्यर्थः। 'ह्लादी सुखे च'। यद्वेर्यापथस्थितिश्चर्या। 'चर्या त्वीर्यापथस्थितिः' इत्यमरः। ईर्यते गुरोः शास्त्रस्योपासनया ज्ञायत ईर्या। तस्याः पन्था उपाय ईर्यापथः। तत्र ध्यानधारणाद्युपाये या स्थितिरवस्थानं परिव्राजकादीनां सा चर्याशब्दवाच्या। चर्यास्वरूपमाह—वारानिति। एते। धन्या इत्यर्थात्। त्रीन्वारान्व्याप्याभिषुण्वते स्नान्ति। वारानित्यत्यन्तसंयोगे द्वितीया। वन्यैः फलमूलादिभिः शरीरस्थितीः प्राणरक्षा विदधते कुर्वन्ति। ऐणेय्यामेणी हरिणीभेदस्तद्विकारभूतायां त्वचि संविशन्ति शेरते। तारवीस्तरुविकारास्त्वचो वसते परिदधति। यच्च धाम तेजश्चार्मणे चर्ममये चक्षुषी नाभिपततो न गच्छतस्तद्धाम पश्यन्ति। समाधिस्वरूपचक्षुषा परमात्मस्वरूपं तेजः पश्यन्तीत्यर्थः।

---

१. 'अश्रुतिम्' इति पाठः. २. 'त्रीन्वारान्' इति पाठः. ३. 'त्वचं तारवीम्' इति पाठः. ४. 'विरजन्तमा' इति पाठः. ५. 'तथैव' इति पाठः. ६. केषुचित्पुस्तकेषु चकारो नास्ति. ७. 'गगनमध्यारूढः'; 'गगनमध्यमारूढः' इति पाठः. ८. 'वत्स' इति क्वचिन्नास्ति.

**लक्ष्मणः**—(सर्वतो दृष्ट्वा।) आर्य,

उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपल-
ज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः।
भौमोष्मप्लवमानसूर्यकिरणक्रूरप्रकाशा दृशो-
राविष्कर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिशः॥ ३०॥

अन्तिकतमा चेयं यज्ञवाटभूमिः। तदेतदेव न्यग्रोधच्छायामण्डपमध्यासीना ऋत्विजः प्रत्यवेक्षामहे। गलितयौवने पुनरहनि भगवन्तं द्रक्ष्यावः।

---

ऐणेय्यामिति 'एण्या ढञ्' इति विकारे ढञ्। वसत इति 'वस आच्छादने'। 'आत्मनेपदेष्वनतः' इति झस्यातादेशः। तारवीरिति तरोर्विकारः। अण्। 'ओर्गुणः'। 'टिड्ढाणञ्–' इति ङीप्। चार्मणे इति चर्मणो विकारः। 'तस्य विकारः' इत्यण्। 'कोशे टिलोपो वक्तव्यः' इति नियमात्कोशादन्यत्र टिलोपाभावः। ससंभ्रमं सादरमित्यर्थः। मामपि कौशिकोऽप्यपेक्षत इति भावः। वाटो मार्गोऽग्निर्वा। अधिष्ठायाश्रित्य। अह्ना दिवसेन निर्वृत्तमाह्निकम्। 'तेन निर्वृत्तम्' इति ठञ्। 'अह्नष्टखोरेव' इति नियमाट्टिलोपाभावः। 'अल्लोपोऽनः' इत्यल्लोपः। प्रत्यनन्तरः संनिहितः। मध्याह्नसंचारस्यातिदुःखजनकतया क्षणं छायामाश्रयितुमना गुरुकार्यानुरोधेन रामं छायाश्रयणानुत्कण्ठितमालोक्य साक्षाद्वक्तुमशक्यतया मध्याह्नवर्णनेनार्थाद्विश्रामं कर्तुमाह—**उद्दामेति**। धिक्कष्टे निन्दायां वा। अमूर्मध्याह्ने शून्या दिशः। मध्याह्ने खल्वातपभयाज्जनसंचाराभावात्। दृशोश्चक्षुषोराविष्कर्माविष्कारः। प्रसरणमिति यावत्। समापयन्त्यपहरन्ति। क्वचित् 'आयुष्कर्म' इति पाठः। तत्र प्राणधारणसामर्थ्यमित्यर्थः। क्वचित् 'मध्येऽह्नि शून्या दिशः' इति पाठः। भगवतः सूर्यस्यात्यन्ततेजःप्रसरणाच्चक्षुस्तेजो न प्रसरति। सौरतेजसैवाभिभूतत्वात्। उद्दामा प्रबला या द्युमणिद्युतिः सूर्यदीधितिस्तस्या व्यतिकरः संबन्धः समूहो वा तेन प्रक्रीडन्योऽर्कोपलः सूर्यकान्तमणिस्तस्य ज्वालाजालेन जटालेव जटाला जाङ्गलतटी निर्जलदेशस्तत्र निष्कूजो निःशब्दोऽथवा निःशेषेण शब्दयोगी कोयष्टिष्टिट्टिभः 'कोण्टाडावुक' इति प्रसिद्धो जलपक्षी यासु तादृशाः। भूम्या अयं भौमः ऊष्मा तापस्तत्र प्लवमाना भ्रमन्तो ये सूर्यकिरणास्तैः क्रूरः कठिनः प्रकाशो यासु तास्तथा। जटालेति 'जटाघटाकटाकालाः क्षेपे' लच्। 'उद्दामो बन्धुरहिते स्वतन्त्रे च प्रचेतसि' इति मेदिनीकरः। 'द्युमणिस्तरणिर्मित्रः' इत्यमरः। 'जङ्गलं निर्जलस्थानम्' इति धरणिः। 'क्रूरस्तु कठिने घोरे' इति च। मध्यमह्नो म-

---

१. 'निरूप्य' इति पाठः. २. 'सूरकिरण' इति पाठः. ३. 'यज्ञभूमिः। तदेतन्न्यग्रोध' इति पाठः. ४. 'अध्यासीनानृत्विजः' इति पाठः.

रामः—एवमस्तु ।

(इति परिक्रम्य नाट्येनोपविशतः ।)

लक्ष्मणः—(पार्श्वतोऽवलोक्य ।) आर्य,

मध्येव्योम क्रीडयित्वा मयूखान्भानोर्बिम्बे लम्बमाने क्रमेण ।
स्वैरं स्वैरं मूलतः पादपानां पश्य च्छायाः कश्चिदाकर्षतीव ॥ ३१ ॥

रामः—(समन्तादवलोक्य ।) वत्स, मध्यंदिनमतिक्रान्तमिति दिनमप्यतिक्रान्तमेव । [1]पश्य ।

गगनशिखरमुदयाद्रेरधिरूढाः कष्टमर्करथहरयः ।
अस्तमहीधरमधुना झटिति सुखेनावरोहन्ति ॥ ३२ ॥

[2]लक्ष्मणः—आर्य, नूनमद्य रक्षांसि परापतिष्यन्ति । यदयमध्वरवेदिकासंनिधानं ते शुनःशेफमुखेन भगवानुपाध्यायः प्रशास्ति ।

---

ध्याह्नः । 'राजाहःसखिभ्यष्टच्' । 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः । मध्याह्ने शून्या इति सप्तमीसमासः । न्यग्रोधो वटः । न्यग्रोधच्छायैव मण्डप इति रूपकम् । यद्वा छायायां मण्डपः । 'न्यग्रोधो बहुपाद्वटः' इत्यमरः । चिरविलम्बेन कार्यातिपातमाशङ्क्यापरिश्रमेण कौशिकसकाशमाश्रयितुमुचितोऽयं समय इत्यर्थादाह—**मध्येव्योमेति** । व्योम्नो मध्ये मध्येव्योम । 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । मयूखान्किरणान्क्रीडयित्वा । प्रसारयित्वेति यावत् । भानोः सूर्यस्य बिम्बे मण्डले क्रमेण लम्बमाने सति स्वैरं स्वैरं मन्दंमन्दं पादपानां वृक्षाणां मूलतो मूलात्कश्चिच्छाया आकर्षतीव । यथा कोऽप्याकर्षति तथा छाया वर्धत इत्यर्थः । पश्येत्यत्र वाक्यार्थस्य कर्मता । 'छाया स्यादातपाभावे' इति विश्वः । दिनं मध्यं मध्यावच्छिन्नम् । यद्वा मध्यंदिनमित्यत्र मध्यशब्दान्मदिन्प्रत्यय औणादिकः । दिनमप्यतिक्रान्तमेव । मध्यंदिनातिक्रमणस्य बहुसमयसाध्यत्वात्तस्मिन्नतिक्रान्ते दिनमप्यतिक्रान्तमिति भावः । लक्ष्मणतात्पर्यमवगम्यार्थात्तत्रानुमतिमाह—**गगनेति** । अर्करथहरयः सूर्यस्यन्दनाश्वा उदयपर्वताद्गगनशिखरं शिखराकारं गगनम् । यद्वा गगनशब्देनात्युच्चप्रदेश उच्यते । तस्य शिखरमग्रमधिरूढाः । कष्टं यथा स्यादेवम् । ऊर्ध्वगमनस्याशक्यसाध्यत्वात् । अधुना संप्रति झटिति शीघ्रमस्तमहीधरमस्तपर्वतं सुखेनावरोहन्ति । अधोगमनस्य सुशकत्वात् । क्वचित् 'झगिति' इति पाठः । तत्रापि द्रुतमित्यर्थः । 'द्रागझटित्यञ्जसाह्नाय स्राङ्मङ्क्षु सपदि द्रुतम्' इत्यमरः । 'हरिश्चन्द्रार्कवाताश्व–' इत्यादि विश्वः । 'शिखरोऽस्त्री शैलशृङ्गे द्रुमाग्रे शकलाग्रयोः' इति मेदिनीकरः । परापतिष्यन्त्यागमिष्यन्ति । उपाध्यायः कौशिकः ।

---

१. 'तथाहि' इति पाठः. २. 'लक्ष्मणः—(सहर्षम् ।)' इति पाठः.

**रामः**—(सरोषाहंकारम् ।) वत्स, यद्येवं स्यात्

कल्पान्तकर्कशकृतान्तभयंकरं मे
निष्प्रघ्नतः क्रतुविघातकृताममीषाम् ।
नीराक्षसां वसुमतीमपि कर्तुमद्य
पुण्याहमङ्गलमिदं धनुरादधातु ॥ ३३ ॥

**लक्ष्मणः**—(विहस्य ।) कथं रजनीचरचक्रविनाशोत्कण्ठाविसंस्थुलमार्यहृदयमदीर्घदर्शिनं भगवन्तं कौशिकमपि संभावयति ।

अविद्यावीजविध्वंसादयमार्षेण चक्षुषा ।
कालौ भूतभविष्यन्तौ वर्तमानमवीविशत् ॥ ३४ ॥

**रामः**—किमुच्यते तत्रभवान्विश्वामित्रः ।

प्रज्ञातब्रह्मतत्त्वोऽपि स्वर्गीयैरेष खेलति ।
गृहस्थसमयाचारप्रक्रान्तैः सप्ततन्तुभिः ॥ ३५ ॥

---

प्रशास्त्याज्ञापयति । लक्ष्मणस्य रक्षःपरापतनभीतिमाशङ्क्य तामपनेतुं रक्षोवधे स्वप्रागल्भ्यमाह—**कल्पान्तेति** । ममेदं धनुर्वसुमतीमपि नीराक्षसां रक्षःशून्यां निर्गताः पलायिता राक्षसा यस्यां तादृशीं कर्तुम् । पुण्यं च तदहश्चेति कर्मधारयः । पुण्याहं रक्षोमरणदिनम् । 'पुण्यसुदिनाभ्यामह्नः' इति नपुंसकत्वम् । तत्र मङ्गलं शुभकर्मादधातु । न केवलं लङ्काम्, अपि तु भूमिमात्रमपीत्यपेरर्थः । यद्वा पुण्याहं जन्मदिनसुखरात्रिकाद्युत्सवदिनं तत्र मङ्गलं यत्क्रियते तत्पुण्याहमङ्गलपदेनोच्यते । यस्य च तत्क्रियते स सततमभ्युदयी भवति । तथेदमपि मम धनुर्भवत्विति भावः । मम कीदृशस्य । क्रतुविघातकृताममीषां राक्षसानां निष्प्रघ्नतो यज्ञनाशकान्मारयतः । अमीषामित्यत्र 'जासिनिप्रहण–' इत्यादिना कर्मणि षष्ठी । धनुः कीदृशम् । कल्पान्ते प्रलये यः कर्कशः कठिनः कृतान्तो यमस्तद्वद्भयंकरं भीषणम् । 'मेघर्तिभयेषु कृञः' इति खच् । 'कृतान्तो यमुनाभ्राता शमनो यमराड्यमः' इत्यमरः । यद्येवं स्यादिति रामभद्रवचनं तर्कमुखं विभाव्याह—कथमिति । चक्रं समूहः । विसंस्थुलं विपर्यस्तम् । अदीर्घदर्शिनमपण्डितम् । संभावयति बोधयति । 'दूरदर्शी दीर्घदर्शी धीरः' इत्यमरः । तत्त्वज्ञानित्वमस्य स्थापयति—**अविद्येति** । अयं विश्वामित्रोऽविद्याया मिथ्याज्ञानस्य वीजं कारणं पापं तस्याभावादार्षेण ध्यानरूपेण चक्षुषा । यद्वा वेदजनिताध्यात्मज्ञानेन । 'ऋषिर्वेदे मुनौ तत्त्वे' इति विश्वः । भूतभविष्यन्तावतीतानागतौ कालौ वर्तमानं कालमवीविशत्प्रवेशितवान् । भूतं भविष्यन्तं

---

१. 'आदधाति' इति पाठः. २. 'चक्र' इति क्वचिन्नास्ति. ३. 'भगवन्तम्' इति क्वचिन्नास्ति. ४. 'वत्स, किमुच्यते तत्रभवान्कौशिकः । तथा हि' इति पाठः.

अपि च।

आर्द्रीकृतो विनयनम्रमहेन्द्रमौलि-
मन्दारदाममकरन्दरसैरिवायम्।
प्रक्रान्तकुण्डलितनूतनभूतसर्ग-
स्त्रैशङ्कवं चरितमद्भुतमाततान ॥ ३६ ॥

**लक्ष्मणः**—(पुरोऽवलोक्य। [1]सहर्षम्।)

[2]आभिरध्वरचर्याभिः श्रौतमर्थं कृतार्थयन्।
अये कुलपतिः सोऽयमित एवाभिवर्तते ॥ ३७ ॥

(ततः प्रविशति दीक्षितवेषो विश्वामित्रः।)

**रामः**—(निर्वर्ण्य। सबहुमानम्।) वत्स लक्ष्मण, पश्य।

कर्मणः श्रूयमाणस्य व्यञ्जनैरधिकोज्ज्वलाम्।
तपस्तेजोमयीं लक्ष्मीमद्य पुष्णाति मे गुरुः ॥ ३८ ॥

---

च कालमयं वर्तमानकालमिव ध्यानेन पश्यतीत्यर्थः। अवीविशदिति 'विश प्रवेशने'। ण्यन्ताल्लुङ्। [प्रज्ञातेति।] ब्रह्माध्यात्मतत्त्वस्वरूपम्। यद्वा चिदानन्दरूपं ज्ञानम्। स्वर्ग्यैः स्वर्गहितैः। 'तस्मै हितम्' इति छः। यद्वा स्वर्गफलकैः। खेलति क्रीडति। समयो व्यवहारः कालो वा। आचारः क्रिया प्रचारो वा। प्रक्रान्तैरारब्धैः। सप्ततन्तुभिर्यज्ञैः। ज्ञातब्रह्मतत्त्वस्यापि विश्वामित्रस्य यद्ब्रह्मस्थाचरणीययज्ञाचरणं तत्क्रीडैवेति भावः। 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः। 'तत्त्वज्ञानित्वे चास्य सृष्ट्यादिकारित्वं प्रमाणमाह—**आर्द्रीकृत इति**। एष विश्वामित्रस्त्रैशङ्कवं त्रिशङ्कुसंबन्ध्यद्भुतमाश्चर्यकारि चरितमाततान विस्तारयामास। विनयेन नम्रो यो महेन्द्रस्तस्य मौलौ यन्मन्दारदाम देवतरुपुष्पमाला तस्य मकरन्दरसैरिवार्द्रीकृतः। इवशब्द उत्प्रेक्षायाम्। दयया स्तिमित इत्यर्थः। अत एव प्रक्रान्त उपक्रान्तः। कुण्डलितः संकोचितः। अनयोः कर्मधारयः। नूतनभूतसर्गो लोकसृष्टिर्येन तादृशः। 'पञ्चैते देवतरवो मन्दारः पारिजातकः' इत्यमरः। 'मकरन्दः पुष्परसः' इत्यपि। त्रैशङ्कवमित्यण्। 'ओर्गुणः'। 'नासूचितं विशेत्पात्रम्' इत्यादिभरतवाक्याद्विश्वामित्रप्रवेशं सूचयितुमाह—**आभिरिति**। श्रौतं वेदोक्तमर्थमभिधेयं यागादि कृतार्थयन्। सत्यापयन्नित्यर्थः। शिष्टाचारो हि तत्र प्रमाणमित्याशयः। अकस्मादनाकलिताकलने अयेशब्दः। इत एव। अत्रैव तिष्ठतीत्यर्थः। यज्ञादौ कृतसंकल्पादिनियमो दीक्षितः। पश्य। विश्वामित्रमिति शेषः। विश्वामित्रमतिमृदुमूर्तिमालोक्य लक्ष्मणस्यावज्ञा मा जायतामिति तस्य स्तुतिमाह—**कर्मण इति**। मे मम गुरुर्विश्वा-

१. 'सकौतुकम्' इति पाठः. २. 'स्वाभिः' इति पाठः.

**विश्वामित्रः**—(परिक्रामन्सहर्षम् ।) हन्त । कृतकृत्यप्रायमात्मानं पश्यामः । यतः ।

निर्वृत्तो बहु तावदध्वरभुजामातर्पणोऽयं विधि-
    र्दायादेन समं सुकेतुदुहिता चाद्यैव घानिष्यते ।
पाणौकृत्य पुनर्वृषध्वजधनुर्भङ्गैकशुल्कां वधू-
    मैक्ष्वाके सुरकार्यदिक्षु चलति स्वास्थ्यं विधातास्महे ॥ ३९ ॥

(रामलक्ष्मणावुत्थायोपसर्पतः ।)

**विश्वामित्रः**—(राममतिचिरं निर्वर्ण्य सस्नेहकौतुकम् ।)

एष वैहारिकं वेषमादधानो धनुर्धरः ।
तत्त्वमान्तरमस्माकममृतैरिव लिम्पति ॥ ४० ॥

**उभौ**—(उपसृत्य ।) भगवन्, दाशरथी रामलक्ष्मणावभिवादयेते ।

---

मित्रः श्रूयमाणस्य श्रुतिप्रतिपादितस्य कर्मणो व्यञ्जनैश्चिह्नैरेकभुक्तादिभिरधिकोज्ज्वलां तपस्तेजोमयीं लक्ष्मीं पुष्णाति । हन्त हर्षे । विश्वामित्रो निर्वृत्ततामेव स्फुटयन्रक्षोवधं सूचयति—**निर्वृत्त इति** । अध्वरभुजां देवानामातर्पणस्तृप्तिहेतुर्विधिर्बहु यथा स्यादेव तावन्निर्वृत्तः । किंचिदवशेषयितुमस्तीति हृदयम् । तावच्छब्द उपक्रमेऽवधारणे वा । अद्यैवं सुकेतुदुहिता ताटका दायादेन सुतेन सपिण्डेन वा सह घानिष्यते मारयितव्या । रामभद्रद्वारेति शेषः । कर्मणि लृट् । चिण्वदिट् । ननु तादृक्कठिनकर्मणि रामभद्रः कथं प्रगल्भत इत्याशङ्क्य तत्प्रवृत्त्यौपयिकं रूपं सूचयन्नाह—पाणौकृत्येति । महादेवधनुर्भङ्ग एवैकं शुल्कं पणो यस्यास्तादृशीं वधूं सीतां पाणौकृत्य विवाह्य सुरकार्यदिक्षु । सुरकार्यार्था दिशः सुरकार्यदिशः । शाकपार्थिवादिः । ता दक्षिणाः । तत्र रावणवधात् । दक्षिणदिश एकत्वेऽपि तत्र प्रदेशबहुत्वाद्बहुवचनम् । तत्र ऐक्ष्वाके रामे चलति भ्रमति सति स्वास्थ्यं विधातास्महे करिष्यामहे । चलतीत्यत्र तङोऽनित्यत्वात्परस्मैपदे शतरि सति सप्तमीयम् । पाणौकृत्येति 'नित्यं हस्ते पाणावुपयमने' इति विभक्तिप्रतिरूपकस्य गतिसंज्ञायाम् 'कुगतिप्रादयः' इति समासः । 'आतर्पणं प्रीणने स्यात्' इति मेदिनीकरः । 'दायादस्तु भवेत्पुंसि सपिण्डे तनयेऽपि च' इति च । 'शुल्कं घट्टादिदेये स्यात्पणे च' इत्यादि । **एष इति** । एष रामो ममान्तर्भवमान्तरम् । तत्त्वंपदार्थो मनः । यद्वान्तरं हृदयं तत्त्वं यथार्थं यथा स्यादेवममृतैरिव लिम्पति । अत्यन्ताभीष्टक्रियाकारित्वाद्यथामृतैर्लिप्यते तथा करोतीत्यर्थः । कीदृशः । वैहारिकं वनविहारे वनभ्रमणे साधुं वेषमाकारमादधानः । वैहा-

---

१. 'कृतकृत्यमिवात्मानं पश्यामि' इति पाठः. २. 'यतः' इति क्वचिन्नास्ति. ३. 'धनुर्ध्वंसैक–' इति पाठः. ४. 'अतिचिराय' इति पाठः.

**विश्वामित्रः**—(आलिङ्ग्य।) वत्सौ, किमन्यदाशास्महे।

युवाभ्यामभिनिर्वृत्तयोगक्षेमस्य वज्रिणः।
ऐश्वर्यप्रक्रियामात्रकृतार्थाः सन्तु हेतयः॥ ४१॥

(उभौ तूष्णीमधोमुखौ स्तः।)

**विश्वामित्रः**—(विहस्य[1]।) वत्सौ, समन्तादुपशीलितोऽयं संनिवेशः। केचिद्[2]अस्मदीयास्तपोवनभूमयो रमयन्ति वामुपस्नेहयति वा गार्हस्थ्यमृषीणाम्।

**उभौ**—(सप्रश्रयम्।) भगवन्,

रम्यमेतदरम्यं वा कः परिच्छेत्तुमर्हति।
किं तु द्वयातिगं चित्तमद्य नौ पश्यतोरभूत्॥ ४२॥

(इति[3] सर्वे यथोचितमुपविशन्ति।)

**विश्वामित्रः**—(साकूतस्मितम्।) वत्सौ,

इह वनेषु स कौतुकवामनो मुनिरतप्त तपांसि पुरातनः।
तमिव वामवलोक्य तपस्विनो नयनमद्य मनागुदमीमिलन्[4]॥ ४३॥

(उभौ मुहूर्तमुन्मनीभवतः।)

---

रिकमिति तत्र कुशल इत्यर्थे ठञ्। आशास्महे आशिषं दद्मः। 'आङः शासु इच्छायाम्'। **युवाभ्यामिति**। वज्रिण इन्द्रस्य हेतयोऽस्त्राण्यैश्वर्यप्रक्रियामात्रे कृतार्थाः कृतप्रयोजनाः सन्तु। ध्वंसनीयविरहात्। प्रक्रियाधिकारः परिच्छेदः प्रतिष्ठा वा। मात्रमवधारणे। कीदृशस्य। युवाभ्यां कर्तृभूताभ्यामभिनिर्वृत्तः कृतोऽधिकरूपत्वाप्तिर्योगः पूर्वरूपाप्रच्यवः क्षेमः। यद्वा योगो हविराद्यपूर्वलाभः क्षेमः प्रत्यवायशून्यता यस्य तादृशस्य। 'योगो ध्यानेऽपूर्वलाभे' इति धरणिः। 'हेतिः स्यादायुधज्वालासूर्यतेजःसु योषिति' इति मेदिनीकरः। तूष्णीं मौने। 'मौने च तूष्णीं तूष्णीकाम्' इत्यमरः। उपशीलितोऽवगाहितः। संनिवेशो वनम्। प्रकृतत्वात्। ऋषीणां गार्हस्थ्यं गृहस्थत्वम्। कर्तृ। वां युवाम्। कर्मभूतौ। उपस्नेहयति प्रीणयति। गार्हस्थ्यमिति ब्राह्मणादित्वात्ष्यञ्। गुरुगौरवादाश्रमं स्तौति—**रम्यमिति**। द्वयातिगं रजस्तमःशून्यम्। सत्त्वैकनिष्ठमित्यर्थः। नौ आवयोः। षष्ठीद्विवचने रूपम्। उत्साहवर्धनाय जन्मान्तरीयं संस्कारं रामलक्ष्मणयोरुद्बोधयन्नाह—**इहेति**। स पुरातनो मुनिरिहाश्रमे वनेषु तपांस्यतप्त कृतवान्। कीदृशः। कौतुकेन

---

१. 'विहस्य' इति पाठः. २. 'क्वचित्' इति पाठः. ३. 'इति यथोचितमुपविशन्ति'; 'इति यथोचितमुपविशन्ति सर्वे' इति पाठः. ४. उदमीलयन्' इति पाठः.

**विश्वामित्रः**—(स्वगतम् ।) अये, किमप्युत्साहवर्धनाय प्राग्भवीयमनुस्मारितमन्तःकरणमनयोः । तदेतावदस्तु । अन्यतः [१]क्षिपामि । (प्रत्यगवलोक्य प्रकाशं [२]ससंभ्रमम् ।) कथमुदयगिरिकाश्मीरकुङ्कुमकेदारस्य प्रभातसंध्यालतायाः प्रथमस्तबको गभस्तिमाली हस्ताहस्तिकया कुतूहलिनीभिर्दिगङ्गनाभिर्वारुणीं यावदुपनीतः । (सनिर्वेदं च ।)

[३]यातोऽस्तमेष चरमाचल[४]चूडचुम्बी
　पङ्केरुहप्रकरजागरणप्रदीपः ।
आः [५]सर्वतः स्फुरतु कैरवमाः पिबन्तु
　[६]ज्योत्स्नाकरम्भमुदरंभरयश्चकोराः ॥ ४४ ॥

---

क्रीडया वामनो वामनरूपी । यद्वा कौतुकजनको वामनः कौतुकवामनः । शाकपार्थिवादिः । 'कौतुकं कपटेऽपि स्यात्' इति कोषात्कपटेन वामन इति वार्थः । तमिव पुराणमुनिमिव वां युवामवलोक्योपलभ्य तपस्विनोऽद्य नयनं लोचनं मनाक्स्वल्पमुदमीमिलन्नुदमीलयन्ति स्म । 'किंचिदीषन्मनागल्पम्' इत्यमरः । उन्मनीभवत उन्मनस्कौ भवतः प्राग्भवीयसंस्कारोद्बोधेन तत्तत्कर्मस्मरणात् । उन्मनीभवत इत्यत्र 'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति च्विप्रत्ययः सलोपश्च । प्राग्भवीयं पूर्वजन्मोद्भवम् । 'वृद्धाच्छः' इति छः । अन्तःकरणं मनः । प्रक्षिपामि प्रेरयामि । प्रत्यक् पश्चिमतः । 'दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः' इत्यमरः । उदयगिरिरेव काश्मीरो देशविशेषस्तज्जातं यत्कुङ्कुमम् । कुङ्कुमस्य काश्मीरदेश एवोत्पादत्वात् । तस्य केदारस्य क्षेत्रस्य । प्रभातसंध्याविशेषणम् । अजहल्लिङ्गतयान्वयः । प्रथमस्तबक आद्यगुच्छः । लोहितत्वाद्वर्तुलत्वाच्च । गभस्तिमाली सूर्यः । हस्तश्च हस्तश्च हस्ताहस्तिका । 'हाथी' इति प्रसिद्धा । मयूरव्यंसकादित्वात्समासः । 'इच्कर्मव्यतिहारे' इतीच् । 'अन्येभ्योऽपि दृश्यते' इति दीर्घः । 'न सामिवचने' इति ज्ञापकात्स्वार्थे कन् । 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति स्त्रीत्वम् । 'हस्तानुहस्तिकया' इति पाठेऽनुगतो हस्तोऽनुहस्तः । शेषं समानम् । वारुणी पश्चिमा दिक् । 'केदारोऽद्रौ शिवे क्षेत्रे' इति मेदिनीकरः । 'वारुणी मण्डदूर्वायां प्रतीचिसुरयोरपि' इति च । 'स्याद्गुच्छकस्तु स्तवकः' इत्यमरः । वैराग्यादिना मनःखेदो निर्वेदः । निर्वेदमेव स्फोरयति—**यात इति** । एष सूर्योऽस्तं यातः । चरमाचलस्यास्तपर्वतस्य चूडं शिरश्चुम्बितुं शीलं यस्य सः । 'जातो धिगेषः' इति पाठे

---

१. 'क्षिपामि' इति पाठः. २. 'ससंभ्रमम्' इति क्वचिन्नास्ति. ३. 'जातः स एषः' इति पाठः. ४. चूललम्बी' इति पाठः. ५. 'संप्रति' इति पाठः. ६. 'ज्योत्स्नां कषायमधुरामधुना चकोराः' इति पाठः.

(सर्वतोऽवलोक्य[1] ।)

अयमपि खरयोषित्कर्णकाषायमीष-
द्विसृमरतिमिरोर्णाजर्जरोपान्तमर्चिः ।
मदकलकलविङ्कीकाकुनान्दीकरेभ्यः
क्षितिरुहशिखरेभ्यो भानुमानुच्चिनोति ॥ ४५ ॥

अपि च ।

मन्त्रसंस्कारसंपन्नास्तन्वदौदन्वतीरपः ।
एतत्त्रयीमयं ज्योतिरादित्याख्यं निमज्जति ॥ ४६ ॥

---

धिङ् निन्द्य एष सूर्यश्चरमाचलचूडचुम्बी जात इत्यन्वयः । पङ्केरुहप्रकरः पद्मसमूहस्तस्य जागरणे प्रकाशने प्रदीप इव प्रदीपः । आः सर्वत्र रोषोक्तावनास्थायां वा । 'आः स्मरणेऽपाकरणे कोपसंतापयोरपि' इति मेदिनीकरः । सर्वतः सर्वत्र कैरवं कुमुदं स्फुरतु । शत्रोः सूर्यस्याभावात् । उदरंभरयः कुक्षिंभरयश्चकोराः पक्षिविशेषा ज्योत्स्नाकरम्भं चन्द्रिकारूपदधिसक्तुकं पिबन्तु । अमृतदीधितेरुदयात् । उदरंभरिरिति 'फलेग्रहिरात्मंभरिश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वात्सिद्ध्यति । 'उभौ त्वात्मंभरिः कुक्षिंभरिः स्वोदरपूरके' इत्यमरः । 'सिते कुमुदकैरवे' इति च । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यपि । 'करम्भो दधिसक्तवः' इति च । **अयमपीति** । कैरवस्फुरणचकोरज्योत्स्नापानापेक्षयापिशब्दः । भानुमान्सूर्यः क्षितिरुहशिखरेभ्यो वृक्षाग्रेभ्योऽर्चिस्तेज उच्चिनोति वर्तुलीकरोति । मदकला या कलविङ्की चटकस्त्री 'गर्तुल' इति प्रसिद्धा । तस्याः काकुर्ध्वनिभेदः सैव नान्दी वाद्यभेदः स्तुतिर्वा तत्करेभ्यः । अर्चिः कीदृशम् । खरयोषिद्गर्दभी तस्याः कर्णवत्कषायेण रक्तमिव रक्तं काषायम् । 'तेन रक्तं रागात्' इत्यण् । अर्चिषः कषायत्वं कविसंप्रदायसिद्धम् । यथा यशसः शौक्ल्यम् । ईषत्किंचिद्विसृमरं प्रसरणशीलं यत्तिमिरमन्धकारं तदेवोर्णा भ्रुवोरन्तरावर्तकं तद्वज्जर्जरमन्तरितमुपान्तं समीपं यस्य तत्तथा । यद्वोर्णा शिखा । मेषादिलोमप्रायया तिमिरशिखया जर्जरमन्तरितमुपान्तं समीपं यस्य । यद्वा तिमिरमेवोर्णा योग्यत्वात्कृष्णमेषाहिलोम तया जर्जरोपान्तम् । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इति मेदिनीकरः । 'ऊर्णा मेषादिलोम्न्यग्रे' इति शाश्वतः । विसृमरेति 'सृघस्यदः क्मरच्' । 'खरः स्यात्तीक्ष्णघर्मयोः । गर्दभे स्त्री–' इत्यादि मेदिनीकरः । 'भवेन्मदकलो मत्ते' इति च । 'चटकः कलविङ्कः स्यात्तस्य स्त्री कलविङ्किका' इत्यमरः । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इति च । **मन्त्रेति** । मन्त्रसंस्कारो मन्त्रजनितसंस्कारः । मन्त्रमयत्वादादित्यस्य । उदन्वान्समुद्रस्त-

---

१. 'दृष्ट्वा'; 'अवलोक्य च' इति पाठः.

**रामः**—(सर्वतो निरूप्य ।) वत्स लक्ष्मण,

तापनैरेव तेजोभिः प्लुष्टनिर्वाणमेचकाः ।
दिशो जाताः प्रतीची तु समुदाचरति क्रमात् ॥ ४७ ॥

किं च ।

कांचिद्बिभ्रति भूतिमाश्रमभुवो वैतानवैश्वानर-
ज्वालोपप्लवमानधूमवलभीविश्रान्तदिग्भित्तयः ।
श्रूयन्ते वटवस्तृतीयसवनस्वाध्यायदीर्घानपि
स्पर्धाबन्धमनोहरं प्रति मुहुः स्वान्द्राघयन्तः स्वरान् ॥ ४८ ॥

---

स्येमा औदन्वतीः अपो जलानि तन्वत्कुर्वत् । त्रयी वेदत्रयम् । मन्त्रमयादिति संबन्धेनैव मन्त्रसंस्कारसंपन्नत्वमपामित्याशयः । **तापनैरिति** । प्रतीच्यन्या दिशस्तापनैरादित्यसंबन्धिभिः किरणैः प्लुष्टा दग्धा अनन्तरं निर्वाणा अत एव मेचकाः श्यामा एवंभूता इव जाताः । ज्वलदङ्गारादिकं निर्वाणे सति श्यामत्वमाप्नोतीति ध्वनिः । तु पुनः प्रतीची पश्चिमा दिक् क्रमात्समुदाचरति पूर्वरूपं प्राप्नोति । यद्वा समुदाचरति राजते । यद्वा दिनाद्बिभेतीत्यर्थः । 'समुदाचारस्तु शोभायां पूर्वरूपे भयेऽपि च' इति विश्वः । 'निर्वाणमस्तंगमने' इति । 'कालश्यामलमेचकाः' इत्यमरः । 'प्लुष्टप्लुष्टोपिता दग्धे' इति च । **कांचिदिति** । आश्रमस्य भूमयः कांचिदनिर्वचनीयां भूतिं शोभां बिभ्रति धारयन्ति । कीदृश्यः । वितानसंबन्धी यो वैश्वानरो वह्निस्तस्य ज्वालयोपप्लवमानोऽधिकतां गच्छन्यो धूमः स एव वलभी सौधोपरिगृहम् । उच्चैस्त्वेन रूपकम् । तत्र विश्रान्ता विशेषतो श्रमं प्राप्ता दिग्भित्तयो दिक्प्रदेशा यत्र तास्तादृश्यः । 'उपोऽधिके च' इति सूत्रादुपशब्दस्याधिकार्थता । 'सौधोपरि कुटीं वलभीं विदुः' इति शाश्वतः । 'भित्तिः कुड्ये प्रदेशे च' इति धरणिः । 'वितानो यज्ञविस्तार—' इति विश्वः । बटवो ब्रह्मचारिणः शिशवोऽपि । श्रूयन्त । इहाधाराधेययोरभेदोपचाराद्ध्वनिश्रवणमेव विवक्षितम् । यथा माघे—'अश्रूयत पाञ्चजन्यः' इति । 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः' इति न्यायाद्विशेषणलाभः । कीदृशाः । स्पर्धान्योन्यजिगीषा तस्या बन्धेनानुबन्धेन मनोहरं यथा स्यादेवं प्रति मुहुर्वारंवारं स्वान्स्वरान्द्राघयन्तो दीर्घाकुर्वन्तः । 'प्रियस्थिर—' इत्यादिना दीर्घस्य द्राघादेशः । कीदृशान् । तृतीयसवने स्नाने स्वाध्यायेन जपेन दीर्घानपि । 'स्वाध्यायः

---

१. 'अवलोक्य' इति पाठः. २. 'दग्ध—' इति पाठः. ३. 'वडभीविश्रान्त—' इति पाठः.

विश्वामित्रः—वत्स राघव[1],

उन्मुक्ताभिर्दिवसमधुना सर्वतस्ताभिरेव
स्वच्छायाभिर्निचुलितमिव प्रेक्ष्यते विश्वमेतत्।
पर्यन्तेषु ज्वलति जलधौ रत्नसानौ च मध्ये
चित्राङ्गीयं रमयति तमःस्तोमलीला[2] धरित्री॥ ४९॥

लक्ष्मणः—(सनिर्वेदम्।)

तेजोमयं तमोमयमन्यतरस्यां तदेव दिक्चक्रम्।
किमपि विचित्रा धात्रा[3] सृष्टिरियं भुवनकोषस्य॥ ५०॥

(सर्वतोऽलोक्य।)

चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलान्युज्ज्वलानि
प्रेक्ष्यन्ते चक्रवाकीमनसि निविशते सूर्यकान्तात्कृशानुः।
किं चामी शल्ययन्तस्तिमिरमुभयतो निर्भराहस्तमिस्रा-
संघट्टोत्पिष्टसंध्याकणनिकरपरिस्पर्धिनो भान्ति दीपाः॥ ५१॥

---

स्याज्जपे' इत्यमरः। **उन्मुक्ताभिरिति**। ताभिरेव स्वच्छायाभिरिदानीं सर्वतः सर्वत्र निचुलितमिव पिहितमिवैतद्विश्वं संसारः प्रेक्ष्यते दृश्यते। मया जनैर्वा। कीदृशीभिः। दिवसं व्याप्योन्मुक्ताभिरुच्छन्नाभिः। दिने सौरेण तेजसाभिभूताभिरित्यर्थः। दिवसमित्यत्यन्तसंयोगे द्वितीया। पर्यन्तेषु प्रान्तेषु जलधौ समुद्रे मध्ये रत्नसानौ सुमेरौ च ज्वलति सति चित्राङ्गी सतीयं धरित्री पृथिवी रमयतितरामत्यर्थं रतिमुत्पादयति। कीदृशी। तमःस्तोमस्यान्धकारसमूहस्य लीला विलासो यस्यां सा। अत एव चित्राङ्गी। तमःस्तोमरत्नसलिलसंबन्धाच्छ्यामरक्तश्वेतत्वसंभवात्। 'रत्नसानुः सुरालयः' इत्यमरः। **तेजोमयमिति**। भुवनकोषस्य ब्रह्माण्डस्येयं धात्रा सृष्टिः किमप्यनिर्वचनीयं यथा भवत्येवं विचित्राश्चर्यजनिका। कुत इत्यत आह—तेजोमयमित्यादि। अन्यतरस्यांशब्दः समुच्चये विकल्पे वा। तदेव दिक्चक्रं तेजोमयं तमोमयं च। एकतस्तेजोमयमन्यतस्तमोमयमित्यर्थः। धात्रा सृष्टिरिति 'उभयप्राप्तौ कर्मणि—' इति कर्मण्येव षष्ठी। अतः कर्तरि तृतीया। 'विचित्रा सूत्रस्य कृतिः पाणिनिना' इतिवत्। 'कोषो जीवे धने कोशे' इति धरणिः। **चूडारत्नैरिति**। विषधरविवराण्युज्ज्वलान्युज्ज्वलान्यत्यन्तोज्ज्वलानि दृश्यन्ते। कैः। चूडारत्नैः। अर्थात्सर्पाणामेव। कृशानुरग्निः सूर्यकान्तान्मणिविशेषाच्चक्रवाकी मनसि निविशते प्रविशति। रात्रौ चक्रवाकीणां विरहेण संतापोदयात्। किं चामी दीपा भान्ति

---

१. 'रामभद्र' इति पाठः. २. 'तमस्तोमनीला' इति पाठः. ३. 'धातुः' इति पाठः.

**रामः**—(विलोक्य।)

विश्वं चाक्षुषमस्तमस्ति हि तमःकैवल्यमौपाधिक-
प्राच्यादिव्यवहारबीजविरहाद्दिङ्मात्रमेव स्थितम्।
गृह्यन्ते भयहेतवः पटुभिरप्यक्षान्तरैर्भाति च
ध्वान्तेनातिघनेन वस्तु वचसा ज्ञातः स्वरेणामुकः॥ ५२॥

किं च।

घनतरतिमिरघुणोत्करजग्धानामिव पतन्ति काष्ठानाम्।
छिद्रैरमीभिरुडुभिः किरणव्याजेन चूर्णानि॥ ५३॥

---

शोभन्ते। तिमिरमन्धकारं शल्ययन्तो नाशयन्तः। कीदृशाः। उभयत उभयपार्श्वे निर्भरमत्यर्थं योऽहस्तमिस्रोर्दिनरात्र्योः संघट्टो मिलनं तेनोत्पिष्टायाश्चूर्णितायाः संध्याया ये कणसमूहास्तेषां परिस्पर्धिनस्तुल्याः। लोहितत्वादुत्प्रेक्षा। 'तमिस्रा तामसी रात्रिः' इत्यमरः। 'आशीविषो विषधरः' इति च। 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यपि। निविशत इति 'नेर्विशः' इति तङ्। उभयत इति सप्तम्यां तसिः। अन्धकारप्राचुर्यमाह—**विश्वमिति**। चाक्षुषं चक्षुर्ग्राह्यं विश्वं जगदस्तमस्तमितम्। तिरोहितमिति यावत्। विषयस्यालोकसहकृतचक्षुर्ग्राह्यत्वात् तमःकैवल्यमन्धकार एव केवलमस्ति। उपाधिर्विशेषणं तद्भवमौपाधिकम्। औपाधिको यः प्राच्यादिव्यवहारस्तस्य बीजं कारणमादित्यस्तस्याभावाद्दिङ्मात्रमेव स्थितमस्ति। सूर्योपाधिना हि प्राच्यादिव्यवहारः। सूर्योपाधिविशिष्टा दिक्प्राची, तदस्तमनोपाधिविशिष्टा दिक्प्रतीचीत्यादिरस्त्यौपाधिको व्यवहारः। स चोपाधेरादित्यस्याभावान्नास्ति। वस्तुतस्त्वेकैव दिक्। तथा च केवलमेकमेव दिक्स्वरूपं सत्यमस्तीत्यर्थः। सामान्यतो दिगवस्थिता न तु प्राच्यादिरूपेण। तथात्वेनाग्रहादिति भावः। अक्षान्तरैस्त्वगादिभिर्भयहेतवो भयकारणानि पदार्था गृह्यन्ते। भयहेतुत्वेनेत्यर्थः। तथा हि रज्जवः स्पृष्टा भोगित्वेन ज्ञायन्ते। पटुभिरपि विषयग्रहसमर्थैरपि। तेषां तमसानभिभवात्। चक्षुर्मात्रे हि तमसोऽभिभावकत्वम्। तथापि रज्जुषु भोगिज्ञानं तमोमाहात्म्यादिति भावः। पटुभिरपीत्यपिर्विरोधे। अक्षमिन्द्रियम्। अतिघनेन च ध्वान्तेनान्धकारेण हेतुभूतेन वस्तु पदार्थो घटपटादिरूपो वस्तुत्वेन भाति। न तु घटत्वादिना। यद्वा वस्तु पदार्थो वचसा भाति। अयं घट इत्याप्तवाक्येन घटत्वेन ज्ञायते न चक्षुषा। स्वरेण चामुको ज्ञातनाम्नि प्रसिद्धः सर्वपर्यायो देवदत्तादिर्ज्ञात उपलब्धः। तमःप्राबल्याच्चक्षुषाग्रहणादिति भावः। ज्ञात इत्यत्र 'जातिः' इति पाठे वचसा साधारणेन शब्देन। जातिर्मनुष्यत्वादिका। अमुको देवदत्तादिः। स्वरेणासाधारणेन भातीति सर्वत्रान्वीयते। अमुक इति लोकोक्तिः सर्वसाधारणी। अन्यानि तु पाठव्याख्यानान्यसारत्वादुपेक्षितानि। **घनतरेति**। काष्ठानां दिशां चूर्णान्यमीभिरुडुभिर्नक्षत्ररूपैश्छिद्रै-

(नेपथ्ये कलकलः ।)

(सर्वे ससंभ्रममाकर्णयन्ति ।)

(पुनस्तत्रैव ।)

निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिशक्रूरतारा नरास्थि-
ग्रन्थिं दन्तान्तरालग्रथितमविरतं जिह्वया घट्टयन्ती ।
ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजर्जरे व्यक्तकर्मा
निर्मान्ती गृध्ररौद्रीं दिवमुपरि परिक्रीडते ताडकेयम् ॥ ५४ ॥

अपि च ।

त्रेताग्निकुण्डपूरं च वर्षन्तो रुधिरच्छटाः ।
हिंस्राः सुबाहुमारीचमिश्रा नः परिवृण्वते ॥ ५५ ॥

---

रन्ध्रैः किरणव्याजेन पतन्ति । कीदृशानाम् । घनतरं निबिडं यत्तिमिरमन्धकारः स एव घुणोत्करो घुणसमूहस्तेन जग्धानां भक्षितानामिव । काष्ठादौ यो लगति कीटः स घुणः । काष्ठं दारु । काष्ठा दिक् । अन्येषामपि घुणभक्षितानां काष्ठानां चूर्णानि पतन्तीति ध्वनिः । अदो जग्ध्यादेशः । 'काष्ठं दारु' इत्यमरः । 'दिशस्तु ककुभः काष्ठाः' इत्यपि । 'तारकाप्युडु वा स्त्रियाम्' इति च । कलकल इति । शुनःशेफप्रभृतीनामित्यर्थः । ताडकायाः क्रूरकर्मालोकनादिति भावः । 'कोलाहलः कलकलः' इत्यमरः । **निर्मज्जदिति ।** इयं ताडकानाम्नी राक्षसी उपर्यूर्ध्वदेशे आकाशे परिक्रीडते । क्रीडां करोतीत्यर्थः । कीदृशी । निर्मज्जन्निम्नीभवत् । कोटररूपमिति यावत् । यच्चक्षुस्तस्यान्तर्मध्ये भ्रमन्त्यतिकपिशा क्रूरा दुर्दर्शा तारा नेत्रकनीनिका यस्याः सा । दन्तान्तराले दन्तमध्ये ग्रथितं लग्नं नरास्थिग्रन्थिं मनुष्यास्थ्नो ग्रन्थिमविरतं वारंवारं जिह्वया घट्टयन्ती चालयन्ती । अन्धकारे कथमेवंकुर्वाणा दृश्यत इत्यत आह—व्यात्तं विस्तीर्णं यन्मुखं तत्र ज्वलन्ती यानलशिखा तया जर्जरे ध्वान्तेऽप्यन्धकारेऽपि व्यक्तं कर्म यस्यास्तादृशी । गृध्रस्येव पक्षिभेदस्येव रौद्रं तीव्रत्वं यस्यां दिवि तादृशीं दिवमाकाशं निर्मान्ती कुर्वाणा । 'आच्छीनद्योर्नुम्' । परिक्रीडत इति 'क्रीडोऽनुसंपरिभ्यश्च' इति तङ् । व्यात्तेति व्याङ्पूर्वाद्ददातेः क्तः । 'अच उपसर्गात्तः' । 'अभ्यन्तरं त्वन्तरालम्' इत्यमरः । **त्रेतेति ।** हिंस्रा घातुका राक्षसा नोऽस्मान्परिवृण्वते वेष्टयन्ति । सुबाहुमारीचाभ्यां मिश्रा मिलिताः । यद्वा मिश्राः प्रधानाः । तथा च सुबाहुमारीचप्रधाना इत्यर्थः । त्रेताग्नित्रयं तस्य कुण्डं पूरयित्वा । 'चर्मोदरयोः पूरेः' इत्यनुवर्तमाने 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति वृष्टिप्रमाणे ण-

---

१. 'आकलयन्ति' इति पाठः. २. 'तत्रैव भोः'; 'भो भोः' इति पाठः.

**विश्वामित्रः**—([1]साकूतम् ।) कथं ताडका । वत्स रामभद्र,

विधानमानुश्रविकं गृहेषु नः प्रतिस्किरन्ती किमियं प्रतीक्ष्यते ।
सुबाहुमुख्यैः सममाततायिभिर्गृहाण चापं निगृहाण ताडकाम् ॥ ५६ ॥

**रामः**—(सघृणातिरेकम् ।) भगवन्, [2]स्त्रियमिमाम् ।

(पुनर्नेपथ्ये ।)

[3]अब्रह्मण्यमब्रह्मण्यम् । भोस्तात विश्वामित्र, परिभूयामहे । प्रहीयता-मधिज्यधन्वा दाशरथिः ।

**रामः**—(विहस्य । नेपथ्यावलोकितकेन ।) बालर्षे शुनःशेफ, मुहूर्तं धीरो भव ।

अलं क्लिशित्वा गुरुमल्पकोऽयं विधिस्त्वदाज्ञैव गरीयसी नः ।
न कौशिकस्य त्वयि धर्मपुत्रे पुत्रे मधुच्छन्दसि वा विशेषः ॥ ५७ ॥

---

सुल् । छटाः समूहान् । 'अग्नित्रयमिदं त्रेता' इत्यमरः । 'शरारुर्घातुको हिंस्रः' इति च । **वत्सेत्यादि** । वत्स रामभद्र, इयं ताडका कथं प्रतीक्ष्यते कथं क्षम्यते । किं तु मार्यतामिति भावः । नोऽस्माकं गृहेष्वानुश्रविकं वैदिकं विधानं प्रतिस्किरन्ती नाश-यन्ती । तस्माद्धेतोः शस्त्रं गृहाण । सुबाहुमुख्यैः सुबाहुप्रभृतिभिराततायिभिः शस्त्रपा-णिभिः समं ताडकां निगृहाण । घातयेत्यर्थः । मुख्य आदिः । प्रशंसेयम् । 'आततायी वधोद्यतः' । 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आतता-यिनः ॥' इति स्मृतिः । प्रतिस्किरन्तीत्यत्र 'हिंसायां प्रतेश्च' इति सुट् । स्त्रियमिमाम् । कथं निगृह्णामीति शेषः । 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः । परिभूयामहे वयं परिभवं प्रा-प्नुमः । ज्या मौर्वी । अधिगता ज्या यत्र तदधिज्यम् । ईदृशं धनुर्यस्य सः । 'धनुषश्च' इत्यनङ् समासान्तः । यद्वा धनुःशब्दसमानार्थो धन्वशब्दस्तस्य प्रयोगः । 'धनुश्चापौ ध-न्वशरासनकोदण्डकार्मुकम्' इत्यमरः । कथमल्पीयसि भयहेतावमी व्याकुला इत्याह—**विहस्येति** । महौजसां महत्यपि भयहेतौ शौर्यातिशयाद्भवति हास इति स्वभावः । बा-लत्वादज्ञत्वेन संबोधनम् । तच्छापमाशङ्क्य तं स्तुवंस्ताडकावधरूपकर्मणि स्वशौर्यम-प्याह—**अलमित्यादि** । गुरुं विश्वामित्रं क्लिशित्वालम् । वृथा गुरुर्न क्लेशनीय इत्यर्थः। अयं ताडकावधरूपो विधिर्व्यापारोऽल्पकोऽत्यल्पः । अल्पार्थे कन् । स्त्रीवधस्य सुखसा-ध्यत्वात् । नोऽस्माकं तवैवाज्ञा गरीयसी । तवैवाज्ञया मया ताडकावधो विधेय इति

---

१. 'साशङ्कमिव'; 'ससंभ्रममिव' इति पाठः. २. 'स्त्रियमिमां कथं हनिष्ये'; 'स्त्रिय-मिमां कथं निगृह्णामि' इति पाठः. ३. 'अब्रह्मण्यं भोः' इति पाठः.

**विश्वामित्रः**—वत्स, कृ[1]तमुत्तरोत्तरेण । नन्वयं नेदीयानाश्रमोपघातः ।

**लक्ष्मणः**—(सव्यथमिव । स्वगतम् ।)

मीमांसते किमार्योऽयं कौशिकेऽप्यनुशासति ।
वाचमेषामृषीणां हि शास्त्रमेवानुवर्तते ॥ ५८ ॥

**रामः**—(स्वगतम् ।)

गुर्वादेशादेव निर्मी[2]यमाणो नाधर्माय स्त्रीवधोऽपि स्थितोऽयम् ।
अद्य स्थित्वा श्वो गमिष्यद्भिरल्पैर्लज्जास्माभिर्मीलिताक्षैर्जितैव ॥ ५९ ॥

किं तु ।

दीर्घं प्रजाभिरतिकौतुकिनीभिराभि-
रस्मिन्नकीर्तिपटहे मम ताड्यमाने ।

---

भावः। गरीयसीत्यत्र गुरुशब्दस्य 'प्रियस्थिर–' इत्यादिना गरादेशः । क्लिशित्वेत्यत्र 'अलंखल्वोः–' इत्यादिना क्त्वा । 'क्लिशः क्त्वानिष्ठयोः' इतीट् । 'न क्त्वा सेट्' इति कित्त्वनिषेधे प्राप्ते 'मृडमृद–' इत्यादिना कित्त्वम् । धर्मेण हेतुना पुत्रः । यद्वा धर्मार्थं पुत्रः । यद्वा धर्मप्रधानः पुत्रो धर्मपुत्रः । तस्मिन्धर्मपुत्रे त्वयि, मधुच्छन्दस्यौरसे वा पुत्रे कौशिकस्य न विशेषः । तथा च सर्वथा तवाज्ञा कर्तव्येति भावः । मधुच्छन्दा नाम विश्वामित्रस्यौरसः पुत्रः । नेदीयान्संनिहितः । 'अन्तिकबाढयोर्नेदसाधौ' इत्यन्तिकशब्दस्येयसुनि रूपम् । कथं स्त्रियमिमां निगृह्णामीति रामभद्रस्य संदिग्धं वचनमसहिष्णोः कौशिकादतित्रस्तस्य लक्ष्मणस्य सव्यथत्वमिति मीमांसते विचारयति । अपि तु विचारयितुं नार्हतीत्यर्थः । 'मान्वध–' आदिसूत्रेण सन्दीर्घश्चाभ्यासस्य । कौशिकेऽपीत्यपिर्विरोधाभासस्फोरणाय । नन्वतिपापजनकं कर्म कथं न विचार्यत इत्यत आह—वाचमिति । हि यतः शास्त्रं कर्तृ, एषां मुनीनामेव वाचमनुवर्ततेऽनुधावति । मुनिवाक्यशास्त्रार्थान्नातिवर्तते । यथा शास्त्रं तथैवेत्यर्थः । 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । शब्देन येनादिश्येत तच्छास्त्रमभिधीयते ॥' इति स्मृतिः । यद्वा मुनीनां वाचमनुलक्ष्यीकृत्य शास्त्रं वेदो वर्तते प्रवर्तते व्यवहरति । तामेवोद्दिश्य वेदप्रवृत्तेः। **गुर्वादेशादिति।** निर्मीयमाणः क्रियमाणः । ननु भवतु पापाभावस्तथापि रघूणां स्त्रीवधे लोकलज्जापि न भवतीत्यत आह—अल्पैरिति । अल्पैर्बालकैर्लज्जा जितैव। अद्यास्मिंस्तपोवने स्थित्वा श्वो गमिष्यद्भिः । अत एव मीलिताक्षैः कृताक्षिनिमीलनैः । अक्ष्णि लज्जा संक्रामत इति लोकोक्तिः । श्वःशब्दआगामिदिनवाच्यव्ययः । 'ह्योऽतीतेऽनागतेऽह्नि श्वः'इत्यमरः । **दीर्घमिति ।** अतिकौतुकिनीभिस्ताडकावधेन साश्चर्याभिराभिः प्रजाभिर्जनैर्दीर्घमत्यर्थं ममा-

---

1. 'कृतं कृतमुत्तरेण'; 'कृतं कृतमुत्तरोत्तरेण' इति पाठः. 2. 'निर्मोयमाणः' इति पाठः.

ज्योतिर्मयेन वपुषा जगदन्तसाक्षी
लज्जिष्यते कुलगुरुर्भगवान्वसिष्ठः ॥ ६० ॥

( नेपथ्ये । )

अलमिष्ट्वा मखान्मूर्खाः खड्गधारेयमस्ति नः ।
अदवीयानयं पन्थाः स्वर्लोकमुपतिष्ठते ॥ ६१ ॥

**रामः**—(श्रुत्वा सरोषं ससंभ्रमं चोत्थाय सविनयमञ्जलिं बद्ध्वा ।) भगवञ्जगत्रयगुरो गाधिनन्दन,

दशरथगृहे संभूतं मामवाप्य धनुर्धरं
दिनकरकुलास्कन्दी कोऽयं कलङ्कनवाङ्कुरः ।
इति नु वनितामेतां हन्तुं मनो विचिकित्सते
यदधिकरणं धर्मस्थीयं तवैव वचांसि नः ॥ ६२ ॥

---

स्मिन्नकीर्तिपटहे स्त्रीवधरूपे ताड्यमाने वाद्यमाने सति भगवान्वसिष्ठः किं तु लज्जिष्यते । मामकीनस्त्रीवधरूपकर्मश्रवणात् । ननु कथमिमं वृत्तान्तं वसिष्ठो ज्ञास्यतीत्यत आह—ज्योतिर्मयेन ब्रह्ममयेन नक्षत्रमयेन वा वपुषा शरीरेण जगतोऽन्तेऽपि प्रलयेऽपि यः साक्षी साक्षाद्द्रष्टा । यद्वा जगतोऽन्तस्य चतुःसमुद्रपर्यन्तस्य साक्षी । द्रष्टेत्यर्थः । साक्षीति 'साक्षाद्द्रष्टरि संज्ञायाम्' इतीनिः । यद्यप्युत्कर्षबुद्ध्यैव लोकेन रामचन्द्रकृतताडकावधप्रकाशनं तथापि रामस्य स्त्रीवधेनापकर्षबुद्धिरित्यकीर्तिपटहत्वेन कीर्तनम् । वसिष्ठस्य ताडकावधज्ञाने प्रजाकृतप्रकाशनं न हेतुः । तस्य ज्योतिर्मयत्वेनैव सकलगोचरज्ञानाश्रयत्वात् । किं तु प्रजाकृततद्वधप्रकाशनं वसिष्ठस्य लज्जायां हेतुः । तथाहि ममापि यजमानरघुकुलस्य स्त्रीवधेनाप्युत्कर्षः प्रथत इति तस्य लज्जेति । नेपथ्ये घातुकानां सुबाहुप्रभृतीनां प्रथमं यागनिन्दापरं स्वमार्गप्रवर्तकं वचनम् । **अलमित्यादि** । हे मूर्खाः । अत्रापि पूर्ववत्क्त्वा । कुतो वृथेत्यत आह—अस्माकमियं खड्गधारास्ति । यज्ञाधिकेति भावः । कुतोऽस्या यज्ञाधिक्यमत आह—अयं पन्था अदवीयान्संनिहितः स्वर्गलोकमुपतिष्ठत उपस्थितो भवति । 'उपाद्देवपूजा–' इति संगतिकरणे तङ् । नानाङ्गैर्व्रीहिप्रोक्षणावघातफलीकरणपुरोडाशहोमप्रभृतिभिर्यागः खलु निष्पाद्यते, तेनापूर्वं जन्यते, तेन च स्वर्गो जन्यत इति स्वर्लोकगमने वक्रः पन्थाः । मम तु खड्गधारापातेन शीघ्रं स प्राप्यत इति यागेनालमिति भावः । तदुक्तम्—'द्वाविमौ पुरुषौ राजन्सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च युद्धे चाभिमुखो हतः ॥' इति । ससंभ्रमं सोद्वेगमित्यर्थः । संभ्रमस्त्वरा वा । तदेव स्फोरयति—**दशरथेत्यादि** । दशरथगृहे संभूतं मां धनुर्धरमवाप्य दिनकरकु-

---

१. 'ससंभ्रममुत्थाय'; 'सरोषसंभ्रममुत्थाय' इति पाठः. २. 'भगवन्गुरो' इति पाठः. ३. 'हि' इति पाठः. ४. 'एनाम्' इति पाठः. ५. 'धर्मस्थानम्' इति पाठः.

(प्रणिपत्य नेपथ्याभिमुखम् ।) भोस्तपोधनाः, मा भैष्ट ।

रजनिचरचमूरमूरपास्यन्नयमहमागत एव रामचन्द्रः ।
कुशिकसुतकुशाग्रतोयबिन्दोरिदमनुकल्पमवेत कार्मुकं मे ॥ ६३ ॥

(इति धनुरारोपयन्निष्क्रान्तः ।)

**लक्ष्मणः**—(साशङ्कमात्मगतम् ।) दिष्ट्या क्षात्रेण धर्मेण कौमारमप्यशून्यमार्यस्यासीत् । (नेपथ्याभिमुखमवलोक्य हर्षं नाटयन्प्रकाशम् ।) भगवन्कौशिक, पश्य पुरस्तादार्ये धृतधनुषि

वायव्यास्त्रव्यतिकरनिरालम्बनस्ताडकेयः
प्राप्तो जीवन्मरणमसुभिर्विप्रमुक्तः सुबाहुः ।

---

त्वमास्कन्दयितुं शीलं यस्य तादृशः कोऽयं कलङ्कस्य नवोऽङ्कुरः । इत्यनेन प्रकारेणैतां वनितां स्त्रियं ताडकां हन्तुं मम मनो न विचिकित्सते । 'अन्यत्रापि दृश्यते' इति वाचनात् । न संदेग्धीत्यर्थः । 'गुप्तिज्किद्भ्यः सन्' । 'विचिकित्सा तु संशयः' इत्यमरः । नन्वेवंविधेऽपि स्त्रीवधरूपकर्मणि कथं न संदेग्धीत्यत आह—यदिति । यद्यस्माद्धेतोर्नोऽस्माकं तवैव वचांसि धर्मस्थीयमधिकरणं धर्मक्रियाप्रवर्तकमधिकरणं निर्णयस्थानम् । तथा च धर्मस्थीयाधिकरणेन विश्वामित्रवचसो रूपणम् । तेन यथान्येषां राज्ञां धर्मस्थीयादधिकरणात्प्रवृत्तिर्निवृत्तिर्वा तथास्माकमपि भवद्वचनादिति भावः । रूपके भिन्नलिङ्गता भिन्नवचनता च न दोषः । सौभाग्यादानात् । 'यदधिकरणं धर्मस्थेयम्' इति पाठे धर्मस्थानमित्यर्थः । 'यदधिकरणं धर्मश्चायम्' इत्यादिपाठो मनोहरो विस्तरभयान्न लिखितः । मा भैष्ट मा भीतिं कुरुध्वम् । 'ञिभी भये' । 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः । **रजनिचरेति** । अयमहमित्यत्यन्ताहंकारे । रजनिचरसेना अपास्यन्मारयिष्यन् । 'असु क्षेपणे' । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यति लट् । दिवादित्वाच्छ्यन् । कौशिकस्य कुशाग्रतोयविन्दोः शान्तिजलस्यानुकल्पं पश्चात्कल्पं गौणमिदं मे कार्मुकं धनुरवेत जानीत । 'इण् गतौ' । सर्वे गत्यर्था ज्ञानार्था इति शाब्दिकाः । यथा कौशिकस्य मन्त्रसंस्कृतकुशाग्रतोयविन्दुः शत्रून्पातयति तथा ममापीदं धनुरिति भावः । 'मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' इत्यमरः । आरोपयन्नधिज्यं कुर्वन् । 'दिष्ट्येत्यानन्दने मतम्' इति भावः । कौमारं बाल्यम् । अशून्यं कृतिक्षमम् । आसीदित्यत्र 'आशंसायां भूतवच्च' इति लङ् । धृतधनुषीत्यत्र 'धनुषश्च' इत्यनङ् न भवति । समासान्तविधेरनित्यत्वात् । सतिसप्तमीयं । **वायव्येति** । अयं ताडकेयस्ताडकापुत्रः सुबाहुर्जी-

---

१. 'नेपथ्याभिमुखमवलोक्य' इति पाठः. २. 'मा भैष्ट तपोधनाः, मा भैष्ट'; 'मा भैष्ट भोस्तपोधनाः, मा भैष्ट' इति पाठः. ३. 'रामभद्रः' इति पाठः. ४. 'सोत्साहशङ्कमात्मगतम्' इति पाठः. ५. 'प्रकाशम्' इति पुस्तकान्तरे नास्ति; 'सप्रकाशम्' इति पाठः. ६. 'पश्य पश्य' इति पाठः. ७. 'धनुषि धृते' इति पाठः. ८. 'विप्रयुक्तः' इति पाठः.

कृत्तोन्मुक्ता भुवि च करुणाश्चर्यबीभत्सहास-
त्रासक्रोधोत्तरलमृषिभिर्दृश्यते ताडकेयम् ॥ ६४ ॥

**विश्वामित्रः**—(विलोक्य ।) वत्स लक्ष्मण, विस्मयेन प्रमोदेन च परवन्तो वयं न वाचामधीश्महे । वक्तव्यमेव वा किमस्ति । न खल्वियमद्यतनी वः प्रतिष्ठा ।

दिक्कूलंकषकीर्तिधौतवियतो निर्व्याजवीर्योद्धता-
स्ते यूयं रघवः प्रसिद्धमहसो यैः सोऽपि देवाधिपः ।
विश्राणैरसुराधिराजविजयक्रीडानिदानं धनुः
पौलोमीकुचपत्रभङ्गरचनाचातुर्यमध्यापितः ॥ ६५ ॥

---

वन्सन्मरणं प्राप्तः । शक्त एव मारित इति भावः । अत एवासुभिः प्राणैर्विप्रमुक्तस्त्यक्तः। वायव्यास्त्रस्य वायुदेवताकस्यास्त्रस्य व्यतिकरेण संबन्धेन निरालम्बन आधारशून्यः । तेन मारणात्पूर्वं कृत्ता छिन्ना पश्चादुन्मुक्ता त्यक्ता सतीयं राक्षसी ताडका । वधस्य स्त्रीविषयत्वेन करुणा, बालेनैव महाराक्षसी ताडका सपुत्रा मारितेत्याश्चर्यम्, तपोवनेऽपि स्त्रीवधाद्बीभत्सः, आः कथं भवत्या कृतो यज्ञभङ्ग इति हासः, ताडकां सपुत्रां नष्टामाकर्ण्य रावणः किं करोतीति त्रासः, तस्यास्तादृशदुश्चेष्टास्मरणात्क्रोधः, एभिरुत्तरलं यथा स्यादेवमृषिभिर्भुवि दृश्यत इत्यर्थः । ताडकेय इति 'स्त्रीभ्यो ढक्' । विस्मयप्रमोदयोः पूर्वोक्त एव हेतुः । परवन्तः पराधीनाः । नाधीश्महे न प्रभवामः । 'ईश ऐश्वर्ये' । वाचामिति 'अधीगर्थदयेशां कर्मणि' षष्ठी । अद्यतन्यद्यभवा । वो युष्माकम् । **दिक्कूलंकषेति** । यूयं तेऽनिर्वचनीयपराक्रमा रघवो रघूणामपत्यानि । अत्र यद्यपि रघोरपत्यं राघव इत्यण्प्रत्ययान्ताद्राघव इत्येव भवति तथापि 'संज्ञापूर्वको विधिरनित्यः' इति वचनसामर्थ्याद्वृद्धेरभावः वस्तुतस्तु 'ते तद्राजाः' इत्यनेन तद्राजसंज्ञायाम् 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्यनेनापत्यवाचिनोऽण्प्रत्ययस्य लोपे कृते वङ्गा इतिवद्रघव इति सिध्यति । कीदृशाः । दिशां कूलंकषा दिक्कूलंकषा या कीर्तिस्तया धौतं प्रक्षालितं वियदाकाशं यैस्ते तादृशाः । निर्व्याजवीर्येण साहजिकप्रभावेणोद्धताः प्रचण्डाः । क्वचित् 'वीरोद्धताः' इति पाठः । तत्र वीरेण वीररसेनोद्धत्ताः प्रगल्भाः । यद्वा वीराश्च त उद्धताश्चेति कर्मधारयः । प्रसिद्धं महस्तेजो येषां ते । तदाकाङ्क्षां पूरयति—यैरिति । यै रघुभिः सोऽपि देवाधिप इन्द्रः पौलोम्याः पुलोमजायाः शच्याः कुचयोर्या पत्राभङ्गरचना पत्रावलीकुटिलताचरणं तस्यां तस्या वा चातुर्यमध्यापितः । रघुभिरेव कृतकृत्यत्वादिन्द्रस्त-

---

१. 'असुभिः' इति पाठः. २. 'न च' इति पाठः. ३. 'वीरव्रताः' इति पाठः. ४. 'पत्रभङ्गि' इति पाठः.

लक्ष्मणः—भगवन्, पश्य।

अद्य नैशाचरीं सेनामेनामुन्मूलयन्नयम्।
आधानं वीरधर्मस्य निर्माय त्वामुपस्थितः ॥ ६६ ॥

(प्रविश्य।)

रामः—(सवैलक्ष्यस्मितम्।)

पूषा वसिष्ठः कुशिकात्मजोऽयं त्रयस्त एते गुरवो रघूणाम्।
महामुनेरस्य गिरा कृतोऽपि स्त्रैणो वधो मां न सुखाकरोति ॥ ६७ ॥

(आश्रममवलोक्य।)

प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोवल्लरी-
वल्याभिर्मखधूमवल्लिभिरमी संमीलितव्यञ्जनाः।
श्वः संचीवरयिष्यमाणबटुकव्याधूतशुष्यत्त्वचो
निद्राणातिथयस्तपोधनगृहाः कुर्वन्ति नः कौतुकम् ॥ ६८ ॥

---

क्रियायामेवासक्त इति भावः। असुराधिराजस्य या विजयक्रीडा तस्या निदानमादिकारणं धनुर्विश्राणैः। कूलंकष इति 'सर्वकूलाभ्रकरीषेषु कषः' इति खच्। पौलोमीति 'तस्यापत्यम्' इत्यण्। ङीप्। 'वीर्यं शुक्रे प्रभावे च' इति मेदिनीकरः। 'निदानं त्वादिकारणम्' इत्यमरः। उत्कर्षमुखेन रामप्रवेशं सूचयति—**अद्येति**। वीरधर्मस्याधानं स्थानं निधानं वा निर्माय कृत्वा। स्वस्मिन्नित्यर्थात्। स्वस्मिन्वीरधर्ममाधायेत्यर्थः। शत्रुसेनावधं कृत्वेति भावः। एवमुक्तप्रमाणेन गुरुकार्यानुरोधेनात्यन्ताकार्यमपि कृत्वानुतापं प्रकटयन्नाह—**पूषेति**। पूषा सूर्यः। वसिष्ठो मैत्रावरुणिः। कुशिकात्मजः कौशिकः। तथा च महामुनेः कौशिकस्य गिरा वाण्या स्त्रैणः स्त्रीसंबन्धी वधो मां न सुखाकरोति न सुखयति। 'सुखप्रियादानुलोम्ये' इति डाच्। स्त्रैण इति 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ्। 'गीर्वाग्वाणी सरस्वती' इत्यमरः। अनुतापापनोदायान्यमनीभवितुमन्यद्वर्णयति—**प्रत्यासन्नेति**। तपोधनगृहा नोऽस्माकं कौतुकं कुर्वन्तीत्यन्वयः। कौतुकहेतुमाह—प्रत्यासन्ना ये तुषारदीधितिकराश्चन्द्रकिरणास्तैः क्लिश्यन्ती नष्टा भवन्ती या तमोवल्लरी अन्धकारसमूहस्तया वल्याभिर्ज्ञेयाभिर्मखधूमवल्लिभिर्यागधूमलताभिः संमीलितं लुप्तं व्यञ्जनं चिह्नं द्वारभित्त्यादिरूपं येषां ते। चन्द्रतेजसा तमोविनाशाच्चन्द्रोदयेऽप्यर्थं धूमलता दृश्यत इति भावः। श्व आगामिदिने संचीवरयिष्यमाणाः परिधास्यमाना बटुकेन व्याधौता

---

१. 'इव' इति पाठः. २. 'आधारम्' इति पाठः. ३. 'विधाय' इति पाठः. ४. 'सवैलक्ष्यम्' इति पाठः. ५. 'तस्य' इति पाठः. ६. 'अयम्' इति पाठः. ७. 'कल्पाभिः' इति पाठः. ८. 'तपोवने' इति पाठः.

(पुरतोऽवलोक्य ।)[1]

स्फुरति पुरतो माद्यन्माद्यच्चकोरविलोचन-
प्रकरकिरणश्रेणीदत्तस्वहस्तघनं महः ।
हृदय लघु मा भूः प्रेयोदर्शनप्रतिभूरयं
कुवलयदृशामिन्दुर्नेत्रे सुधाभिरनक्ति नः ॥ ६९ ॥

---

अत्यर्थं प्रक्षालिताः शुष्यन्त्यस्त्वचो वल्कला येषु ते । क्लिश्यदित्यत्र 'क्लिशू विबाधने' इत्यस्य क्र्यादित्वात्श्ना स्यात् । 'क्लिश उपतापे' इत्यस्य चात्मनेपदित्वाच्छतृ न स्यादित्यसाधुतेति न वाच्यम् । आत्मनेपदविधेरनित्यत्वात् । सहतीत्यादिप्रयोगस्य दृष्टत्वात् । निद्राणो निद्रायुक्तः । 'आतो धातोः' इति निष्ठातकारस्य नकारः । संचीवरयिष्यमाणेति 'पुच्छभाण्डचीवराण्णिङ्' इति परिधानार्थे णिङ् । 'वल्ली तु व्रततिर्लता' इत्यमरः । **स्फुरतीति ।** महस्तेजोऽर्थाच्चन्द्रस्य स्फुरति । कीदृशम् । माद्यन्तोऽत्यर्थं हृष्यन्तः । 'मदी हर्षे' दिवादिः । 'शमामष्टानां दीर्घः श्यनि' इति दीर्घः । ये चकोराणां विलोचनप्रकराश्चक्षुःसमूहास्तेषु किरणश्रेणीभिर्दत्तं स्वहस्तस्य 'स्वहथ' इति प्रसिद्धस्य घनं समूहो येन तत्तादृशम् । यद्वा स्वहस्तोऽवलम्बस्तेन घनं निरन्तरम् । हे कुवलयदृशां हृदय, लघु मा भूः कातरं मा भूयाः । अयमिन्दुश्चन्द्रः प्रेयसोऽत्यन्तप्रियस्य दर्शने प्रतिभूर्लग्नको नोऽस्माकं नेत्रे चक्षुषी सुधाभिरमृतैरनक्ति लिम्पति । नेत्रे इति प्रत्येकं संवन्धः । अन्यथा नेत्राणीति स्यात् । यद्वा न इति 'अस्मदो द्वयोश्च' इत्येकत्र वहुवचनम् । चन्द्रोदयस्य विरहिणां कंदर्पज्वरदाहदायित्वाच्चन्द्रमालोक्य स्वयमेव कुसुमबाणवशगः प्रियः समागमिष्यतीति हृदयाश्वासनमिति भावः । ननु चाप्रस्तुतमिदम् । कुवलयदृशां तत्रासांनिध्यात् । अत्र केचित्—उद्विग्नवचनमिदम् । यथा—'कैकेयि प्रियसाहसे सुतवधान्मातः कृतार्था भव' इति । अपरे तु—आकाशवचनमेतत् । तथा—'कैकेयि कामा फलितास्तवेति' । अन्ये तु—भगवतो हि चेतस्यन्धकारे सति महद्दुःखमुत्पन्नमत आह—हे हृदय मदीय, मा लघु उपतप्तं भूः । अयं कुवलयदृशां प्रेयोदर्शनप्रतिभूरिन्दुः सुधाभिर्नेत्रे अनक्ति । अतोऽन्धकारापनोदः संनिहित इति भावः । इतरे तु—भगवतः प्राच्यां दिशि तेजःपटलं दृष्ट्वा किमयमन्य एव मायावी राक्षसः समायात इति बुद्धिरुत्पन्ना ततो निरूप्याह—हे मदीय हृदय, मा लघु भूर्मा सत्वरं भव । नासौ राक्षसः कश्चित्, किं तु कुवलयदृशां प्रेयोदर्शनप्रतिभूरयमिन्दुः–इति वर्णयन्ति । न चातीतानागतज्ञतया रामस्य नेयं शङ्केति वाच्यम् । सर्वदा तस्य तथात्वानभ्युपगमात् । अन्यथा मायादिदर्शने तस्येतिकर्तव्यतायां मोहस्याप्राप्तिप्रसङ्गात् । मा भूरिति भवतेः 'माङि लुङ्' । सिच् । 'गातिस्था–' इत्यादिना सिचो लुक् । 'न माङ्योगे' इत्यङ्निषेधः । 'प्रतिभूर्लग्नकः पुमान्' इति विश्वः । सकौतुकं

---

१. 'पुरोऽवलोक्य' इति पाठः.

अपि च ।

उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्तिका-
संवर्तव्रतवृत्तयः कतिपये पीयूषभानोः कराः ।
अप्युस्रैर्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जता
विश्वेनेव तमोमयो निधिरपामह्नाय फेनायते ॥ ७० ॥

(सनिर्वेदम् ।)

इन्दुर्यद्युदयाद्रिमूर्ध्नि न भवत्यद्यापि तन्मा स्म भू-
न्नासीरेऽपि तमःसमुच्चयममूरुन्मूलयन्ति त्विषः ।

---

रुचो रमणीयतामाह—**उन्मीलन्तीत्यादि** । पीयूषभानोश्चन्द्रस्य कतिपयेऽसमस्ताः कराः किरणा उन्मीलन्ति प्रसरन्ति । मृणालवत्कोमला रुक्कान्तिर्येषां ते । राजीवानां पद्मानां संवर्तिका नवदलानि तेषां संवर्तः प्रलयः । पत्रसंकोच इति यावत् । व्रतमेव वृत्तिर्व्यापारो येषां ते । उत्प्रेक्षते—तमोमयोऽप्यन्धकारमयोऽप्यन्धकारसमूह एवापां निधिः समुद्रोऽह्नाय झटिति फेनायते फेनमुद्वमति । समूहे मयट् । यद्वा तमोमयोऽन्धकारप्रकृतिः समुद्रः । समुद्रतुल्योऽन्धकार इत्यर्थः । कीदृशः । उस्रैः किरणैर्धवलीभवत्सु गिरिषु पर्वतेषून्मज्जतोन्मज्जनं करिष्यता विश्वेन जगता क्षुब्धो मथित इव । अन्योऽपि समुद्रो गिरिणा मन्दरेण मथितः सन्फेनं त्यक्तवानिति ध्वनिः । क्षुब्ध इति 'क्षुब्धस्वान्तध्वान्त–' इत्यादिना मन्थे निपातित इति यद्यपीत्यादि पूर्वपक्षः, सिद्धान्तश्चात्र 'संक्षुब्धदुग्धमयसागर–' (१।३५) इत्यादौ प्रथमाङ्क एव विवेचित इति तत्रैवालोचनीयमेतत् । कतिपय इति 'प्रथमचरम–' इति जसि विकल्पेन सर्वनामसंज्ञा । फेनायत इति 'फेनाच्च' इति क्यङ् । 'संवर्तः प्रलयः कल्पः' इत्यमरः। 'संवर्तिका नवदलम्' इति च । 'द्राग्झटित्यञ्जसाह्नाय' इत्यपि । 'विश्वं जगति स्यान्नपुंसकम्' इति मेदिनीकरः । निर्वेदो वैराग्यम् । **इन्दुरित्यादि** । इन्दुश्चन्द्र उदयाद्रिमूर्ध्न्यद्याप्येतावतापि कालेन यदि न भवति तदा मा भून्मा भवतु । 'स्मोत्तरे लङ् च' इति लुङ् । 'न माङ्योगे' इत्यङ्निषेधः । ननु तिमिरपटलनाशः कथं स्याद्यदि चन्द्रोदयो न स्यादित्यत आह—अमूस्त्विषोऽपि कर्त्र्यः । अपिर्भिन्नक्रमः । नासीरेऽग्रे तमःसमुच्चयमन्धकारसमूहमुन्मूलयन्ति । तथा च चन्द्रकर्तव्यान्धकारनाशरूपकर्मणस्त्विषैव करणात्कृतमन्यथासिद्धेन चन्द्रोदयेनेति भावः । ननु भवत्वेवं तावत्, चक्षुःप्रीत्याद्यर्थमेवोदेत्वित्यत आह—अक्ष्णोरपि चक्षुषोरपि मुदं हर्षमुद्गिरन्ति । कुमुदैः करणभूतैश्च दिश आमोदयन्ते हृष्यन्ति । स्वार्थे णिच् । 'णिचश्च' इति तङ् । अन्यथा 'गतिबुद्धि–' आदिसूत्रेणाकर्मकान्मुदेः कर्मसं-

---

१. 'अप्युस्रैः' इति पाठः.

अप्यक्ष्णोर्मुदमुद्गिरन्ति[1] कुमुदैरामोदयन्ते दिशः
संप्रत्यूर्ध्वमसौ तु लाञ्छनमभिव्यक्तुं[2] प्रकाशिष्यते ॥ ७१ ॥

(सहर्षम्[3] ।)

काश्मीरेण दिहानमम्बरतलं वामभ्रुवामानन-
द्वैराज्यं विदधानमिन्दुदृषदां भिन्दानमम्भःशिराः ।
प्रत्युद्यत्पुरुहूतपत्तनवधूदत्तार्घदर्भाङ्कुर-[4]
क्षीबोत्सङ्गकुरङ्गमैन्दवमिदं विम्बं समुज्जृम्भते ॥ ७२ ॥

एताश्च

पौलोमीकुचकुम्भकुङ्कुमरजःस्वाजन्यजन्मोद्धताः
शीतांशोर्द्युतयः पुरंदरपुरीसीम्नामुपस्कुर्वते ।

---

ज्ञायां कुमुदानीति स्यात् । यद्वा दिश आमोदयन्ते गन्धयुक्ता भवन्तीत्यर्थः । एतावतापि चन्द्रोदये तस्यानिष्टमाशङ्कते—संप्रतीदानीमसौ चन्द्रो लाञ्छनं कलङ्कमभिव्यक्तुमभिव्यक्तीकर्तुम् । स्पष्टयितुमिति यावत् । ऊर्ध्वं यथा भवति तथा प्रकाशिष्यते । क्वचित् 'अभिव्यक्तम्' इति पाठः । तत्रासौ चन्द्र ऊर्ध्वमभिव्याप्य व्यक्तं स्फुटं लाञ्छनं कलङ्कं प्रकाशिष्यतेऽभिव्यक्तीकरिष्यत इत्यर्थः । एतच्चासंबद्धम् । प्रकाशतेरकर्मकत्वाल्लाञ्छनस्य कर्मत्वानुपपत्तेरिति । अत्र कश्चित्—प्रकाशिष्यत इत्यन्तर्भावितण्यर्थोऽयमर्थः सकर्मक इति । अन्ये तु—व्यक्तं लाञ्छनमभिलक्षीकृत्य ऊर्ध्वं यथा स्यादेवमसौ चन्द्रः प्रकाशिष्यते लाञ्छनसंबन्धिनं प्रकाशं व्यक्तं धास्यतीति । तथा च प्रकाशो लाञ्छनविषयः स चन्द्रविषयो भविष्यतीत्यर्थः—इत्याहुरिति । वस्तुतस्तु प्रथमपाठः साधीयानिति । 'नासीरोऽग्रयाने स्यादग्रेऽपि' इति विश्वः । 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः । **काश्मीरेणेति** । इदमैन्दवमिन्दुसंबन्धि विम्बं मण्डलं समुज्जृम्भते प्रकाशते । काश्मीरेणेव । काश्मीरेण कुङ्कुमेनाम्बरतलमाकाशस्वरूपं दिहानं लिप्तं कुर्वाणम् । 'दिह उपचये' । लट् । शानच् । प्रथमोदितकिरणानामतिलोहितत्वात्काश्मीरसादृश्यम् । वामभ्रुवामङ्गनानामाननस्य मुखस्य द्वैराज्यं प्रातिपक्ष्यम् । सादृश्यमिति यावत् । विदधानम् । इन्दुदृषदां चन्द्रकान्तमणीनामम्भःशिराः पानीयाधारनाडीर्भिन्दानं द्विधा कुर्वत् । प्रत्युद्गच्छन्त्यो याः पुरंदरनगरनार्यस्ताभिर्दत्तो योऽर्घस्तत्रस्था ये दर्भाङ्कुरास्तैः क्षीबो मत्तः । अतिभक्षणान्मत्त इव । 'अनुपसर्गात्फुल्लक्षीव—' इति निपातितः । उत्सङ्गे क्रोडे कुरङ्गो हरिणो यत्र

---

१. 'उद्वहन्ति' इति पाठः. २. 'अभिव्यक्तुम्' इति पाठः. ३. 'सहर्षं च' इति पाठः. ४. 'दूर्वाङ्कुर–' इति पाठः.

एताभिर्लिहतीभिरन्धतमसान्युद्ग्रथ्नतीभिर्दिशः
क्षोणीमास्तृणतीभिरन्तरतमं व्योमेदमोजायते ॥ ७३ ॥

अपि च ।

नैवायं भगवानुदञ्चति शशी गव्यूतिमात्रीमपि
द्यामद्यापि तमस्तु कैरवकुलश्रीचाटुकाराः कराः ।
मथ्नन्ति स्थलसीम्नि शैलगहनोत्सङ्गेषु संरुन्धते
जीवग्राहमिव क्वचित्क्वचिदपि च्छायासु गृह्णन्ति च ॥ ७४ ॥

---

तत्तादृशम् । 'काश्मीरं कुङ्कुमे च स्यात्' इति मेदिनीकरः । 'नाडी तु धमनिः शिरा' इत्यमरः । 'पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्' इति च । **एताश्च पौलोमीत्यादि** । एताः शीतांशोर्द्युतयः पुरंदरपुरीसीम्नामुपस्कुर्वते गुणान्तराधानं विदधति । 'गन्धनावक्षेपण–' इति प्रतियत्ने तङ् । 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च' इति सुट् । यद्वा सीमानमलंकुर्वत इत्यर्थः । 'संपर्युपेभ्यः करोतौ भूषणे' इति सुट् । 'कृञः प्रतियत्ने' इति कर्मणि षष्ठी । पुरीव पुरीत्युपचारात् । कीदृश्यः । इन्द्राणीस्तनकलशकुङ्कुमरजसां स्वाजन्ये समानकुले जन्म तेनोद्धताः सगर्वाः ।कुङ्कुमस्य वर्णसाम्येन स्वाजन्यम् ,पौलोमीसंबन्धेनोद्धतत्वं द्युतीनाम् । इदमन्तरतममतिमध्यं व्योमाकाशमेताभिर्द्युतिभिः करणभूताभिरोजायते ओजस्विवदाचरति । क्यङस्तद्वदर्थे विधानात् 'कर्तुः क्यङ् सलोपश्च' इत्युपमाने क्यङ् सलोपश्च । 'अकृत्सार्वधातुकयोर्दीर्घः' । 'ओजो बलमवष्टम्भः स्यादोजस्त्विट्प्रकाशयोः' इति धरणिः । अन्धतमसानि गाढान्धकारांल्लिहतीभिः खादन्तीभिः । 'लिह आस्वादने' । शतृ । 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः । 'अवसमन्धेभ्यस्तमसः' इत्यच् समासान्तः । दिशः उद्ग्रथ्नतीभिः क्रमेण पूर्वादिदिशामुद्ग्रथनं कुर्वतीभिः । अन्धकारेण प्राच्यादिभेदाज्ञानाद्ग्रथिता इव दिश आसन् , इदानीं चन्द्रद्युतिभिरुद्ग्रथिताः प्राच्यादिभेदं प्रापिता इत्यर्थः । क्षोणीं पृथिवीमास्तृणतीभिराच्छादयन्तीभिः । 'स्तृञ् आच्छादने' । तत्किंकराणामेतदेव प्रयोजनमित्यत आह— **नैवायमिति** । अयं भगवाञ्शशी अद्यापीदानीमपि गव्यूतिमात्रीमपि क्रोशद्वयपरिमाणामपि द्यामाकाशं नोदञ्चति नोर्ध्वं गच्छति । करास्तु तमोऽन्धकारं स्थलसीम्नि मथ्नन्ति नाशयन्ति । शैलगहनोत्सङ्गेषु पर्वतवनक्रोडेषु संरुन्धतेऽवरुद्धं कुर्वन्ति । जीवग्राहं जीवं गृहीत्वा छायासु क्वचिदपि गृह्णन्ति। तम इति सर्वक्रियान्वयि। चाटुरालोको वर्णनं वा। 'नृपादेर्वर्णने चाटुरालोके चाटुरिष्यते' इति धरणिः । गव्यूतिमात्रीमित्यत्र 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इत्यादिना मात्रच् । 'टिड्ढाणञ्–' इति ङीप् । जीवग्राहमित्यत्र 'समूलाकृतजीवेषु

(ज्योत्स्नातिशयं विभाव्य ।)

किं नु ध्वान्तपयोधिरेष कतकक्षोदैरिवेन्दोः करै-
रत्यच्छोऽयमधश्च पङ्कमखिलं छायापदेशादभूत् ।
किं वा तत्करकर्तरीभिरभितो निस्तक्षणादुज्ज्वलं
व्योमैवेदमितस्ततश्च पतितारछायाछलेन त्वचः ॥ ७५ ॥

(परिक्रम्य पार्श्वतोऽवलोक्य च ।)

दलविततिभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः ।
मदचपलचकोरचञ्चुकोटीकवलनतुच्छमिवान्तरान्तराभूत् ॥ ७६ ॥

(विभाव्य च ।)

त्रिभुवनतमोलुण्टाकीनामहो मिहिरत्विषा-
मभिविधिरसौ कोकश्रेणीमनस्यवशिष्यते ।

---

हन्क्रम्ग्रहः' इति णमुल् । 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः । **किं न्विति** । अयं ध्वान्तपयोधिरन्धकारसमुद्रः किं नु । ननु यद्ययमन्धकारसमुद्रस्तत्कथमतिशुभ्रत्वमाद-धाति' अन्धकारस्य श्यामस्वभावत्वादित्यत आह—इन्दोः करैरत्यच्छोऽतिधवलः । तथा चौपाधिकं धावल्यमस्य प्रतिपादितम् । कतकक्षोदैरिव । औषधविशेषधूलिभिरिवेत्यर्थः । कतकं 'कन्निञ' इति प्रसिद्धवृक्षस्य फलं मगधदेशे जातं तस्य क्षोदो धूलिः । तद्दानमात्रा-त्पङ्कादिकमधः पतति जलं च निर्मलं भवति । पयोधिजलं श्यामवर्णमिति कविसंप्रदायः । अत्र चान्धकारस्य कर्दमत्वेन रूपणाच्चन्द्रकिरणानां कतकेन रूपणम् । ननु पानीये क-तकानुप्रवेशात्पङ्कमधः पतति, अत्र तु किमित्यत आह—छायापदेशाच्छायाव्याजादखिलं पङ्कमधोऽभूत् । तथा चास्य च्छायैव पङ्कमित्यर्थः । अथवेदं व्योमैवाकाशमेव तत्करकर्त-रीभिश्चन्द्रकिरणकर्तरीभिर्निस्तक्षणात्कर्तनादभितः सर्वत्रोज्ज्वलम् । धवलमित्यर्थः । इतस्ततः सर्वत्र च्छायाछलेन त्वचः पतिता इति । अन्यस्यापि कर्तितस्य वृक्षादेस्त्वचः पतन्तीति ध्वनिः कर्तरी 'कतरणी' इति प्रसिद्धा । 'क्षोदः स्यात्पुंसि रजसि' इति मेदिनी-करः । **दलविततीति** । दलविततिभृतां पत्रविस्तारधारकाणां तरूणां वृक्षाणां तलेऽधो मृगाङ्करोचिश्चन्द्रद्युतिस्तिलतण्डुलितम् । तिलतण्डुलाभ्यां मिश्रीकृतमिव श्यामशुभ्रमभू-दित्यर्थः । सान्तरपत्रच्छायासंवन्धात् । उत्प्रेक्षते—अन्तरान्तरा मध्ये मध्ये मदेन च-ञ्चला ये चकोरास्तेषां चञ्च्वग्रेण कृतं यत्कवलनं तेन तुच्छमिव शून्यमिव । **त्रिभुव-नेति** । मिहिरत्विषां सूर्यकिरणानामभिविधिरभिव्याप्तिः कोकश्रेणीमनस्यवशिष्यते । चक्रवाकाणां मनसि परं संतापो भवतीत्यर्थः । अहो आश्चर्यं । रात्रावपि संताप इत्या-

---

१. 'विभाव्य च' इति पाठः.　२. 'पङ्कपटलम्' इति पाठः.　३. 'परिक्रम्यावलोक्य च'; 'परिक्रम्य सर्वतोऽवलोक्य' इति पाठः.　४. 'अवतिष्ठते' इति पाठः.

क्षुधमपि तमः कोपादन्तः प्रविश्य विनिघ्नतः
शशधरकरानच्छिन्नाग्रांश्चरन्ति चकोरकाः ॥ ७७ ॥

अपि चेदानीं

तथा पौरस्त्यायां दिशि कुमुदकेदारकलिका-
कपाटघ्नीमिन्दुः किरणलहरीमुल्ललयति ।
समन्तादुन्मीलद्बहलजलबिन्दुस्तबकिनो
यथा पुञ्जायन्ते प्रतिगुडकमेणाङ्कमणयः ॥ ७८ ॥

(परिक्रामन्नूर्ध्वमवलोक्य ।)

तरुणतमालकोमलमलीमसमेतदयं
कलयति चन्द्रमाः किल कलङ्कमिति ब्रुवते ।
तदनृतमेव निर्दयविधुंतुददन्तपद-
व्रणविवरोपदर्शितमिदं हि विभाति नभः ॥ ७९ ॥

---

श्वयम् । कीदृशीनाम् । त्रिभुवनतमोलुण्टाकीनां त्रिभुवनतमसां लुण्टनकर्त्रीणाम् । 'लुटि स्तेये' । 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' । 'षिद्गौरादिभ्यश्च' इति ङीष् । चकोराः पुनरच्छिन्ना अग्रा येषां तादृशाञ्शशधरकरांश्चरन्ति खादन्ति । 'चर भक्षणे' । कीदृशान् । कोपात्तमः प्रविश्यान्तर्मध्ये क्षुधं बुभुक्षां विनिघ्नतो नाशयतः । अपिरेवार्थे । यद्वा क्षुधं तज्जनितं तमोऽपि विनिघ्नतः । यद्वा रोषाच्चकोराणामन्तर्हृदयं प्रविश्य क्षुधं नाशयतः । रोषादेवान्धकाराणामन्तः प्रविश्य तमो नाशयत इत्यर्थः । **तथेति ।** इन्दुश्चन्द्रः पौरस्त्यायां पूर्वस्यां दिशि किरणलहरीं किरणकल्लोलमुल्ललयति प्रसारयति । यथा एणाङ्कमणयश्चन्द्रकान्ताः प्रतिगुडकं गुडिकां गुडिकां प्रति पुञ्जायन्ते । अपुञ्जाः पुञ्जा भवन्ति । 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इति क्यङ् । यद्वा पुञ्जवदाचरन्ति । आचारे 'कर्तुः क्यङ्' इति क्यङ् । कीदृशीम् । कुमुदानां यः केदारस्तत्र या कलिका मुकुलं तदेव कपाटमिव कपाटं पत्रसंकोचस्तन्नाशिकाम् । विकासकत्वात् । कीदृशाः । समन्तात्सर्वत्रोन्मीलन्त उद्गच्छन्तः । प्रादुर्भवन्त इति यावत् । एतादृशा बहलाः प्रचुरा ये जलबिन्दवस्तैः स्तबकिनो गुच्छप्रायाः । संलग्नजलबिन्दूनामपि चन्द्रकान्ताकारत्वादेकस्यापि पुञ्जाकारतेति भावः । उल्ललयतीति 'लल ईप्सायाम्' । चुरादिरदन्तः । 'कपाटमररं तुल्ये' इत्यमरः । **तरुणेति ।** तरुणो यस्तमालस्तापिच्छस्तद्वत्कोमलं मनोहरं मलीमसं च श्याममेतद्वस्तु, अयं चन्द्रमाः कलयति दधाति । 'कलिवली कामधेनू' इति वैयाकरणाः । किल प्रसिद्धौ । तत्कलङ्कमिति ब्रुवते । जना इति शेषः । तदनृतमेव, कलङ्कमिदमिति मिथ्यैव ।

---

१. 'साक्षादन्तः' इति पाठः. २. 'निगृह्णतः' इति पाठः.

किं च ।

रुचिभिरभितष्टङ्कोत्कीर्णैरिव त्रसरेणुभि-
　　र्यदुडुभिरपि च्छेदैः स्थूलैरिव भ्रियते नभः ।
प्रकृतिमलिनो भास्वद्बिम्बोन्मृजाकृतकर्मण-
　　स्तदयमपि हि त्वष्टुः कुन्दे भविष्यति चन्द्रमाः ॥ ८० ॥

लक्ष्मणः—(सर्वतोऽवलोक्य ।)

भूयस्तराणि यदमूनि तमस्विनीषु
　　ज्यौत्स्नीषु च प्रविरलानि ततः प्रतीमः ।
संध्यानलेन भृशमम्बरमूषिकाया-
　　मावर्तितैरुडुभिरेव भृतोऽयमिन्दुः ॥ ८१ ॥

---

तर्हि यच्छयामलमालोक्यते तत्किमित्यत आह—इदं नभ आकाशं विभाति । हिरवधारणे । अतिनिविडस्यावयविनो नयनगतिप्रतिबन्धकस्यान्तरा वर्त्मना कथं नभो दृश्यत इत्यत आह—निर्दयो यो विधुंतुदो राहुस्तस्य दन्तपदव्रणविवरेणोपदर्शितम् । आवेदितमित्यर्थः । पदं स्थानम् । **रुचिभिरिति** । यद्रुचिभिः कान्तिभिरभितः सर्वत्र नभो भ्रियते पूर्यते । टङ्केनोत्कीर्णैरुत्क्षिप्तैस्त्रसरेणुभिरिवेत्युत्प्रेक्षा । नैता रुचयः, किं तु विश्वकर्मणष्टङ्केनोत्कीर्णास्त्रसरेणव इत्यर्थः । यद्वा रुचिभिस्त्रसरेणुभिरिति व्यस्तरूपकम् । यच्चोडुभिरपि नक्षत्रैरपि नभो भ्रियते । स्थूलैरवयवमहत्त्ववद्भिश्छेदैः खण्डैरिवेत्युत्प्रेक्षा। टङ्कोत्कीर्णैरित्यत्राप्यनुकर्षणीयम् । नैतानि नक्षत्राणि, किं तु टङ्कैरिव च्छिन्नानि चन्द्रमस एव स्थूलावयवानीत्यर्थः । तत्तस्मादेवायमपि चन्द्रमास्त्वष्टुर्विश्वकर्मणः कुन्दे भविष्यत्येवेत्युक्तिविशेषे भूत एवेत्यर्थः । हिशब्द एवार्थे । कीदृशस्य । भास्वतः सूर्यस्य यो बिम्बस्तस्य योन्मृजोन्मार्जनम् । प्रोञ्छनमिति यावत् । तत्र कृतकर्मणः कृतव्यापारस्य । अतिकुशलस्येत्यर्थः । विश्वकर्मणा स्वसुता सूर्याय दत्ता, सा च तत्तेजोसहिष्णुतां पित्रे कथयामास, तेन विश्वकर्मणा तत्तेजःक्षयार्थं सूर्यस्तक्षित इति कथा । प्रकृत्या स्वभावेन मलिनः । अन्यस्यापि मलिनस्यादर्शादेरुन्मार्जनं क्रियत इति ध्वनिः । 'देवशिल्पिन्यपि त्वष्टा' इति धरणिः । 'तारकाप्युडु वा स्त्रियाम्' इत्यमरः । **भूयस्तराणीति** । तमस्विनीषु तमोयुक्तासु रात्रिषु यद्यस्माद्भूयस्तराण्यतिबहून्यमूनि । उडूनि, प्रकरणप्राप्तत्वात् । ज्यौत्स्नीषु चन्द्रिकान्वितासु रात्रिषु च प्रविरलानि स्वल्पानि । सन्तीति शेषः । ततो हेतोरिति प्रतीमो जानीमः । संध्यैवानलो वह्निस्तेन भृशमत्यर्थमम्बरमूषिकायामाकाश एव मूषिका 'मूस'इति प्रसिद्धा यत्र सुवर्णादिकमावर्त्यते तस्यामावर्तितैर्द्रवीकृतैरुडुभिरेव नक्षत्रैरेवायमि-

---

१. 'कृतः' इति पाठः.

(विहस्य च ।)[1] हन्त, यथाधर्ममेतत् ।

यत्पीयूषमयूखमालिनि तमःस्तोमावलीढायुषां
नेत्राणामपमृत्युहारिणि पुरः सूर्योढ एवातिथौ ।
अम्भोजानि पराञ्चि तन्निजमघं दत्त्वेव तेभ्यस्ततो
गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥ ८२ ॥

**विश्वामित्रः**—(सर्वतोऽवलोक्य । सस्मितम् ।) अहह नामधेयमात्रमाधु-[2]र्यादपरमार्थदृश्वानो विप्रलभ्यन्ते । तथा हि ।

स्मेरा दिशः कुमुदमुद्भिदुरं पिबन्ति
ज्योत्स्नाकरम्भमुदरंभरयश्चकोराः ।

---

न्दुर्भृतः । पूरित इत्यर्थः । तेन चन्द्रोदये नक्षत्राणां स्वल्पतेति भावः । 'ज्यौत्स्नी चन्द्रिकयान्विता' इत्यमरः । 'तैजसावर्तनी मूषा' इत्यपि हन्त खेदे । 'हन्त हर्षे च खेदे च' इत्यमरः । यथाधर्मं धर्मस्यानतिक्रमः । यथाधर्ममाचष्टे—**यत्पीयूषेति** । यद्यस्मात्तमःस्तोमेनान्धकारसमूहेनावलीढमास्वादितमायुर्येषां तादृशानां नेत्राणामपमृत्युहारिणि । अपमृत्युरकालमरणम् । अपमृत्युरिवापमृत्युस्तन्नाशके । पीयूष[मयूख]मालिनि चन्द्रे । अन्यदप्यमृतं मृत्युहारि भवतीति ध्वनिः । सूर्योढे संध्याकाल एव पुरोऽग्रे पूर्वदिशि वा तिथौ सत्यम्भोजानि पद्मानि पराञ्चि पराङ्मुखानि । संकुचितानीति यावत् । भूतानीति शेषः । तत्तस्माद्धेतोर्यज्वनां याज्ञिकानां पतिर्द्विजराजश्चन्द्रो निजं स्वीयमघं पापं तेभ्यः पद्मेभ्यो दत्त्वा ततः प्रत्यवायाभावात् । ततः पद्मेभ्यो वा गौराङ्ग्या या वदनोपमा तदेव सुकृतं पुण्यमादत्ते गृह्णाति । चन्द्रसदृशं मुखमिति प्रतीतेः । तथा च धर्मशास्त्रम्—'अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ अतिथौ विमुखे प्रोक्तं गते यत्पातकं नृणाम् । तदेवाष्टगुणं प्रोक्तं सूर्योढे विमुखे गते ॥' विप्रलभ्यन्ते विसंवाद्यन्ते । जनैरिति शेषः । रामस्यातिचिरं चन्द्रवर्णनमवलोक्य ततो निवर्तयितुं भूमिकामारचयति—**स्मेरा इति** । आः निन्दायाम् । अत्रिनाम्नो मुनेर्लोचनदूषिकायां नेत्रमले पीयूषदीधितिरिति कीदृगनुरागः प्रथितः । नेत्रमलेऽमृतदीधितिरिति वक्तुं न युक्तमिति भावः । ननु दिक्प्रसादकुमुदप्रकाशचकोरोदरपूर्तिकारित्वाल्लक्षणयापि कथं न वक्तुं युक्तमित्यत आह—दिशः स्मेराः स्वभावादेव, न तु चन्द्रकिरणसंबन्धात् । कुमुदमुद्भिदुरमुत्कर्षेण प्रकाशशीलं स्वप्रकृतेरेव, न तु ततः । उदरंभरयश्चकोरा ज्योत्स्नैव दधिसक्तुकं पिबन्ति । करम्भभ्रान्त्या पिबन्ति, न तु ज्योत्स्नात्वेनेति । उदरंभरिरिति 'फलेग्रहिरात्मंभरिश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वान्निपातात्साधुः । तथा च वृत्तिः—'अनुक्तसमुच्चयार्थश्चकारः कुक्षिंभरिरुदरंभरिरित्यादावपि शिष्टप्रयोगादवगन्तव्यः ।

---

१. 'विहस्य यथाधर्ममेतत्' इति पाठः. २. 'नामधेयमाधुर्यात्' इति पाठः.

आः कीदृगत्रिमुनिलोचनदूषिकायां
पीयूषदीधितिरिति प्रथितोऽनुरागः ॥ ८३ ॥

(रामं च दृष्ट्वा । सहर्षस्मितम् ।) कथमयं कुमाराङ्कविजयप्रत्यागतोऽपि ताडकानिग्रहेण ह्रिणीयमानः सहसा नोपतिष्ठते वत्सः । (लक्ष्मणं प्रति ।) वत्स सौमित्रे, अस्माकमनेन वृत्तान्तेन प्रदोषलक्ष्मीरियमनूद्यते । पश्य ।

निशाचराणां तमसां निहन्ता पुरोऽयमुद्गच्छति रामचन्द्रः ।
अथोल्लसद्भिर्नयनैर्मुनीनामयं कुमुद्वानजनि प्रदेशः ॥ ८४ ॥

**रामः**—(विभाव्य ।)

मदयति यदुत्पन्नो दुग्धाम्बुधेरयमम्बुधी-
न्नयति नयनादत्रेर्जातो मुदं नयनानि च ।
तदखिलसुरश्रेणीसाधारणप्रणया शची-
सहचरचरुस्थाली सोमः समञ्जसमीहते ॥ ८५ ॥

(सलज्जमुपसृत्य ।) भगवन्, अभिवादये ।

---

'करम्भो दधिसक्तवः' इत्यमरः । 'दूषिका नेत्रयोर्मलम्' इति च । कुमाराङ्कः प्रथमयुद्धमेकतुलायुद्धं वा ।'एकसा' इति प्रसिद्धम् । निग्रहो मारणम् । ह्रिणीयमानो लज्जमानः । हृणीङ्शब्दात्कण्ड्वादियगन्ताच्छानच् । ङित्त्वात्तङ् । नोपतिष्ठते न संगच्छते । 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्' इति संगतिकरणे तङ् । अनेन वृत्तान्तेन ताडकाताडनरूपेण । अनूद्यते पुनरुक्ता भवति । अपरा प्रदोषलक्ष्मीर्भवतीत्यर्थः । प्रदोषसाधर्म्यमाह—**निशाचराणामिति** । अयं रामचन्द्रो रामः । अथ च राम एव चन्द्रः पुरोऽग्रे उद्गच्छत्युदयते । कीदृशः । निशाचराणां राक्षसानां तमसामिति व्यस्तरूपकम् । यद्वा तमसां पापयुक्तानाम् । पक्षे निशि रात्रौ चरतां तमसामन्धकाराणां निहन्ता । अथानन्तरं रामचन्द्र उदित आयाते सत्युल्लसद्भिर्मुनीनां नयनैः करणभूतैरयं प्रदेशः कुमुद्वान्कुमुदबहुलोऽजनि जातः । कर्तरि णिच् । अन्योऽपि प्रदेशश्चन्द्रोदये सति कुमुद्वान्भवति । 'कुमुद्वान्कुमुदप्राये' इत्यमरः । **मदयतीति** । अयं सोमो दुग्धाम्बुधेर्यस्मादुत्पन्नोऽतोऽम्बुधीन्समुद्रान्मदयति हृष्टान्करोति । पुत्रेण पितुः प्रीत्युत्पादनस्य कृत्वात् । अत्रेर्मुनिविशेषस्य नयनाद्यज्जातो नयनानि मुदं नयति । चकारः का-

---

१. 'प्रथितः' इति पाठः. २. 'कुमारोऽङ्कविजय'; 'कुमारो विजय–' इति पाठः. ३. 'घृणीयमानः' इति पाठः. ४. 'वत्सः' इति पुस्तकान्तरे नास्ति. ५. 'रामभद्रः' इति पाठः. ६. 'विभाव्य च' इति पाठः. ७. 'रामः सलज्ज–' इति पाठः.

**विश्वामित्रः**—(सस्नेहबहुमानमालिङ्ग्य।)[1] वत्स रघुनन्दन, इत्थमेव

प्रकृष्टकर्त्रभिप्रायक्रियाफलवतो विधीन्।
प्रयुञ्जानास्त्वया वीर परिपाल्यामहे[2] वयम्॥ ८६॥

**रामः**—(स्वगतम्[3]।) शिरसा गृहीतमाचार्यवचनम्।

**विश्वामित्रः**—(समरधूलिधूसरं रामस्य कपोलमुन्मार्जयन्[4]।) यत्सत्यम्[5]-मुना नक्तंचरव्यतिकरेण[6] प्रियसुहृदा सीरध्वजेन वितन्यमाने वैताने कर्मणि कम्पितमिव मे हृदयम्।

**रामः**—(सगौरवम्।) भगवन्, क एष सीरध्वजो नाम यमद्य[7] ते त्रि-भुवनदुर्लभोऽयं प्रियसुहृच्छब्दप्रयोगः कमपि महिमानमारोपयति।

**विश्वामित्रः**—वत्स, शृणोषि विदेहेषु मिथिलां नाम नगरीम्।

---

त्स्न्यें। सकलनयनानीत्यर्थः। यद्यपि जन्यजनकरूपसंबन्धोपाधिना तथा कर्तुमर्हति तथाप्यत्रोपाधिं विनापि युक्तमाचरतीत्याह—तत्सोमः समञ्जसमीहते युक्तं चेष्टते। कीदृशः। शचीसहचरस्येन्द्रस्य चरुस्थाली हव्यान्नभाण्डम्। इन्द्रभक्ष्यामृतस्याधारत्वात्। अखिलसुरश्रेण्यां साधारणः प्रणयो यस्याः साखिलसुरश्रेणीसाधारणप्रणया। चरुस्थाली-विशेषणम्। अयं तु सर्वदेवानां प्रतिपदादिक्रमेण भक्षणात्सोमत्वमवलम्बत इति भावः। सोमपद एव च्छलम्। लताभेदश्चन्द्रश्च सोमः। 'सोमः सोमलतायां च चन्द्रे च' इति विश्वः। अतिगुरुकार्यकरणादौद्धत्यपरिहाराय सलज्जमिति। **प्रकृष्टेति**। हे वीर, त्वया वयं परिपाल्यामहे रक्षणीयाः। कर्मणि लोट्। उत्तमपुरुषबहुवचनम्। एते कीदृशाः। प्रकृष्टं शौचादिसंपन्नं कर्तारं यजमानमभिप्रैत्यभिसंबध्नाति कर्त्रभिप्रायं क्रियाफलम्। कर्मण्यण्। तद्येषामस्ति तान्विधीन्यागान्प्रयुञ्जानाः कुर्वाणाः। 'प्रोपाभ्यां युजेः—' इति तङ्। स्वार्थ-परानस्मात्प्रत्युपकारनिरपेक्षस्त्वं रक्षिष्यसीति रामस्यातिमहत्त्वं दर्शितम्। कर्तव्यप्रत्यु-पकारविषयकोत्कण्ठां रामभद्रस्योत्थापयितुमाह—**यत्सत्यमित्यादि**। नक्तंचरव्यतिक-रेण राक्षसव्यसनेन। 'अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः' इत्यमरः। सीरध्वजेन जनकेन वितन्यमाने क्रियमाणे। दुःखेनाकृष्यते यत्तद्दुराकर्षम्। 'ईषद्दुःसुषु—' इति कर्मणि खल्। ऐन्दुशेखरं माहेश्वरम्। लाङ्गलमुखेन हलमुखेनोल्लिखिता कृष्टा या वि-श्वंभरा पृथिवी तस्याः प्रसूतिरपत्यम्। अत एवागर्भसंभवा। 'लाङ्गलं हलम्' इत्य-

---

१. 'सस्नेहमालिङ्ग्य' इति पाठः. २. 'प्रतिपाल्यामहे' इति पाठः. ३. 'स्वगतम्' इति पुस्तकान्तरे नास्ति. ४. 'चुबुककपोल—' इति पाठः. ५. 'वत्स यत्सत्य—'; 'सत्य—' इति पाठः. ६. 'नक्तंचरचक्र—' इति पाठः. ७. 'येनाद्य' इति पाठः.

**रामः**—यत्र पवित्रमाश्चर्यद्वयं जनाः कथयन्ति । सकलराजदु[1]रा-कर्षमैन्दुशेखरं धनुः, लाङ्गलमुखोल्लिखि[2]तविश्वंभराप्रसूतिरगर्भसंभवा मा[3]नुषी ।

**विश्वामित्रः**—(विहस्य ।) अथ किम् ।

**रामः**—(सकौतुकम् ।) ततः किं तस्याम् ।

**विश्वामित्रः**—

असौ[4] सीरध्वजो राजा यो देवाद्द्युमणेरपि ।
अध्यैष्ट याज्ञवल्क्यस्य मुखेन ब्रह्मसंहिताम् ॥ ८७ ॥

त[5]स्य संन्यस्तशस्त्रस्य पुराणराजर्षेर्जनकवंशजन्मनो दीक्षाविलोपशङ्का पर्याकुलयति माम् । त[6]देतमायुष्मन्तौ, विधिशेष[7]मस्मदीयं समाप्य सहैव मिथिलामुपतिष्ठामहे ।

**रामः**—(सहर्षमपवार्य ।) वत्स लक्ष्मण, म[8]मापि तस्मिन्नतरुणरोहिणी-रमणचूडामणिपाणिप्रणयिनि श[9]रासने चिरस्य कौतुकमस्ति ।

**लक्ष्मणः**—(सपरिहासम् ।) आर्यायामयोनि[10]र्जन्मनि राजकन्यकायामपि ।

---

मरः । रामस्यैवोत्कण्ठां वर्धयन्नाह—**असाविति** । सीरध्वजो जनकः । द्युमणेः सूर्यात् । 'आख्यातोपयोगे' इत्यपादानता । अध्यैष्टाधीतवान् । 'इङ् अध्ययने' । लुङ् सिच् आट् वृद्धिश्च । ब्रह्मसंहितां तत्त्वज्ञानोपदेशवेदभागं वेदान्तम् । याज्ञवल्क्यमुखेन याज्ञवल्क्यद्वारा । याज्ञवल्क्येन सूर्यादधीतं ततो जनकेन । तथा च सूर्यप्रशिष्योऽयमित्यर्थः । तथापि किंतु तस्यामित्याशङ्का न निवर्तितेत्यत आह—**तस्येत्यादि** । तत्किं स न रक्षाक्षम इत्यत आह—संन्यस्तं त्यक्तम् । 'असु क्षेपणे' । पुराणश्चिरंतनः । **जनकवंशजन्मेति** । तस्यापि जनक एव नाम । दीक्षा यज्ञोपनयनम् । एतमागच्छतम् । युवामिति शेषः । 'इण् गतौ' । आङ्पूर्वः । लोट् । आयुष्मन्ताविति संबोधनम् । अपवार्य निभृतमित्यर्थः । 'रहस्यं कथ्यतेऽन्यस्य स्मृतं तदपवारितम्' इति भरतः । अतरुणो बालो यो रोहिणीरमणश्चन्द्रः स चूडामणिर्यस्य स शिवः । शरासनं धनुः । चिरस्य चिरम् ।

---

१. 'दुराधर्षम्' इति पाठः. २. 'उत्खातविश्वंभरायाः' इति पाठः. ३. 'मानुषी च' इति पाठः. ४. 'एष' इति पाठः. ५. 'तस्य च न्यस्त–'; 'तस्य विन्यस्त–' इति पाठः. ६. 'तदेतस्मादादायायुष्मन्तौ'; 'तदेनमायु–' इति पाठः. ७. 'मखमस्मदीयं परिसमाप्य' इति पाठः. ८. 'ममाप्यतरुण–'; 'ममापि तरुण' इति पाठः. ९. 'बाणासने' इति पाठः. १०. 'जन्मनि च राजकन्यायाम्' इति पाठः.

**रामः**—(सरोषस्मितम्[1] ।) कथमन्यदेव[2] किमपि प्रहसनं सूत्रयति भवान् । (मुनिं प्रति ।) भगवन् इक्ष्वाकुवंशगुरो[3], यदभिरुचितं[4] भवते ।

(इति परिक्रम्य निष्क्रान्ताः सर्वे ।)

इति कौमारविक्रमो नाम द्वितीयोऽङ्कः ।

---

महत्वादार्या । यद्वा आर्या अन्वेष्टव्या । 'ऋ गतौ' । 'ऋहलोर्ण्यत्' । प्रहसनं हास्यप्रधानं नाट्यम् । 'शृङ्गारहास्यबहुलं शान्ताद्भुतरसान्वितम् । द्व्यङ्कमारभटीहीनं प्राह प्रहसनं मुनिः ॥' इति भरतः । 'असूचितस्य पात्रस्य प्रवेशो नैव युज्यते' इति भरतमताद्वक्ष्यमाणप्रहसनसूचनमिदम् । इक्ष्वाकुवंशगुरो इत्यादेशकर्तव्यतौपयिकं संबोधनम् । भवते तुभ्यम् । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानता । कुमार एव कौमारः । प्रज्ञादित्वात्स्वार्थिकोऽण् ॥

इति समस्तप्रक्रियाविराजमानरिपुराजकंसनारायणभवभक्तिपरायणश्रीहरिनारायणपदसमलंकृतमहाराजाधिराजश्रीमद्भैरवसिंहदेवप्रोत्साहितवैजौलीग्रामवास्तव्यखौआलवंशप्रभवश्रीरुचिपतिमहोपाध्यायविरचितायामनर्घराघवटीकायां द्वितीयोऽङ्कः ।

---

---

१. 'सासूयस्मितम्' इति पाठः. २. 'अन्यदेव प्रहसनं सूत्रयसि'; 'सूचयति भवान्' इति पाठः. ३. 'कुलगुरो'; 'गोत्रगुरो' इति पाठः. ४. 'यदभिरुचितं ते'; 'यदभिरुचितं भवते तत्क्रियताम्' इति पाठः.

तृतीयोऽङ्कः।

(ततः प्रविशति कञ्चुकी।)

**कञ्चुकी**—(जरावैक्लव्यविसंस्थुलानि[1] कतिचित्पदानि दत्त्वा[2] आत्मानं प्रति सखेदोपालम्भम्।)

गात्रैर्गिरा च विकलश्चटुमीश्वराणां
कुर्वन्नयं प्रहसनस्य नटः कृतोऽसि।
तत्त्वां[3] पुनः पलितवर्णकभाजमेनं
नाट्येन केन नटयिष्यति दीर्घमायुः॥ १॥

(पुरो विलोक्य[4]।) अये सीतापादमूलोपजीविनी[5] कलहंसिका।

(प्रविश्य।)

**कलहंसिका**—अज्ज, पणमामि।

**कञ्चुकी**—वत्से, कल्याणिनी भूयाः।

**कलहंसिका**—अज्ज, चिरेण कुदो तुह्मे।

---

पिनाकारोपणसीतापरिणयादिरूपवाक्यार्थं सूचयितुं कञ्चुकिनः प्रवेशमाह—**ततः प्रविशतीति**। कञ्चुकी अन्तःपुराधिकृतः। 'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते॥ जरावैक्लव्ययुक्तेन विशेद्गात्रेण कञ्चुकी।' इति भरतः।'अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशको जनः। सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते॥' इत्यमरः। विसंस्थुलानि स्खलितानि। चिरतरसेवादुःखविकलः सन्नात्मानं निन्दयन्नाह—**गात्रैरिति**। हे आत्मन्, त्वं प्रहसनस्योपहास्यतायाः, अथ च हास्यप्रधाननाट्यस्य, नटो नर्तकः कृतोऽसि। गात्रैः शरीरैर्गिरा वाण्या च विकलो निष्क्रियः सन्नीश्वराणां चटुं चाटुम्। प्रियभाषितमिति यावत्। कुर्वन्नेतद्दीर्घमायुः कर्तृ पुनरपि पलितवर्णकभाजं जराशौक्ल्यवन्तम्, अथ च पलितमेव वर्णकं खटिकादि तद्वन्तम्' त्वां केन नाट्येन नटयिष्यति। अपि तु सर्वेणैव।'नट नृत्ये' घटादिः। अन्योऽपि नटः प्रहसनमङ्कद्वयारब्धं नृत्यति। शरीरैर्मायामयैर्वाण्या च तादृश्या ईश्वराणां प्रेक्षकाणां चाटुं करोति। वर्णकेन हरितालादिना संयुक्तो भवतीति ध्वनिः। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। 'चटुश्चाटौ पिचण्डे च' इति मेदिनीकरः। 'प्रहसनमपि प्रहासे रूपकभेदे च परिहासे' इति च। उत्तरस्य द्वितीयसाध्यत्वात्कलहंसिकाप्रवेशं सूचयितुमाह—**पुरोविलोक्येति**। 'आर्य, प्रणमामि' [इति च्छाया।] 'आर्य, चिरेण कुतो

---

१. 'विसंष्ठुलानि'. २. 'गत्वा'. ३. 'न त्वाम्'; 'कृत्वा'. ४. 'विभाव्य च'.
५. 'सीतापादोपजीविनी'; 'सीतापादोपसेविनी'; 'सीतापादपद्मोपजीविनी'.

**कञ्चुकी**—(विमृश्य ।) तत्किं न कथ्यते । वत्से, विदितमेव भवत्याः, यथा तत्तादृगद्भुतं दारकद्वयमादाय भगवान्कौशिको यजमानं महाराजं सीरध्वजमुपस्थितः ।

**कलहंसिका**—अध इं । अज्ज, पहवं णामधेअं च ताणं सुणिदुं अत्थि मे कोदूहलम् ।

**कञ्चुकी**—वत्से, कथयामि ।

त्रयस्त्रिंशत्कोटित्रिदशमयमूर्तेर्भगवतः
सहस्रांशोर्वंशे जयति जगदीशो दशरथः ।
यदस्त्रैरस्निग्धैरसुरयुवतिश्वासपवन-
प्रकोपे सिद्धे न स्पृशति शतकोटिं शतमखः ॥ २ ॥

इमौ तस्य विशांपत्युरात्मजौ रामलक्ष्मणौ ।
ययोर्भरतशत्रुघ्नावनुजौ द्वन्द्वचारिणौ ॥ ३ ॥

यूयम्' [इति च्छाया ।] आगता इति शेषः । 'प्रश्नाख्यानयोश्च' इति पञ्चमी । 'स्त्रीणां तु प्राकृतं प्रायः' इति भरतानुशासनात्स्त्रीणां प्राकृतभाषणम् । विदितं ज्ञातम् । 'मतिबुद्धिपूजार्थेभ्यश्च' इति क्तः । भवत्या इति 'क्तस्य च वर्तमाने' इति षष्ठी । दारकद्वयं बालकद्वयम् । 'दारको बालकेऽपि स्यात्' इति मेदिनीकरः । कलहंसिकावाक्ये—'अथ किम् । आर्य, प्रभवं नामधेयं च तयोः श्रोतुमस्ति मे कौतूहलम्' [इति च्छाया ।] इह प्रभवं कुलम् । प्रभवत्यस्मिन्निति । प्रथमे प्रश्न उत्तरमाह—**त्रय इति** । भगवतः सहस्रांशोः सूर्यस्य वंशे जगदीशो दशरथो जयतीति संबन्धः । कीदृशस्य । त्रयस्त्रिंशत्कोट्यो ये देवास्तन्मयी मूर्तिः शरीरं यस्य तस्य । एतेन भगवतः सर्वदेवमयत्वेन दशरथस्य कुलीनत्वं प्रतिपादितम् । यदस्त्रैर्दशरथास्त्रैरस्निग्धैः कठिनैरसुरयुवतीनां श्वासपवनस्य प्रकोप आधिक्ये सति शतमख इन्द्रः शतकोटिं वज्रं न स्पृशति । असुरनाशस्यानेनैव कृतत्वात् । त्रयस्त्रिंशदित्यत्र 'त्रेस्त्रयः' इति त्रयादेशः । युवतिरित्यत्र 'यूनस्तिः' । द्वितीयप्रश्न उत्तरयति—**इमाविति** । तस्येत्यनेन विवाहप्रयोजकीभूतं महावंशप्रसूतत्वं शूरत्वं च सूचितम् । विशांपत्युरिति विशां मनुष्याणाम् । 'विशो वैश्यमनुष्ययोः' इति विश्वः । अनुजौ कनिष्ठौ । द्वन्द्वचारिणौ सहगामिनौ । युगनद्धवाहनावित्यर्थः । अत्र यद्यपि रामलक्ष्मणयोरेव श्रवणाकाङ्क्षायां तयोरेव नामकथनं युक्तम्, तथापि प्रसङ्गान्माण्डव्याः श्रुतकीर्तेश्च परिणयसूचनार्थमुक्तं भरतशत्रुघ्नाविति । **जधेति** । 'यथास्मद्गृहे भर्तृदारिका

१. '(विमृश्य ।) तत्' इति पुस्तकान्तरे नास्ति. २. 'विदितं भवत्यापि'; विदितं न भवत्यापि'. ३. 'यत्तादृगद्भुतम्'. ४. 'कुमारद्वयमादाय कौशिकः'. ५. 'जगतीशः'.

**कलहंसिका**—जधा अह्मघरे भट्टदारिआ सीदा उम्मिला अ मण्डवी सुदकित्ती अ। (विचिन्त्य। हर्षं निरूपयन्ती।) कधं महाकुलप्पसूदा एदे वि कुमारआ। (मुहूर्तमिव स्थित्वा। दीर्घमुष्णं च निःश्वस्य।) कुदो अह्माणं ईरिसो भाअधेओ।

**कञ्चुकी**—भवति, मा विषीद। सर्वं भविष्यति देवब्राह्मणानुग्रहात्।

**कलहंसिका**—तदो तदो।

**कञ्चुकी**—ततश्च वृद्धान्तःपुराणामभ्यर्थनया तौ विकर्तनकुलकुमारकौ दृष्ट्वा निवर्तमानः पुरोधसा गौतमेनाहमाहूय राजपुत्रीणां सौभाग्यदेवताराधनाय संविहितोऽस्मि।

**कलहंसिका**—(सहर्षम्।) अज्ज, सव्वजणमणीसिदाणुऊलं विअ तत्थभवदो सदाणन्दस्स वअणम्।

**कञ्चुकी**—वत्से, एवमेतत्। न खल्वतथ्यमगम्भीरमाङ्गिरसो ब्रवीति।

**कलहंसिका**—ता किं मण्णेध संकरसरासणारोवणव्ववसाएण राएसिणो जणअस्स पडिण्णासाहसं णिव्वाहेस्सदि राहवो।

---

सीता ऊर्मिला च माण्डवी श्रुतकीर्तिश्च' [इति च्छाया।] 'राजा भट्टारको देवस्तत्सुता भर्तृदारिका' इत्यमरः। **हर्षं निरूपयन्तीति**। चतुर्णां रामादीनां वरत्वेन स्मरणानन्तरं सीताप्रभृतीनां च परिणययोग्यत्वेन स्मरणादिति भावः। **कधमिति**। 'कथं महाकुलप्रसूता एतेऽपि कुमारकाः' [इति च्छाया।] तथा च वरयोग्या इति भावः। **दीर्घमुष्णं चेति**। रामादीनामतिविमलकुलप्रसूतत्वान्महार्घतामुत्प्रेक्ष्येति भावः। 'कुतोऽस्माकमीदृशं भागधेयम्' [इति च्छाया।] येन रामादयो वरा भवेयुरिति भावः। **तदो तदो**। 'ततस्ततः' [इति च्छाया।] कथ्यतामिति शेषः। वृद्धान्तःपुराणां वृद्धमहादेवीनाम्। विकर्तनः सूर्यः। पुरोधसा पुरोहितेन। गौतमेन शतानन्देन। सौभाग्यदेवताराधनाय गौरीपूजनाय। संविहित आज्ञापितः। **अज्जेति**। 'आर्य, सर्वजनमनीषितानुकूलमिव तत्रभवतः शतानन्दस्य वचनम्' [इति च्छाया।] अत्र मनीषितमभिलषितम्। तत्रभवान्मान्यः। खलु निश्चये। आङ्गिरसः शतानन्दः। **ता किमिति**। 'तत्किं मन्यध्वे शंकरशरासनारोपणव्यवसायेन राजर्षेर्जनकस्य प्रतिज्ञासाहसं निर्वाहयिष्यति राघवः'

---

१. 'सहर्षम्'. २. 'अनुशासनात्'. ३. 'समागतौ तौ विकर्तनकुलकुमारौ। तौ किल'. ४. 'संप्रहितोऽस्मि'; 'संप्रति प्रहितोऽस्मि'. ५. 'हर्षं नाटयति'. ६. 'न खल्वयमतथ्यं वदति'; 'न खल्वगम्भीरमाङ्गिरसः'.

**कञ्चुकी**—वत्से, अस्मानपि तर्कोऽयं तरलीकरोति । तथाहि ।

पूर्णेऽपि कर्मणि हतेष्वपि राक्षसेषु
विज्ञाय मैथिलसुतामपि वीर्यशुल्काम् ।
बालं पितुः प्रियममुं रघुराजपुत्र-
मेतावतीं भुवमृषिः कथमानिनाय ॥ ४ ॥

**कलहंसिका**—(स्मरणमभिनीय । सविषादम् ।) अज्ज, पउत्तिविसेसलम्भेण दुम्मणायमाणमत्ताणं पञ्चालिआकेलिवावारेण विणोदअन्तीं भट्टदारिअं पेक्खिअ उव्विण्णाए कारणं परिवज्जिदुं आगदाए अज्जस्स दंसणेन मए विसुमरिदं इमिणा उण दे रक्खसणामग्गहणेन सुमराविदह्मि ।

**कञ्चुकी**—(सविषादम् ।) वत्से, कीदृशी सा प्रवृत्तिः, या तव भर्तृदारिकामपि दुर्मनाययति ।

**कलहंसिका**—सुणादु अज्जो । जधा किल सीदादेवीं पत्थिदुं दसग्गीवपुरोहिदो आअदोत्ति ।

**कञ्चुकी**—(तत्रावज्ञां नाटयन्सहर्षम् ।) कथमेतावदपि कार्यं वत्सा जानकी जानाति । यदनेनोदन्तेन दुर्मनीभूयते[1] । नूनमिदानीमस्याः कृतावतरणमङ्गलान्यङ्गकानि[2] यौवनस्य पन्थानमीक्षन्ते ।

---

[इति च्छाया ।] आरोपणव्यवसाय आकर्षणकर्म । तर्को वितर्कः । **पूर्णेऽपीति** । पूर्णे समाप्ते । कर्मणि यज्ञे । वीर्यं पराक्रमः शुल्कः पणो यस्यां ताम् । एतावतीं दूरतराम् । **अज्ज, पउत्तिविसेसेति** । 'आर्य, प्रवृत्तिविशेषलम्भेन दुर्मनायमानमात्मानं पाञ्चालिकाकेलिव्यापारेण विनोदयन्तीं भर्तृदारिकां प्रेक्ष्य उद्विग्नया कारणं प्रतिपत्तुमागतया आर्यस्य दर्शनेन मया विस्मृतमेतेन पुनस्ते राक्षसनामग्रहणेन स्मारितास्मि' [इति च्छाया ।] अत्र प्रवृत्तिर्वार्ता । लम्भो लाभः । दुर्मनायमानमिति दुर्मना इवाचरति । 'कर्तुः क्यङ् सलोपश्च' इति क्यङि सलोपे दीर्घत्वे च रूपम् । पाञ्चालिका 'पुतळी' इति प्रसिद्धा । 'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः । प्रतिपत्तुं ज्ञातुम् । अर्थात्तस्या उन्मनस्कत्वम् । राक्षसनामग्रहणम् 'हतेष्वपि राक्षसेषु' इत्यनेन । दुर्मनाययति व्यथयति । दुर्मनसं करोतीति 'तत्करोति—' इति णिच् । 'णाविष्ठवत्प्रातिपदिकस्य' इति टिलोपः । **जधेति** । 'यथा किल सीतादेवीं प्रार्थयितुं दशग्रीवपुरोहित आगत इति' [इति च्छाया ।] **यदनेनेति** । अनेनोदन्तेन वार्तया राक्षससंबन्धरूपेण

---

1. 'दुर्मनीभवति'. 2. 'अङ्गानि'.

**कलहंसिका**—अज्ज, एवं ण्णेदम्। अज्जओसित्ति सिढिलीकिदलज्जा संपदिं जेव्व अणुहूदं किंपि णिवेदेमि। (संस्कृतमाश्रित्य।)

अनाकूतैरेव प्रियसहचरीणां शिशुतया
वचोभिः पाञ्चालीमिथुनमधुना संगमयितुम्।
उपादत्ते नो वा विरमति न वा केवलमियं
कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति॥ ५॥

**कञ्चुकी**—(हसर्षम्।) दिष्ट्या चिरस्य जीवद्भिरस्माभिर्यौवनवती वत्सा[1] जानकी दृष्टा। (तस्मितम्।) ततस्ततः।

**कलहंसिका**—तदो अ पुणो पुणो वि ताहिं उज्जुआहिं णिव्वन्धिज्जमाणा लज्जिदुं वि लज्जेदि।

---

दुर्मनीभूयते। इति जानकी जानातीत्यर्थः। तस्याः कर्तव्याकर्तव्यनिश्चयो जात इति हर्षः। दुर्मनीभूयत इति दुर्मनःशब्दाच्च्विप्रत्यये कृते 'अरुर्मनश्चक्षु–' इति सूत्रेण सलोपः। 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः। कृतं यौवनावतरणविधेयं मङ्गलं यत्र तानि। अङ्ककानीत्यल्पार्थे प्रशंसायां वा कन्। 'आर्य, एवमेतत्। अर्जकोऽसीति शिथिलीकृतलज्जा संप्रत्येवानुभूतं किमपि निवेदयामि' [इति च्छाया।] इहार्जकः पितुः पिता पितामहः। यद्वार्जकोऽर्जनकर्तासि। 'अज्जा सीदा' इति पठे आर्या सीता। शिथिलीकृतलज्जेत्यर्थः। 'अज्जो सि' इति पाठ आर्योऽसि। इत्येवं मन्दीकृतलज्जाहं प्रत्यक्षोपलब्धं किमपि कथयामीत्यर्थः। **संस्कृतमाश्रित्येति**। 'संस्कृतभाषाचाराः प्रायो नाट्येषु न स्त्रियः श्लाघ्याः। क्वचिदपि तपःप्रभावाद्विदग्धताबोधनाच्च शस्यन्ते॥' इति भरतमतेन वैदग्ध्यताख्यापनाय स्त्रियः संस्कृतभाषणम्। यद्वा 'चेटी प्राकृतभाषिणी स्याच्च संस्कृतभाषिणी' इति नियमाभावादेव संस्कृतभाषितम्। यदलौकिककथनसमार्जनाय अर्जकोऽसीत्याशङ्कितोद्धाररूपं समार्जनं तदाह—**अनाकूतैरिति**। इयं सीता प्रियसहचरीणां प्रियसखीनां वचोभिः करणभूतैः पाञ्चालीमिथुनं कृत्रिमपुत्रिकायुगलं संगमयितुं मेलयितुं नोपादत्ते न गृह्णीते। लज्जाप्राचुर्यात्। न वा विरमति। तद्ग्रहणे विरक्ता भवति। कामवशीकृतचित्तत्वात्। तर्हि करोतीत्येव न किमपीत्यत आह—इयं कल्याणी सीता केवलं पुलकमुकुलैः करणैः कपोलौ कर्मभूतौ दन्तुरयति निम्नोन्नतौ करोति। सात्त्विकभावात्। दन्तुरशब्दात् 'तत्करोति–' इति णिच्। वचोभिः कीदृशैः। अनाकूतैरेव। न विद्यत आकूतमभिप्रायो यत्र तैः। भावशून्यैरित्यर्थः। शिशुतया बालकत्वेन हेतुना। तासां शिशुत्वेन तत्कर्मानभिज्ञत्वात्। विरमतीति 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। कल्याणीति गौरादित्वान्ङीष्। **तदो अ इति**। ततश्च पुनः-

---

१. 'वत्सा वैदेही'; 'वत्सापि'.

**कञ्चुकी**—(विहस्य ।) वत्से, संकीर्णे[1] वयसि खल्वियं वर्तते । अत्र हि

मनोऽपि[2] शङ्कमानाभिर्बालाभिरुपजीव्यते ।
अषडक्षीणषाड्गुण्यमन्त्री मकरकेतनः ॥ ६ ॥

**कलहंसिका**—(सलज्जम् ।) अज्ज, रमणीअं मन्तेसि । सव्वस्स वि अणुहवसंवादिणी दे वाआ ।

**कञ्चुकी**—किं[3] च वत्से,

तदात्वप्रोन्मीलन्म्रदिमरमणीयात्कठिनतां
निर्चित्य[4] प्रत्यङ्गादिव तरुणभावेन घटितौ ।
स्तनौ संबिभ्राणाः क्षणविनयवैयात्यमसृण-
स्मरोन्मेषाः केषामुपरि न रसानां युवतयः ॥ ७ ॥

---

पुनरपि ताभिः ऋजुकाभिर्निर्बध्यमाना लज्जितुमपि लज्जते' [इति च्छाया ।] अत्र ऋजुकाभिर्बालत्वादकुशलाभिः । निर्बध्यमानाभ्यर्थ्यमाना । लज्जितुमपि लज्जते । उत्पन्नभावात् । संकीर्णे बाल्ययौवनमिश्रे । खलु यतः । ननु यदि मिथुनविषयकं तासां ज्ञानं नास्ति, तत्कथं ताभ्यस्तस्या लज्जेत्यत आह—**अत्र हीत्यादि** । यतोऽत्र वयसि मनोऽपि शङ्कमानाभिर्मनसोऽपि शङ्कां कुर्वाणाभिर्बालाभिश्चतुर्दशवर्षवयस्काभिर्मकरकेतनः कंदर्प उपजीव्यते सेव्यते । अत्र वयस्यत्यन्तनिगूढो मदनोत्सवो भवतीति भावः । कीदृशः । न विद्यन्ते षडक्षीणि यत्र तदषडक्षीणम् । षड्गुणा एव षाड्गुण्यम् । संधिविग्रहादिको मन्त्रः । स्वार्थे ष्यञ् । अनयोः कर्मधारयः । तयोर्मन्त्री । तथा च यत्र तृतीयगोचरता नास्ति तन्मन्त्रे परं मन्त्री काम इति भावः । 'अषडक्षीणो यस्तृतीयाद्यगोचरः' इत्यमरः । 'अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः' । 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः' इत्यमरः । **सलज्जमिति** । बालाभिरिति बहुत्वनिर्देशात्स्वामप्युद्दिश्यामाशङ्क्येति भावः । 'आर्य, रमणीयं मन्त्रयसे । सर्वस्याप्यनुभवसंवादिनी ते वाक्' [इति च्छाया ।] अत्र मन्त्रयसे वदसि । **तदात्वेति** । युवतयस्तरुण्यः केषां रसानां शृङ्गारादीनां मधुरास्वादादीनां वा उपरि न वर्तन्ते । अपि तु सर्वेषामपि । कीदृश्यः । क्षणं व्याप्य विनयश्च वैयात्यं च ते ताभ्यां विनयधार्ष्ट्याभ्यां मसृणो मन्दो मधुरो वा स्मरोन्मेषो यासां ताः । वैयात्यं धार्ष्ट्यम् । 'अन्तस्थमध्यं वैयात्यम्' इति शब्दभेदः । स्तनौ संबिभ्राणा धारयन्त्यः पोषयन्त्यो वा । कीदृशौ । तरुणभावेन तारुण्येन प्रत्यङ्गात्सर्वावयवात्कठिनतां निचित्य समाहृत्यैव घटितौ । प्रत्यङ्गात्काठिन्यं वर्तुलीकृत-

---

१. 'खल्वियं वयसि वर्तते'; 'वर्तते बाला'. २. 'मनो विशङ्कमानाभिः'. ३. 'किं च' इति पुस्तकान्तरे नास्ति. ४. 'विचित्य'.

**कलहंसिका**—(विहस्य ।) भोदु । ता ण किं पि तुह्मेहिं सुदम् ।

**कञ्चुकी**—वत्से, न तावदर्थोऽयमद्यापि राजगोचरीभवति । यदि च स्यात्किमेतावता ।

**कलहंसिका**—तदा हदासो रावणो देवीं परिणेदि ।

**कञ्चुकी**—(विहस्य ।)

हस्ते करिष्यति जगत्त्रयजित्वरोऽपि
केस्तादृशो दुहितरं जनकेश्वरस्य ।
प्राणाधिकं विपुलबाहुभृतामपीदं
त्रैयम्बकं किमपि कार्मुकमन्तरायः ॥ ८ ॥

नापि दशकंधरानुरोधेन स्वयं प्रतिज्ञातमन्यथा करिष्यति महाक्षत्रियो विदेहराजः । तन्न किंचिदेतत् ।

**कलहंसिका**—(विहस्य ।) एवं भोदु । अज्ज, संपदि कहिं ते रामलक्खणा ।

---

मिति कुतो ज्ञातमित्यत आह—तदात्वे तत्काले प्रोन्मीलन्यो म्रदिमा मृदुत्वं तेन रमणीयात् । प्रत्यङ्गादित्यस्य विशेषणम् । म्रदिमेति 'पृथ्वादिभ्य इमनिच्–' । 'र ऋतो हलादेर्लघोः' इति रेफादेशः । 'टेः' इत्युकारलोपः । 'तत्कालस्तु तदात्वं स्यात्' इत्यमरः । 'दसग्गीवपुरोहिदो आअदोत्ति' इति वाक्ये कञ्चुकिनोऽवज्ञामवगम्य तत्रोत्तराप्राप्तौ सत्यामिदानीं प्रसक्तानुप्रसक्त्या तिरोहिततद्वाक्यस्योत्तरप्राप्त्यर्थं कलहंसिका कञ्चुकिनं प्रत्याह—**भोदु इति**। 'भवतु । तत्र किमपि युष्माभिः श्रुतम्' [इति च्छाया ।] अधुना तत्रोत्तरयति—**वत्से, न तावदित्यादि**। यदि न स्यादित्यस्याकाङ्क्षां पूरयति—**तदेति**। 'तदा हताशो रावणो देवीं परिणयते' [इति च्छाया ।] अत्र हताशो निन्दितप्रत्याशः । परिणयते विवाहयति । **हस्तेकरिष्यतीति**। हस्तेकरिष्यति विवाहयिष्यति । 'नित्यं हस्तेपाणावुपयमने' इति हस्तेशब्दस्य सप्तम्यन्तप्रतिरूपकाव्ययस्य गतित्वाद्धातोः प्राक्प्रयोगः । जित्वरो जयनशील इत्यत्र 'सर्तिशास्तिर्तिभ्यश्च' इति करप् । प्राणाधिकं बलाधिकम् । 'वरं प्राणाधिको योधो न तु प्राणाधिकं धनुः' इति धनुःशास्त्रम् । त्रैयम्बकं माहेश्वरम् । त्र्यम्बकस्येदम् । 'तस्येदम्' इत्यण् 'न य्वाभ्याम्–' इत्यैच् । कार्मुकं धनुः । अन्तरायो विघ्नः । **एवमिति**। 'एवं भवतु । आर्य, संप्रति कुत्र तौ रामलक्ष्मणौ' [इति च्छाया ।] अत्रैवं भवतु त्वद्वचनमेवास्तु । उत्तरं कुर्वाणोऽपि तयोः प्र-

---

१. 'तावदयमर्थः'. २. 'यस्तादृशः'; 'कस्तादृशीम्'. ३. (निःश्वस्य ।)'.

कञ्चुकी—नन्वेतावेव देवतागारवेदिकायां
मुनीन्कौशिकवैदेहगौतमानभिराध्यतः।
ढौकितौ ज्ञानकर्मभ्यां मोक्षस्वर्गाविव स्वयम् ॥ ९ ॥
तदेहि। महच्चिरमागतानामस्माकम्। कन्यान्तःपुरमेव गच्छामः।
(इति निष्क्रान्तौ।)
विष्कम्भकः।

(ततः प्रविशति जनको विश्वामित्रशतानन्दौ रामलक्ष्मणौ च।)

जनकः—(सहर्षम्।) भगवन्विश्वामित्र,
लुम्पन्नदृष्टजामातृसंपदां शुचमद्य नः।
त्वदागमनजन्मायमानन्दः सुदिनायते ॥ १० ॥
अपि च।
अद्य प्रदक्षिणशिखावलयः कृशानु-
रश्नाति मे जनपदेषु वषट्कृतानि।
त्वत्तेजसि स्फुरति शान्तिकपौष्टिकेषु
स्वां च स्रुचं शिथिलमाङ्गिरसो बिभर्ति ॥ ११ ॥

वेशं मुख्यत्वेन सूचयन्नाह—नन्वेतावेवेत्यादि। एतावेव रामलक्ष्मणावेव मुनीन्कौशिकादीनभिराध्यत आराध्यतः। वैदेहो जनकः। गौतमः शतानन्दः। कीदृशौ। ज्ञानं तत्त्वज्ञानम्, कर्म यज्ञादि, ताभ्यां ढौकितावुपनीतौ मोक्षस्वर्गाविव मोक्षस्वर्गतुल्यौ। उपमायामिवशब्दः। ननु मुनीनभिराध्यत इत्यसंबद्धम्। दिवादौ राधः अकर्मकाद्वृद्धावेव सकर्मकाच्च श्यन्न प्राप्नोति यत इति। नैवम्। कौशिकादीनभि लक्षीकृत्य। 'अभिरभागे' इति कर्मप्रवचनीयसंज्ञाविधानात्। यद्वाकर्मकाद्वृद्धावेवेति नियमः। सकर्मकात्तु भवत्येव श्यन्। यद्वा मुनीन्ढौकितावभिवादयमानावाराध्यत इत्यकर्मको धातुः। चिरं विलम्बः। लुम्पन्विनाशयन्। शुचं शोकम्। नोऽस्माकम्। सुदिनायते सुदिनं करोति। 'सुदिनदुर्दिननीहारेभ्यश्च' इति क्यङ्। अद्येति। अद्य प्रदक्षिणभूता या शिखा ज्वाला सैव वलयः कङ्कणं यस्य तादृशः। यद्वा प्रदक्षिणज्वालावेष्टनः। कृशानुरग्निर्नोऽस्माकं जनपदेषु देशेषु वषट्कृतानि हुतान्यश्नाति खादति। यज्ञवह्नेः प्रदक्षिणशिखा प्रशस्ता। आङ्गिरसः शतानन्दः स्वां च स्रुवभेदं शिथिलं यथा स्यादेवं बिभर्ति धारयति। कुतः शिथिलं बिभर्तीत्याह—शान्तिकपौष्टिकेषु शान्तिपुष्टिनिमित्तकर्मसु त्वत्तेजसि

१. 'आगतयोरावयोः'. २. 'पुर एव गच्छावः'.

**विश्वामित्रः**—सखे सीरध्वज, चिरस्य शान्तः पुष्टश्च तवायं जनपदः ।

यत्र त्वं ब्रह्ममीमांसातत्त्वज्ञो दण्डधारकः ।
पुरोधाश्चैव यस्यासावङ्गिरःप्रपितामहः ॥ १२ ॥

(स्मितं कृत्वा ।) जामातुरदर्शनजन्मा शोकः पुनरस्माकमुपशमयितुमवशिष्यते । किं च शोकहर्षौ नाम लोकयात्रेयं भवतः । तथाहि ।

यजूंषि तैत्तिरीयाणि मूर्तानि वमति स्म यः ।
स योगी याज्ञवल्क्यस्त्वां वेदान्तानध्यजीगपत् ॥ १३ ॥

**लक्ष्मणः**—(जनान्तिकम् ।) आर्य, अयमयं स राजा वैदेहः । पवित्रमपरिमेयाश्चर्यं यस्यावदानमुपाध्यायादनुश्रूयते ।

**रामः**—(सप्रमोदानुरागम् ।) वत्स, स एवायं शतपथकथाधिकारी पुरुषः प्रणाय्यायान्तेवासिने यस्मै वाजसनेयो याज्ञवल्क्यः सूक्तानि यजूंषि प्रोवाच ।

---

स्फुरति सति । 'तदस्य प्रयोजनम्' इति ठक् । 'शान्तिकपौष्टिके च' इति पाठे त्वत्तेजसि कीदृशे । शान्तिकारिणि पुष्टिकारिणि चेत्यर्थः । त्वत्तेजसैव दुरितोपशमाच्छान्तिकार्थं न जुहोतीति भावः । 'अग्नौ तु हुतं त्रिपु वषट्कृतम्' इत्यमरः । 'स्रुवो भेदाः स्रुचः स्त्रियाम्' इति च । 'देशे जने जनपदः' इति च । कुतः शान्तः पुष्टश्चेत्यत आह—**यत्रेति** । ब्रह्ममीमांसा भाट्टमतम् । ब्रह्मप्रतिपादकत्वात्तस्य । यद्वा ब्रह्म वेदः । तथा च वेदान्तः । दण्डधारकः शासकः । राजेति यावत् । असौ शतानन्दो यस्य पुरोधाः पुरोहितः । कीदृशः अङ्गिरामुनिः प्रपितामहो यस्य सः । 'पुरोधास्तु पुरोहितः' इत्यमरः । उपशमयितुं खण्डयितुम् । **यजूंषीति** । तित्तिरिमुनिना प्रकर्षेणानूदितानि तैत्तिरीयाणि । 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' । मूर्तिः शरीरं सैषामस्ति । अर्शआदित्वादच् । मूर्तानि कृतदेहपरिग्रहाणि वमति स्मोद्गीर्णवान् । 'लट् स्मे' इति भूते लट् । अध्यजीगपदध्यापयति स्म । 'इङ् अध्ययने' । णिच् । लुङ् । चङ् । 'णौ च संश्चङोः' इति गाङादेशः । पुरा किल शाकल्यमुनेर्याज्ञवल्क्येन यजुर्वेदमधीत्य गुरुदक्षिणार्थं मुनिरुक्तः । मुनिना च दक्षिणा न गृहीता । ततश्च याज्ञवल्क्यनिर्बन्धेन जातकोपेन मुनिना मम विद्यैव दीयतामित्युक्तेन याज्ञवल्क्येनाधीतयजुर्वेद उद्गीर्य दत्तः । गुरुणा च तित्तिरिपक्षिरूपेण पीतः । तेन स तित्तिरिनामाभूत् । याज्ञवल्क्येन चानन्तरं यजुर्वेदः सूर्यादधीतः । याज्ञवल्क्याच्च जनकेन-इति प्राचीनकथा । **जनान्तिकमिति** । 'अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्' इति भरतः । अवदानं शुद्धं कर्म पूर्ववृत्तकर्म

---

१. 'अदर्शनशोकः'. २. 'पवित्रमाश्चर्यं च'; 'पावित्र्यमपरिमेयमाश्चर्यम्'. ३. 'उपाध्यायमुखात्'. ४. 'स एवायं शतपथाधिकारी'. ५. 'यस्मै वाजसनेयाय वाजसनेयः'.

**विश्वामित्रः**—(मुहूर्तं निर्वर्ण्य च।)

निजाय तस्मै गुरवे यतीनां जैत्राय विश्राणितगोसहस्रम्।

तं गोसहस्राधिपतेः प्रशिष्यमुपास्महे मैथिलमातिथेयम्॥ १४॥

**जनकः**—(सप्रश्रयम्।) भगवन्, यदन्यत्किंचिदभिदधाति तत्र प्रभविष्णुर्भवान्। तत्रभवतः सहस्रमयूखान्तेवासिनो योगीश्वरादध्ययनमिति महीयसीयमस्माकं यशःपताका।

**विश्वामित्रः**—(विहस्य।) भो महायोगिन्,

किं याज्ञवल्क्यो जनकः किमेवं न वः स्वरूपं कवयोऽपि विद्युः।

प्रवाहनित्यानधिकृत्य युष्मान्सहस्रशाखाः श्रुतयः प्रथन्ते॥ १५॥

---

वा। 'अवदानं वृत्तकर्म शुद्धं कर्म च कीर्तितम्' इति विश्वः। शतपथो वेदः। शतशाखत्वात्तस्य। शतपथकर्ता याज्ञवल्क्यः शतपथप्रकाशकः। प्रणाय्यायाभिलाषशून्याय। मुमुक्षव इति यावत्। इदं तु 'प्रणाय्योऽसंमतौ' इति ण्यदन्तं निपातितम्। 'प्रणाय्योऽभिलाषशून्यः स्यात्' इति हारावली। अन्तेवासिने शिष्याय। 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः। वाजसनेयो यजुर्वेदशाखीयः। **निजायेति**। निजाय स्वीयाय गुरवे याज्ञवल्क्याय। जैत्राय जयशीलाय। जेतैव जैत्रः। प्रज्ञादित्वात्स्वार्थेऽण्। विश्राणितं दत्तम्। 'श्रण दाने'। गवां सहस्रं गोसहस्रम्। गोसहस्राधिपतेः सूर्यस्य। 'गोशब्दः पशुभूम्यंशुवाग्दिगर्थः' इति शाश्वतः। प्रशिष्यं शिष्यशिष्यम्। याज्ञवल्क्यस्य सूर्यशिष्यत्वात्। अस्य च तच्छिष्यत्वात्। उपास्महे उपगता भवामः। आतिथेयमतिथौ साधुम्। 'पथ्यतिथिवसतिस्वपतेर्ढञ्'। **यदन्यत्किंचिदिति**। जामातृसंबन्धीति भावः। प्रभविष्णुः प्रभावशीलः। योगीश्वराद्याज्ञवल्क्यात्। **विहस्येति**। अतिगूढतात्पर्यसमानविषयकोत्तरश्रवणादिति भावः। **किं याज्ञवल्क्य इति**। याज्ञवल्क्यः किमेवमस्तु, जनको वा किमेवमस्तु, इति वो युष्माकं स्वरूपं कवयो वाल्मीकिप्रभृतयोऽपि न विद्युर्न जानन्ति। याज्ञवल्क्यो वा जनको वेति न कश्चिद्विशेष इति भावः। एवमिति समान्योक्तेः क्लीवता। विद्युरिति 'विद ज्ञाने'। विध्यादि लिङ्। 'झेर्जुस्'। युष्मानधिकृत्य त्वामाधारीकृत्य। सहस्रशाखाः श्रुतयः प्रथन्ते ख्याता भवन्ति। 'प्रथ प्रख्याने'। शाखा वेदविभागः। श्रुतिरिह सामवेदः। स एव सहस्रशाखः। यजुर्वेदस्तु शतशाखः। ऋग्वेद एकविंशतिशाखः। श्रुतय इति बहुवचनं शाखाबहुत्वात्। अवयवधर्मस्यावयविन्युपचारात्। समुदायसमुदायिनोरभेदाद्वा। युष्मान्कीदृशान्। प्रवाहेण गुरुशिष्यपरम्परया

---

१. 'च निर्वर्ण्य'. २. 'अभिदधासि'. ३. 'योगीश्वराद्भगवतो याज्ञवल्क्यात्'. ४. 'महतीयमस्माकम्'; 'इयमस्माकं महती'.

**शतानन्दः**—भगवन्कौशिक, एवमीदृशाः खल्वमी त्रिभुवनमहनीयमहिमानो मनीषिणः।

**जनकः**—(सवैलक्ष्यस्मितम्।)

निर्माय कार्मणमृचामघमर्षणीना-
मुन्मार्जनीर्जगदघानि तवाद्य वाचः।
श्रोतुं चिरप्रणयिकौतुकमस्ति चेतो
दुःखाकरोति पुनरेष ममार्थवादः॥ १६॥

तद्विरम। (इति शिरस्यञ्जलिं घटयति।)

**विश्वामित्रः**—(सस्मितमस्याञ्जलिमुद्घाटयन्।) सखे सीरध्वज, संह्रियताम़ञ्जलिः। अमी तूष्णींभूताः स्मः। कात्यायनीकामुककार्मुकारोपणपणप्रणयप्रवीणेन तु दुहितुः पत्या संप्रत्यपर्युषितप्रतिज्ञो भूयाः।

**लक्ष्मणः**—(अपवार्य।) आर्य, परस्परेषां पौरुषोत्कर्षप्रशंसारमणीयः पावनोऽयममीषां समवायः।

---

नित्यानविनाशिनः। विश्वामित्रं निवर्तयितुमाह—**निर्मायेति**। अद्य तव वाचः श्रोतुं मम कौतुकमस्ति। ममेत्युभयान्वयि। ममैषोऽर्थवादः स्तुतिः पुनश्चेतः कर्म दुःखाकरोति। चेतः कीदृशम्। चिरप्रणयि चिरानुबन्धि। वाचः कीदृश्यः। अघमर्षणीनां पापापहारिकाणामृचां कार्मणमाभिचारिकरूपं कृत्वा जगदघानि जगत्पापान्युन्मार्जनीः शोधयन्तीः। त्वद्वाचामेवादरात्तासामृचामादरं लोका न कुर्वत इति भावः। मर्षणीत्यत्र करणे ल्युट्। 'कार्मणं मन्त्रतन्त्रादि योजने कर्मठेऽपि च' इति धरणिः। उद्घाटयन्प्रकाशयन्। ननु घटादित्वान्मित्संज्ञायां मितां ह्रस्वत्वेन भाव्यम्। मैवम्। 'घट संघाते' इति चौरादिकस्यामितोऽयं प्रयोगः। यथा 'कमलवनोद्घाटनं कुर्वते ये' इति सूर्यशतके। यद्वोद्घटनमुद्घाटः। भावे घञ्। 'तत्करोति—' इति णिजन्ताच्छतृ। तूष्णींभूताः स्मो मौनिनो भूताः स्मः। 'मौने तु तूष्णीं तूष्णीकाम्' इत्यमरः। कात्यायनी गौरी तस्याः कामुकः स्वामी हरस्तस्य यत्कार्मुकं धनुस्तदारोपणमेव पणस्तत्प्रणये प्रवीणेन कुशलेन। 'दुहितुःपतिना' इति पाठे दुहितृस्वामिनेत्यर्थः। 'ऋतो विद्यायोनिसंबन्धेभ्यः' इति षष्ठ्या अलुक्। 'पतिः समास एव' इति नियमाद्धिसंज्ञायां नाभावः। **अपवार्येति**। 'रहस्यं कथ्यतेऽन्यस्य स्मृतं तदपवारितम्' इति भरतः। पौरुषं पुरुषार्थख्यातिस्तया य उत्कर्षस्तस्य प्रशंसा प्रशस्तिस्तया रमणीयो रम्यः समवायः समूहः। लक्ष्मणवचनमनुमोद-

---

१. 'सविलक्ष–'. २. 'रोपणप्रवीणेन'. ३. 'पावनोऽयमृषीणाम्'.

**रामः**—वत्स, यदात्थ।

स्मरन्ति लोकार्थममी किल श्रुतीरिति प्रतिष्ठामधिगन्तुमीश्महे।
परं यदेषां पुनरस्ति वैभवं तदेत एव व्यतिविद्रते यदि॥ १७॥

**जनकः**—(सहर्षम्।) भगवन्, परमनुगृहीतोऽस्मि। यतः।

समस्या वा साम्नां बहिरबहिरंहःपरिमृजा-
मृचां वा संवादः किमपि यजुषां वा परिपणः।
त्वदाशीर्वादोऽयं बहुविषयसाक्षात्कृतफलो
वरं मे वत्सायाः प्रथयति पुरोवर्तिनमिव॥ १८॥

**विश्वामित्रः**—(साकूतस्मितम्।) सखे सीरध्वज, एवमेतत्।

दवीयस्यो दूरादपथमिह चामुत्र च शुचां
त्रिवेदीवाक्यानामनतिचिरभग्ना इव खिलाः।

---

मान आह—**स्मरन्तीति**। अमी कौशिकादय ऋषयो लोकार्थं लोकनिमित्तं श्रुतीर्वेदान्स्मरन्ति स्मृतिरूपतां नयन्ति। श्रुत्यनुसारेण स्मृतिकरणात्। वयमेषामिति प्रतिष्ठामुत्कर्षमधिगन्तुं ज्ञातुमीश्महे प्रभवामः। किल निश्चये। इति स्वरूपे। एषामृषीणां पुनः परं श्रेष्ठं वैभवं विभुत्वं यदस्ति तद्वैभवमेत एव ऋषयो यदि व्यतिविद्रतेऽन्योन्यं जानन्ति तद्वा जानन्ति। न त्वन्ये केचनेत्यर्थः। 'विद ज्ञाने' व्यतिपूर्वः। 'कर्तरि कर्मव्यतिहारे' इति तङ्। 'वेत्तेर्विभाषा' इति रुट्। **समस्येति**। अयं त्वदाशीर्वाद आशीर्वचनं मे वत्सायाः सीताया वरं जामातरं पुरोवर्तिनमिव प्रथयति कथयति[1]। विश्वामित्राशीर्वादस्य कथमेभिः समं साम्यमित्यत आह—बहुविषये साक्षात्कृतं फलं यस्य सः। पुनः कीदृश आशीर्वादः। साम्नां सामवेदऋचां समस्या संक्षिप्तार्थवाक्। अत्र सर्वे वाशब्दा उपमावाचिनो विकल्पे वा। ऋचामृग्वेदानां वा संवादः सम्यग्भाषणम्। वहिर्वाह्ये। अबहिरभ्यन्तरे। अंहसां पापानां परिमृजां प्रोञ्छिकानाम् ऋचामित्यस्य विशेषणम्। किमप्यनिर्वचनीयस्वरूपो यजुषां यजुर्वेदानां वा परिपणो मूलधनम्। 'नीवी परिपणो मूलधनम्' इत्यमरः। क्वचित् 'परिणमः' इति पाठः। 'समस्या तु समासार्था' इत्यमरः। प्रस्तुतप्रयोजनानुरोधेन स्वोत्कर्ष[कथन]जन्यदूषणमङ्गीकृत्यापि स्वतात्पर्यविषयकज्ञानं जनकस्य स्थिरीभवत्वित्यभिप्रायादाह—**दवीयस्य इति**। द्विजगिरो ब्राह्मणवचनानि क्व नु विपरियन्ति विपरीतानि भवन्ति। अपि तु न क्वापि। नुर्वितर्के। कीदृश्यः। दवीयस्यो महत्यः। दूरशब्दस्येयसुनि 'स्थूलदूर–' इत्यादिना रेफलोपे गुणेऽवादेशे च रूपम्। पुनः कीदृश्यः। इह इहलोके चामुत्र परलोके च शुचां शोकानां दूरादत्यर्थेनापथमस्थानम्। अस्थानस्यैकत्वेन विवक्षितार्थलाभादेकवचनम्। यद्वा शुचां दवीयस्यो दूरतराः।

---

1. 'कथयति'.

श्रुतिग्राह्यं ज्योतिः किमपि वहिरन्तर्मलमुषो
मृजाया मज्जानः क नु विपरियन्ति द्विजगिरः ॥ १९ ॥

**शतानन्दः**—(स्वगतम् ।) नूनं रामभद्रमेव[1] जामातरमभिसंधाय भगवानयं पुनः पुनर्वक्रोक्तिभिः[2] सीरध्वजं परिमोहयते[3] । भवतु । अहमस्य प्ररोचनार्थमसंविदान इव पृच्छामि । (प्रकाशम् ।) भगवन्, कस्येदं शकुन्तराजकेतोरिव कौस्तुभश्रीवत्सौ रत्नद्वयम्[4] ।

**विश्वामित्रः**—(विहस्य[5] स्वगतम् ।) साधु वत्स शतानन्द, साधु । यदेतत्कृतं तीर्थं[6] विवक्षितस्य वस्तुनः सुखावताराय । (प्रकाशम् ।) वत्स गौतम[7], ककुत्स्थकुलसंभवौ कुमारावेतौ ।

**शतानन्दः**—(सप्रत्यभिज्ञमिव ।)

पुत्रार्थे जगदेकजाङ्घिकययूद्दामभ्रमत्कीर्तिना
चातुर्होत्रवितीर्णविश्ववसुधाचक्रेण चक्रे मखः ।

---

दूरादेव तदसंगमादेव । अत एव तासामस्थानमपि । दूरादिति भावप्रधानो निर्देशः । तथा च दूरत्वादपथं शुचामित्यर्थः । त्रिवेदीवाक्यानां खिला इवाप्रहतभूमय इव । 'खिलमप्रहतेऽपि स्यात्' इति मेदिनीकरः । कीदृशाः खिलाः । अनतिचिरभग्नास्तत्कालकृष्टाः । गिरोऽपि तत्कालदत्ताः । पुनः कीदृश्यो गिरः । श्रुतिग्राह्यं कर्णग्राह्यं किमप्यनिर्वचनीयं ज्योतिः शब्दब्रह्म । तत्त्वप्रकाशकत्वात् । 'श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । मलं पापम् । वहिरन्तर्मलमुषो बाह्याभ्यन्तरमलापहारिकाः । यद्वा वहिर्ज्योतिरिति व्यस्तरूपकम् । अन्तर्मलमुषोऽन्तःपापापहारिकाः । मृजायाः शुद्धेर्मज्जानः सारभागाः । विपरियन्तीति विपरिपूर्वादिणो लटि 'इणो यण्' इति यणादेशः । अपथमिति 'पथः संख्याव्ययादेः' इति क्लीवत्वम् । 'सारो मज्जा नरि' इत्यमरः । परिमोहयत इत्यत्र 'न पादम्याङ्—' इति परस्मैपदनिषेधे 'णिचश्च' इति तङ् । प्ररोचनमभिलाषः । असंविदान इवाजानन्निव । 'विद ज्ञाने' । 'समो गम्—' इति तङ् । कस्येदं दारकद्वयं वालकद्वयमिति संवन्धः । शकुन्तराजकेतोः कौस्तुभश्रीवत्सरत्नद्वयमिव । शकुन्तराजः पक्षिराजो गरुडः स केतुश्चिह्नं यस्य स विष्णुः । श्रीवत्सः कृष्णस्य मणिः कौस्तुभोऽपि । तीर्थं सोपानकम् । 'कटकली' इति प्रसिद्धम् । 'तीर्थं सोपानपङ्क्तौ स्यात्' इति धरणिः । अवतारो ज्ञानमवतरणं च । पूर्वप्रकाशितासंविदानत्वस्थापनायाह—**सप्रत्यभिज्ञमिवेति** । पूर्वानुभूतस्य तत्तदन्ताविशिष्टतया ज्ञानं प्रत्यभिज्ञा । तत्सहितं यथा स्यादेवमित्यर्थः । 'समक्षदिग्भागमिव' इति पाठे ज्ञातैकदेशमिवेत्यर्थः । **पुत्रार्थ इत्यादि** । पङ्क्ति-

---

१. 'रामचन्द्रमेव'. २. 'पुनर्वक्रोक्तिभिः'. ३. 'मोहयते'. ४. 'कुमाररत्नद्वयम्'. ५. 'विहस्य' इति पुस्तकान्तरे नास्ति. ६. 'तीर्थमिव'. ७. 'शतानन्द'.

राज्ञा पङ्क्तिरथेन यत्र सकलस्वर्वासिसर्वातिथौ
स स्वेनैव फलप्रदः फलमपि स्वेनैव नारायणः ॥ २० ॥

तत्किमेतावेव तौ दाशरथी यौ किल रामलक्ष्मणौ ताडकामथनमङ्गलो-द्घातवितीर्णदिव्यास्त्रमन्त्रपारायणेन भगवतैव विनीतौ वैतानिकस्य कर्मणश्छिद्रापिधानदक्षिणया भगवन्तमुपासांबभूवतुः।

**विश्वामित्रः**—(सकौतुकम्।) अथ किम्।

(जनकस्तौ सस्नेहबहुमानं पश्यति।)

**शतानन्दः**—तदनयोः कतरो रामभद्रः कतरश्च लक्ष्मणः।

---

रथेन दशरथेन राज्ञा पुत्रार्थे मखो यज्ञश्चक्रे कृतः। कीदृशेन। जगति संसार एकः श्रेष्ठो जाङ्घिकोऽतिवेगवान्यो ययुरश्वमेधीयोऽश्वः स एवोद्दामोद्भटा भ्रमन्ती कीर्तिर्यस्य तेन। 'ययुरश्वोऽश्वमेधीयः' इत्यमरः। चतुर्होत्रा एव चातुर्होत्राः। स्वार्थे प्रज्ञादित्वादण्। तेभ्यो वितीर्णं दत्तं विश्वं समस्तं वसुधाचक्रं पृथ्वीमण्डलं येन तेन। वेदचतुष्टयप्रयोगाद्धोत्रचतुष्टयं यत्र यज्ञे। स नारायणो देवः स्वेनैव स्वयमेव फलप्रदो यज्ञफलदायी स्वेनैव स्वयमेव फलमपि। अभूदिति शेषः। स्वेनैव रामादिरूपेण जातत्वात्। कीदृशे यज्ञे। सकलाः समस्ताः स्वर्वासिनो देवाः सर्वप्रकारेणातिथय आगन्तुका यत्र तस्मिन्। यद्वा सकलाः समस्ताः स्वर्वासिनो देवाः सर्वो महेश्वरश्चातिथिर्यत्र। वासवदत्तायाम् 'गौरीव सर्वप्रिया' इति श्लेषेण सर्वशब्दस्य महेश्वरवाचकत्वबोधनात्। अन्यथा श्लेषभङ्गप्रसङ्गः। न चास्मिन्व्याख्याने सकलस्वर्वासिपदेन महेश्वरस्यापि लाभात्पृथक्तस्योपादानं पौनरुक्त्यमावहतीति वाच्यम्। गोबलीवर्दन्यायेन तदुपादानात्। यद्वा सकलाः कलासहिताः प्रत्यक्षा एव स्वर्वासिनो देवा इति पूर्ववदपरम्। यद्वा सकलस्वः समस्तस्वर्गं वासयन्तीति सकलस्वर्वासिनो देवाः। सर्वेऽतिथयो यस्मिन्मखे तत्रेत्यर्थः। 'अतिथिः कुशपुत्रे स्यात्पुमानागन्तुकेऽपि च' इति मेदिनीकरः। ताडकामथनेन नाशेन यन्मङ्गलम्। यद्वा मथनमेव मङ्गलम्। तस्योद्घात उपक्रमे वितीर्णं दत्तं दिव्यास्त्रमन्त्रस्य पारायणमाश्रयो येन। यद्वा दिव्यास्त्रं मन्त्ररूपं पारायणमभीष्टम्। यद्वा परायणं साकल्यम्। 'उद्घातस्तु पुमान्पादस्खलने समुपक्रमे' इति मेदनीकरः। 'पारायणमभीष्टं स्यात्तत्पराश्रययोरपि' इति च। 'साकल्यासङ्गवचने पारायणतुरायणे' इत्यमरः। विनीतौ शिक्षितौ संमानितौ वा। वैतानिकस्य यज्ञसंबन्धिनः। छिद्रस्य विघ्नस्यापिधानं खण्डनं तदेव दक्षिणा तयोपासांबभूवतुः सेवितवन्तौ। 'दयायासश्च' इत्याम्। **सस्नेहबहुमानमिति**। रामलक्ष्मणयोः सौकुमार्यदर्शनात्तादृगतिदुष्करताडकाताडनश्रवणाच्चेति भावः। **तदनयोरिति**। कतरः कः।

---

१. 'मङ्गलोपोद्घात–'. २. 'भवतैव'. ३. 'भवन्तम्'. ४. 'सकौतुकम्' इति पुस्तकान्तरे नास्ति. ५. सस्नेहं पश्यति'. ६. 'रामः'.

**विश्वामित्रः**—(रामं निर्दिश्य[1] ।) वत्स आङ्गिरस,

ये चत्वारो दिनकरकुलक्षत्रसंतानमल्ली-
मालाम्लानस्तबकमधुरा[2] जज्ञिरे राजपुत्राः ।
रामस्तेषामचरमभवस्ताडकाकालरात्रि-
प्रत्यूषोऽयं सुचरितकथाकन्दलीमूलकन्दः ॥ २१ ॥

**शतानन्दः**—(लक्ष्मणं निर्दिश्य ।) अयं चापरो लक्ष्मणः । दिष्ट्या भगवद्वसिष्ठप्रसूतं क्षत्रकुलमृध्यते[3] ।

**जनकः**—(विहस्य ।) साधु भगवन्, अस्मादृशीषु प्रजासु प्रविश्य क्रीडसि ।

क्रोधाग्नौ पुरुहूतहुंकृतिपराभूतत्रिशङ्कुत्रपा-
संपातज्वलिते जगत्त्रयमयीं त्वय्याहुतिं जुह्वति ।
संभ्रान्तोपनतस्य नाटितजरावैक्लव्यशीर्णाक्षराः[4]
प्रत्यूहाय बभूवुरम्बुजभुवो देवस्य चाटूक्तयः ॥ २२ ॥

तमपि नाम भगवन्तं[5] यजमानमन्ये गोपायितारः ।

---

वत्सौपयिकं रामपरिचयं कारयितुमाह—**ये चत्वार इति** । दिनकरकुले सूर्यवंशे ये क्षत्राः क्षत्रियास्तेषां संतानः संततिः समूहो वा स एव मल्ली पुष्पविशेषस्तस्या या माला तस्या अम्लानो निर्मलो यः स्तवको गुच्छस्तद्वन्मधुरा मनोहरा ये चत्वारो राजपुत्रा रामभरतलक्ष्मणशत्रुघ्नरूपा जज्ञिरे जातास्तेषामयमचरमभव आद्योत्पन्नो रामः । क्वचित् 'क्षत्रसंतानवल्ली–' इति पाठः । क्षत्रसंतान एव वल्ली लता तस्या माला इत्यर्थः । ताडकैव कालरात्रिः श्यामरजनी तस्याः प्रत्यूष इव प्रत्यूषः प्रभातम् । तस्मात्तस्या अपायात् । अन्यापि रात्रिः प्रत्यूषेण नाश्यत इति ध्वनिः । सुचरितस्य या कथा सैव कन्दली वृक्ष-भेदस्तस्या मूलं प्रधानं कन्दः । मूलमित्यर्थः । तमधिकृत्यैव सुचरितकथा प्रवर्तत इति भावः । 'प्रत्यूषोऽहर्मुखम्' इत्यमरः । ऋध्यते वर्धते । **क्रोधाग्नाविति** । पुरुहूतस्येन्द्रस्य या हुंकृतिर्हुंकारस्तया पराभूतः पराङ्मुखो यस्त्रिशङ्कुस्तेन या त्रपा लज्जा सैव संपातो युगान्तवातस्तेन । यद्वा लज्जायाः संपातेन पतनेन समूहेन वा ज्वलिते देदीप्यमाने क्रोधाग्नौ जगत्त्रयमयीमाहुतिं त्वयि जुह्वति सति अम्बुजभुवो देवस्य ब्रह्मणश्चाटूक्तयः प्रत्यूहाय बभूवुर्वृत्ताः । संभ्रान्तस्य सभयस्य सोद्वेगस्य वा सत उपनतस्योप समीपे नतस्य नम्रस्य । सृष्टिविनाशावश्यंभावमाशङ्क्य तस्य संभ्रान्तत्वम् । नाटितं कृतं जरावैक्लव्यं तेन शीर्णानि

---

१. 'निर्दिशन्'; 'निदर्शयन्'. २. 'रुचयः'. ३. 'वर्धते'; 'ऋद्धयति'. ४. 'वैकल्यशीर्णाक्षराः'; 'वैक्लव्यजीर्णाक्षराः.' ५. 'भवन्तम्'.

**शतानन्दः**—राजर्षे, एवमेतत् । किं पुनर्न दीक्षिष्यमाणाः[1] क्रुध्यन्तीति रक्षितारं क्षत्रियमुपाददते ।

**जनकः**—(सहर्षं रामलक्ष्मणौ निर्वर्ण्य जनान्तिकम् ।) भगवञ्शतानन्द,

भवति न तथा भानोः शिष्ये गुरौ रसतो न च
स्वयमपि मुनौ विश्वामित्रे गृहानधितिष्ठति ।
दशरथसुतावेतौ दृष्ट्वा यथोच्छ्वसितं मनः
शिथिलयति मे प्रत्यग्ज्योतिः प्रबोधसुखासिकाम् ॥ २३ ॥

**शतानन्दः**—राजर्षे वैदेह, एवमेतत् । ममापि राजपुत्राविमौ साक्षात्कुर्वतो वत्से सीतोर्मिले न हृदयादवरोहतः ।

**जनकः**—(विश्वामित्रं प्रति ।) भगवन्,

इदं वयो मूर्तिरियं मनोज्ञा वीराद्भुतोऽयं चरितप्ररोहः ।
इमौ कुमारौ बत पश्यतो मे कृतार्थमन्तर्नटतीव चेतः ॥ २४ ॥

**विश्वामित्रः**—(सोत्प्रासम्[2] ।) सखे सीरध्वज, हृदयमेवामन्त्रयस्व किमर्थं कृतार्थमसीति ।

---

जीर्णान्यक्षराणि यासां ताः । त्रिशङ्कुकथा प्रागेव ( ३५ पृष्ठे ) लिखिता । गोपायितारो रक्षितारः । किं पुनः किं त्वित्यर्थः । प्रसक्तानुप्रसक्तिं निवारयन्प्रस्तुतं प्रस्तोतुं भूमिमारचयति—**भवतीति** । एतौ दशरथसुतौ दृष्ट्वा उच्छ्वसितं सन्मम मनः कर्तृ यथा प्रत्यग्ज्योतिःप्रबोधसुखासिकामात्मज्ञानसुखावस्थानं शिथिलयति मन्दीकरोति । तथा भानोः सूर्यस्य शिष्ये याज्ञवल्क्ये मम गुरौ रसतोऽनुरागान्न भवति । 'वसतः' इति पाठे गुरौ गुरुसमीपे वसतस्तिष्ठतो मम मनस्तथा नोच्छ्वसितं नोल्लसितमित्यर्थः । न च विश्वामित्रे मुनौ स्वयमपि गृहानधितिष्ठति सति तथा भवति । तथा चात्मज्ञानेऽपि मम मनोऽधुना न लगतीति भावः । अवरोहतो लम्बेते । धातोरनेकार्थत्वात् । जनको रामलक्ष्मणौ वरत्वेन हृदि निधायोक्तिभङ्ग्या विश्वामित्रमाह—**इदमिति** । इदं वय इत्यत्र ययोरिति योज्यम् । वीरो रसस्तेनाद्भुतश्चित्रः । चरितप्ररोहश्चरित्रस्य विस्तारोऽङ्कुरो वा । यद्वा वीराणामद्भुत आश्चर्यकरः । अन्तरभ्यन्तरे नटतीव नृत्यतीव । हर्षातिशयादिति भावः । कुमाराविति वरत्वौपयिकं विशेषणम् । आमन्त्रयस्व पृच्छ । **सखेदमिति** । महादेवधनुरारोपणपणं विस्मृत्यैव तत्रानास्थामास्थाय विश्वामित्रो वदति 'हृदयमेवामन्त्रयस्व' इ-

---

१. 'दीक्षमाणाः'. २. 'सोत्प्रासहासम्'.

**जनकः**—(सखेदस्मितम् ।)

यद्गोत्रस्य प्रथमपुरुषस्तेजसामीश्वरोऽयं
　येषां धर्मप्रवचनगुरुर्ब्रह्मवादी वसिष्ठः ।
ये वर्तन्ते तव च हृदये सुष्ठु संवन्धयोग्या-
　स्ते राजानो मम पुनरसौ दारुणः शुल्कसेतुः ॥ २५ ॥

**रामलक्ष्मणौ**—([1]सविमर्शम् ।) कथमस्मदीयाः कथाः प्रस्तूयन्ते ।

**विश्वामित्रः**—(सस्मितम् ।) राजर्षे, यदि शुल्कसंस्थैव केवलमन्तरायस्तन्न किंचिदेतत् ।

**जनकः**—(सखेदं [2]विमृशन्नपवार्य ।) भगवन्[3]नाङ्गिरस,

यद्विदन्नपि विदेहनन्दिनीपाणिपीडनविधेर्महार्घताम् ।
एवमाह मुनिरेष कौशिकस्तेन मुह्यति चिराय मे मनः ॥ २६ ॥
　तदेव स्थाणवीयं वा धनुः स्यादिदमीदृशम् ।
　एतदारोपणं नाम पणो वा मम जर्जरः ॥ २७ ॥

त्याद्याशङ्क्येति भावः । **सस्मितमिति** । अहो अस्य विश्वामित्रस्य भ्रमो यज्जानन्नपि धनुरारोपणपणम् 'हृदयम्' इत्याद्याहेति भावः । धनुरारोपणपणं कौशिकं स्मारयितुमाह—**यद्गोत्रस्येति** । यद्गोत्रस्य रामभद्रादिगोत्रस्यायं तेजसामीश्वरः सूर्यः प्रथमपुरुषः । येषां धर्मप्रवचने धर्मभाषणे वसिष्ठो गुरुः । कीदृशः । ब्रह्मवादी तत्त्वकथकः परब्रह्मतत्त्वज्ञो वा । ये च तव हृदये वर्तन्ते । वरत्वेनेति शेषः । ते राजानः सुष्ठु यथा स्यादेवं संवन्धयोग्याः संवन्धार्हाः । ननु यद्येवं तर्हि कथं न व्रियत इत्यत आह—मम पुनरसौ शुल्कसेतुः पणबन्धो दारुणः कठोरः । प्रतिवन्धक इति यावत् । तथा च यो धनुराकर्षणकर्ता स एव वरणीय इति भावः । शुल्कस्य संस्था व्यवस्था । य एतद्धनुराकर्षति तेनैव परमियं वोढव्येति । न किंचिदिति । रामो धनुरारोपयिष्यत्येवेति भावः । **सखेदमिति** । विश्वामित्रवचनतात्पर्यावोधादिति भावः । कौशिकवाक्यतात्पर्यमजानञ्शतानन्दद्वारा तत्तात्पर्यं वोद्धुमाह—**यद्विदन्निति** । यद्यस्माद्विदेहनन्दिन्याः सीतायाः पाणिपीडनविधेः पाणिग्रहणविधेर्महार्घतां दुर्लभत्वं बहुमूल्यत्वं वा । धनुरारोपणस्यान्तरायत्वात् विदन्नपि जानन्नप्ययं कौशिकः । एवं 'यदि शुल्कसंस्थैव' इत्यादि पूर्वोक्तमाह वदति तेन हेतुना मम मनश्चिराय चिरसमयं मुह्यति । मोहमुपैतीत्यर्थः । विदन्निति । 'विदेः शतुर्वसुः' इति वस्वादेशस्यानित्यत्वम् । मोहमपास्य विकल्पयन्नाह—**तदेवेति** । तदेवेदं स्थाणवीयं महादेवसंबन्धि धनुरीदृशं दुरा-

१. '(सविस्मयम् ।) कथमेभिरस्मदीयाः'. २. 'सखेदं विमृष्यापवार्य च'. ३. 'शतानन्द'.

**शतानन्दः**—शान्तं[1] शान्तम्।

दुर्लङ्घ्यमीश्वरशरासनमप्रमोच्य-
शुल्कग्रहस्त्वमसि सर्वमिदं तथैव।
किं त्वस्य राघवशिशोः सहजानुभाव-
गम्भीरभीषणमतिस्फुटमेव वृत्तम्॥ २८॥

**जनकः**—(मुनिं प्रति।) भगवन्कौशिक, चिरमपि विकल्पयन्न[2] भवद्भिरामभिधेयमद्यापि निश्चिनोमि।

**विश्वामित्रः**—(विहस्य।) तदुपदर्शय[3] कार्मुकमैन्दुशेखरं रामभद्र एव व्याकरोतु।

**रामः**—(सहर्षं[4] स्वगतम्।) कथमलीकविकल्पैरात्मानं प्रमोहयामि[5]। नन्वयं ममैव कौतुकं[6] पूरयितुमैश्वरं धनुरभ्यर्थयते भगवान्। (जनकं च दृष्ट्वा सविमर्शम्।) अहह।

बालेन[7] संभाव्यमिदं च[8] कर्म ब्रवीति च प्रत्ययितो महर्षिः।
इति ध्रुवं मन्त्रयते नृपोऽयं दत्ते किमत्रोत्तरमाकुलोऽस्मि॥ २९॥

**जनकः**—(मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निःश्वस्य।) भगवन्, क्व तादृशं

रोपणं वा न स्यात्। अथवैतदारोपणं नाम मम पणो जर्जरो जीर्णोऽदृढो वा स्यात्। मिथ्या भवेदिति यावत्। जनकमाश्वासयितुमाह—**दुर्लङ्घ्यमिति**। दुर्लङ्घ्यं दुर्गमम्। त्वमप्यप्रमोच्योऽत्याज्यः पणो यस्य तादृशः। इदं सर्वं धनुर्दुर्लङ्घ्यत्वादि तथैव तथ्यमेव। नात्र कुत्राप्यन्यथात्वशङ्केति भावः। किं त्वस्य राघवशिशो रामस्य स्वाभाविको योऽनुभावस्तेन गम्भीरं दुरवगाहं भीषणं च वृत्तं व्यापारस्ताडकामथनादिरूपमतिस्फुटमेव विदितमेव। तथा च येन तत्तादृगतिभीषणं कर्माकारि तस्यावश्यं धनुरारोपणं नाशक्यमिति भावः। विकल्पयन्नानापक्षं समुद्भावयन्। **विहस्येति**। मुनेस्तात्पर्यं जनकेन किंचिदपि न ज्ञातमिति भावः। ऐन्दुशेखरमिन्दुशेखरसंबन्धि। व्याकरोतु विवृणोतु। अलीकं मिथ्या। **बालेनेति**। इदं धनुरारोपणाख्यं कर्म बालेन रामेण संभाव्यं कर्तव्यमिति प्रत्ययितः प्रत्यययुक्त आप्तो वा। 'आप्तः प्रत्ययितस्त्रिषु' इत्यमरः। महर्षिः कौशिको ब्रवीति। इति पूर्वार्धोक्तमयं नृपो जनको ध्रुवं निश्चितं मन्त्रयत आलोचयति। अत्रो-

१. 'शान्तम्'. २. 'विमृशन्न भवद्भिरामद्यापि'. ३. 'तदुपसर्पय कार्मुक–'; 'कार्मुकमैन्दुशेखरं दर्शय'. ४. 'स्वगतम्'; 'स्वगतं सहर्षम्'. ५. 'मोहयामि'; 'प्रमोदयामि'. ६. 'कौतूहलम्'. ७. 'वत्सेन'. ८. 'तु'.

भागधेयमस्माकं येन भगवता विश्वामित्रेण नाथवन्तो वयं मैथिलीमेतस्मै रघुकुलकुमाराय प्रतिपाद्य चिराय कृतार्थीभवामः[1][2]।

(रामो लज्जते।)

**जनकः**—किं[3] च भगवन्,

येषां चापसमर्पितत्रिभुवनच्छिद्रापिधानं व्रतं
जातं रोहितमेव केवलमपज्यावन्धमैन्द्रं धनुः।
तेऽपि प्रेक्ष्य पुरा शरासनमिदं मौर्वीकिणश्यामिका-
कस्तूरीसुरभीकृतानविभरुर्व्यर्थं भुजान्भूभुजः॥ ३०॥

**विश्वामित्रः**—(विहस्य[4]।) सखे सीरध्वज, कथं महापुण्यराशिमात्मान-मवमन्यसे।

त्वद्भागधेयमपि तादृशमुत्सवाना-
मेतादृशां वयमपि प्रसमीक्षितारः।

---

त्तरं किं दत्ते दास्यतीत्याकुलोऽस्मीत्यन्वयः। **दीर्घमुष्णं च निःश्वस्येति**। अतिम-धुरमूर्तिना रामेणातिभीषणमिदं धनुर्नारोपणीयमेवेति भावः। प्रतिपाद्य दत्त्वा। **येषा-मिति**। ऐन्द्रमिन्द्रसंबन्धि धनुरपगतो ज्यावन्धः प्रत्यञ्चिकावन्धो यस्य तादृशं सद्रो-हितमेव ऋज्वेव जातम्। कुत इत्यत आह—कीदृशम्। येषां राज्ञां चापे धनुषि समर्पितं त्रिभुवनस्य च्छिद्रमुपद्रवस्तस्यापिधानमाच्छादनम्। दूरीकरणमिति यावत्। तदेव व्रतं येन धनुषा तादृशं यत इत्यर्थः। तेऽपि भूभुजो राजानः पुरा पूर्वमिदं शरासनं धनुः प्रेक्ष्य दृष्ट्वा व्यर्थं यथा स्यादेवं भुजानविभरुर्धारयन्ति स्म। आरोपणानध्यवसायादिति भावः। कीदृशान्। मौर्वी प्रत्यञ्चिका तया किणो मृतमांसपिण्डस्तस्य श्यामिका कृष्णत्वं सैव कस्तूरी तया सुरभीकृतान्। अन्यापि कस्तूरी कमपि सुरभयतीति ध्वनिः। अबि-भरुरित्यत्र भृञो लङ्। शपः श्लुः। द्विर्वचनम्। 'भृञामित्' इतीत्त्वम्। अभ्यस्त-द्वारको जुस्। 'तदेव ऋजु रोहितम्' इत्यमरः। रामं स्तोतुं जनकमाश्वासयन्नाह—**त्वद्भागधेयमिति**। तव भागधेयमपि भाग्यमपि तादृशमत्युत्सवप्रसवशीलम्। एता-दृशां धनुरारोपणसीतापरिणयादीनामुत्सवानां वयमपि प्रसमीक्षितारो द्रष्टारः। वयमप्ये-तादृगुत्सवयोग्या एवेत्यर्थः। प्रकृते संगमयन्नाह—सन्त्येवेति। विश्वानि समस्तानि भुवनानि चतुर्दश। शौण्डः कुशलः ख्यातो वा। एतादृशा नृपाः सन्त्येव। अमी पुनर्न रामभद्रः। न राम इत्यर्थः। रामस्यान्यादृशी शक्तिरिति भावः। 'भागधेयं भाग्यं स्त्री

---

१. 'एतस्मै रघुकुलकुमाराय सीताम्'. २. 'चरितार्थी–'. ३. 'किं च' इति पुस्त-कान्तरे नास्ति. ४. 'विहस्य' इति पुस्तकान्तरे नास्ति.

सन्त्येव विश्वभुवनाभयदानशौण्डाः
क्षोणीभुजः परममी तु न रामभद्रः ॥ ३१ ॥

**लक्ष्मणः**—(स्वगतम् ।) कथमुपाध्यायेनैतदभिहितं यदस्मि वक्तुकामः ।

**जनकः**—भगवन्, सत्यमचिन्त्यो मणिमन्त्रौषधीनामिव रघुकुलकुटुम्बकानामनुभावः । परमेतद्ब्रवीमि ।

गिरीशेनाराद्धस्त्रिजगदवजैत्रं दिविषदा-
मुपादाय ज्योतिः सरसिरुहजन्मा यदसृजत् ।
हृषीकेशो यस्मिन्निषुरजनि मौर्वी फणिपतिः
पुरस्तिस्रो लक्ष्यं धनुरिति किमप्यतद्भुतमिदम् ॥ ३२ ॥

**शतानन्दः**—आः किमनया पुनःपुनः पिनाकप्रशस्तिपञ्जिकया । तदेतत्कौशिकमेव प्रमाणयन्तो बहु मन्यामहे । अपि च किमशक्यं रामभद्रस्य ।

उत्पादयन्कमपि कौणपकोटिहोमं
तेजोहुताशनसमिन्धनसामिधेनीम् ।
यस्ताडकामकृत बालसखैः पृषत्कै-
रीषज्जयः स्फुटमनेन दशाननोऽपि ॥ ३३ ॥

---

नियतिर्विधिः' इत्यमरः । 'शौण्डस्तु कुशले मत्ते' इति धरणिः । **गिरीशेनेति** । इत्थंनेन प्रकारेणेदं धनुः किमप्यनिर्वचनीयस्वरूपमद्भुतमाश्चर्यजनकम् । अस्तीति शेषः । इति कुत इत्यत आह—यद्धनुर्गिरीशेन महादेवेनाराद्ध आराधितः सन्सरसिरुहजन्मा ब्रह्मा दिविषदां देवानां ज्योतिरुपादाय गृहीत्वासृजत्सृष्टवान् । कीदृशम् । त्रिजगतामवजैत्रमवसादकम् । जेतृशब्दात्प्रज्ञाद्यण् । यस्मिन्धनुषि हृषीकेशो विष्णुरिषुर्बाणोऽजनि जातः । कर्तरि चिण् । फणिपतिर्नागराजो मौर्वी गुणः । तिस्रः पुरो नगराणि त्रिपुरदैत्यरूपाणि लक्ष्यं वेध्यम् । अजनीति सर्वत्र क्रियान्वयः । तिसृणां पुरामेकरूपत्वेन लक्ष्यत्वाल्लक्ष्येऽप्येकत्वमवधेयम् । भवतु यादृक्तादृक्कठिनं धनुः कौशिकवाक्यादेव निर्णीतं रामो व्याकरिष्यतीत्याह—**आः किमनयेत्यादि** । आः कोपेऽनास्थायां वा । प्रशस्तिपञ्जिकया स्तुतिविस्तारेण । प्रमाणयन्तः प्रमाणं कुर्वन्तः । **उत्पादयन्निति** । यो रामः कमप्यनिर्वचनीयं कौणपकोटिभी राक्षसकोटिभिर्होममुत्पादयन्कुर्वन् । बालस्य सखायो बालसखाः । 'राजाहःसखिभ्यष्टच्' । पृषत्कैर्बाणैस्ताडकां राक्षसीविशेषं तेज एव हुताशनो वह्निस्तस्य समिन्धने ज्वालने सामिधेनीमग्निसंधुक्षणऋचमकृत कृतवान् । अहो हेतोरनेन रामेण स्फुटं निश्चितं दशाननोऽपि रावणोऽपीषज्जयोऽकृच्छ्रजयः । सुजय इति यावत् ।

---

१. 'भुवनत्रय–'. २. 'न तु'. ३. 'उपाध्यायेनैत–'. ४. 'कडम्बकानाम्'. ५. 'पुनःपुनः' इति पुस्तकान्तरे नास्ति. ६. 'तदेनं कौशिकमेव'. ७. 'कालसखैः'.

(नेपथ्येऽर्धप्रविष्टः ।)

**पुरुषः[1]**—दशाननपुरोहितः शौष्कलो[2] महाराजं दिदृक्षते ।

**शतानन्दः**—(सोद्वेगम् ।) आः[3], आगच्छतु ।

(पुरुषो निष्क्रान्तः ।)

**रामः**—(सव्यथं[4] जनान्तिकम् ।) वत्स लक्ष्मण, कथमन्तरितोऽयमनेन दुरात्मना राक्षसेन कामारि[5]कार्मुकपरिचर्यामहोत्सवः ।

**लक्ष्मणः**—आर्य[6], न केवलमयम्—(इत्यर्धोक्ते हसति ।)

(रामः सप्रणयरोपस्मितं तम[7]पाङ्गेन पश्यति ।)

(प्रविश्य ।)

**शौष्कलः[8]**—(प्रत्येकमवलोक्यात्मगतम्[9] ।) कथमत्रैव जनकशतानन्दाभ्यां पुरस्कृतो विश्वेषामस्माकममित्रो[10] विश्वामित्रः । (विचिन्त्य ।) तिष्ठतु । कोऽयं हस्तदक्षिणेन । (दृष्ट्वा ।) अये[11], कावेतौ क्षत्रियब्रह्मचारिणौ ।

> पुण्यलक्ष्मीकयोः कोऽयम[12]नयोः प्रतिभासते ।
> मौञ्ज्यादिव्यञ्जनः शान्तो वीरोपकरणो[13] रसः ॥ ३४ ॥

---

'ईषद्दुःसुषु—' इति खल् । 'राक्षसः कौणपः क्रव्यात्' इत्यमरः । 'ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इति च । 'पृषत्कबाणविशिखाः' इत्यपि । नेपथ्येऽर्धप्रविष्टो जवनिकापटोद्घाटितार्धशरीरः । दिदृक्षते द्रष्टुमिच्छति । 'ज्ञाश्रुस्मृदृशां सनः' इति तङ् । **सोद्वेगमिति** । कथमन्तरितमनेन शौष्कलेन धनुराकर्षणाद्रामाय सीताप्रदानमिति भावः । आः कोपे, कष्टे वा । **सव्यथमिति** । झटिति कार्मुकपरिचर्यामहोत्सवप्रतिबन्धात्सीताविवाहप्रतिबन्धादिति भावः । कामारिः शिवः । परिचर्याकर्षणसेवा । **न केवलमिति** । किं तु तज्जन्यसीताविवाहोत्सवोऽपीति शेषः । अपाङ्गेन नेत्रप्रान्तेन । पुरस्कृतोऽग्रतः कृतः । विश्वेषां सर्वेषामस्माकमित्यभेदेनान्वयः । हस्तदक्षिणेन स्वहस्तस्य दक्षिणदिशा । **पुण्यलक्ष्मीकयोरिति** । अनयो रामलक्ष्मणयोः शान्तो रसो वीरोपकरणो वीररसानुबद्धः प्रतिभासते । वीर उपकरणमनुबन्धो यत्र । वीररसहेतुरित्यर्थः । मौञ्ज्यादि व्यञ्जनं चिह्नं यस्य तादृशः । कीदृशयोः । पुण्या शोभना लक्ष्मीश्च कान्तिर्ययो-

---

१. 'पुरुषः । पुरुषः'. २. 'शौष्कलो नाम'. ३. 'आः' इति पुस्तकान्तरे नास्ति. ४. 'सरोषव्यथम्'. ५. 'त्रैयक्षकाण्डासन—'. ६. 'आर्य' इति पुस्तकान्तरे नास्ति. ७. 'तम्' इति पुस्तकान्तरे नास्ति. ८. 'शौष्कलः । शौष्कलः'. ९. 'आत्मगतम्' इति पुस्तकान्तरे नास्ति. १०. 'अमित्रम्'. ११. 'अये' इति पुस्तकान्तरे नास्ति. १२. 'सोऽयम्'. १३. 'वीरोपकरणम्'.

निसर्गोदग्रमिदं च कुमारद्वयम् ।

पार्श्वे त्रयाणामेतेषामृक्सामयजुषामिव ।
रूपाभ्यां विधिमन्त्राभ्यामथर्वेव प्रदीप्यते ॥ ३५ ॥

(विमृश्य ।) आः[1], नूनं स एव[2] लक्ष्मणद्वितीयो रामहतकः कौशिकमृषिम[3]नुप्लवमानो मिथिलामुपस्थितः[4] । (सक्रोधशोकम् ।) हा[5] वत्से सुकेतुनन्दिनि ताडके, कथमीदृशान्मनुष्यडिम्भात्तादृशो दैवदुर्विपाकस्ते संवृत्तः[6] । कष्ट[7]मनरण्यवंशजन्मनः क्षत्रियशिशोरनात्मवेदिता[8] ।

सुन्दासुरेन्द्रसुतशोणितसीधुपान-
दुर्मत्तमार्गणनिरर्गलवीरशब्दः[9] ।
द्रोहं चकार दशकण्ठकुटुम्बकेऽपि
सोऽयं बटुः कुशिकनन्दनयज्ञबन्धुः ॥ ३६ ॥

भवतु । द्रष्टव्यमस्य भुजाशौण्डीर्यम्[10][11] । (उपसृत्य ।) अपि सुखिनो यूयं जनकमिश्राः ।

---

स्तयोः । 'पुण्यं शोभने त्रिषु' इति मेदिनीकरः । 'व्यञ्जनं तेमने चिह्ने' इति च । उदग्रस्तेजस्वी । **पार्श्वे इत्यादि ।** इदं कुमारद्वयं रूपाभ्यामाकाराभ्यां प्रदीप्यते प्रकाश्यते । यथा विधिमन्त्राभ्यां रूपाभ्यां ग्रन्थावृत्तिभ्यामथर्वा वेदभेदः । प्रकाश्यते तथेत्यर्थः । विधिमन्त्रावथर्वणो रूपे । 'ग्रन्थावृत्तौ भवेद्रूपमाकारश्लेषयोरपि' इति विश्वः । अथर्ववेदोऽभिचारप्रतिपादकः । कौशिकऋषिमित्यत्र 'ऋत्यकः' इति प्रकृतिवद्भावः । अनुप्लवमानोऽनुगच्छन् । सुकेतुनन्दिनि सुकेतुसुते । संबोधनम् । मनुष्यडिम्भान्मनुष्यशिशोः । 'डिम्भो बालिशबालयोः' इति विश्वः । दुर्विपाको दुष्टो विपाकः । कर्मणो विसदृक्फलमित्यर्थः । 'विपाकः पटले खेदे कर्मणो विसदृक्फले' इति मेदिनीकरः । अनरण्यो राजा दशरथस्य सपिण्डः । स च रावणेन मारित इति तदपकर्षसूचनम् । **सुन्दासुरेन्द्रेति ।** सोऽयं बटुर्ब्रह्मचारी रामो दशकण्ठकुटुम्बकेऽपि रावणस्य प्रशस्तबन्धुवर्गेऽपि द्रोहं मारणं चकार । सुन्दनामासुरेन्द्रः स च ताडकापतिस्तस्य सुतः सुबाहुस्तस्य शोणितमेव रुधिरमेव सीधुर्मद्यं तस्य पानेन दुर्मत्ता अतिमत्ता ये मार्गणा बाणास्तैर्निरर्गलोऽप्रतिरुद्धो वीररूपः शब्दो यस्य स तथा । 'मैरेयमासवः सीधुः' इत्यमरः । 'कलम्बमार्गणशराः' इति च । शौण्डीर्यं सुभटत्वम् । मिश्रा मुख्याः । स्वागतं सुष्ठु आगमनं

---

१. 'चेदम्'. २. 'आः' इति पुस्तकान्तरे नास्ति. ३. 'एषः'. ४. 'मुनिम्'; 'ऋषिम्' इति पुस्तकान्तरे नास्ति. ५. 'मिथिलायाम्'. ६. 'हा' इति पुस्तकान्तरे नास्ति. ७. 'विपाकोऽयं ते वृत्तः'. ८. 'अनरण्यजन्मनः'. ९. 'बटोः'. १०. 'गर्वः'. ११. 'भुजाशौटीर्यम्'.

**जनकः**—स्वागतं पौलस्त्यपुरोहितस्य । इत आस्यताम् ।

(शौष्कलस्तथा करोति ।)

**जनकः**—अपि कुशलं ते[3] राज्ञो रावणस्य । अथवा ।

विपदां प्रतिकर्तारो यस्योपायैरथर्वभिः ।

त्वादृशाः सन्ति किं तस्य कल्याणमनुयुज्यते ॥ ३७ ॥

**शौष्कलः**—(विहस्य ।) श्रोत्रिय[4] सीरध्वज, प्रत्यकरिष्यामैव[5] वयं यदि स्वभुजमण्डलीमत्तवारणावलीवलयितोरः[6]प्रसादसुस्थितचतुर्दशलोक[7]लक्ष्मीमहान्तःपुरे लङ्कापतौ[8] किमपि प्रतिकार्यमभविष्यत्[9] । पश्य ।

यच्चेष्टाः समनीक[10]सीमनि परित्रस्तः पराञ्चन्नपि

प्रत्यक्षीकुरुते सहस्रनयनः पृष्ठोद्भवैरक्षिभिः ।

कुशलं वा । अपिः प्रश्ने । सोपहासं स्तुतिमाह—**विपदामिति** । यस्य रावणस्य त्वादृशा अथर्वभिः शान्तिकपौष्टिकमन्त्रैरुपायैर्हेतुभिर्विपदां विपत्तीनां प्रतिकर्तारः प्रतिकारकाः । स्फोटयितार इति यावत् । तस्य रावणस्य कल्याणं किमनुयुज्यते किं पृच्छयते । अपि तु कल्याणमेव तस्येत्यर्थः । प्रतिकर्तार इति तृनि तृचि वा रूपम् । तेन विपदामिति कर्मणि षष्ठी । पक्षे विपदां प्रति विपत्तिं प्रति त्वादृशाः पाप्मानो यस्य कर्तारो विपत्कारकास्तस्य किं कल्याणमनुयुज्यते । अपि तु कदापि न तस्य कल्याणमित्यर्थः । अत्र पक्षे प्रतिर्वीप्सायाम् । विपदाशब्दो भिदादावादन्तः । यद्वा 'टापं चापि हलन्तानाम्' इति भागुरिमतेन टाप् । 'यथा वाचा निशा दिशा' इत्यादिस्त्वेकदेशानुवादः । जनकवाक्यमनवगम्यैवाह—**श्रोत्रियेति** । प्रत्याकरिष्याम अभविष्यदित्यनयोः क्रियातिपत्तौ लृङ् । 'नित्यं ङितः' इति मसः सकारलोपः । यदि प्रतिकार्यं प्रतिकरणीयमभविष्यद्भवेत्तदा प्रत्यकरिष्यामैव वयम् । प्रतिकार्यमेव नास्तीति भावः । लङ्कापतौ कीदृशे । स्वभुजमण्डलमेव मत्तवारणाः समददन्तिनस्तेषामावली समूहस्तेन वलयितो वेष्टितो य उरःप्रासादो हृदयधवलगृहं तत्र सुस्थिता सुखोपविष्टा या चतुर्दशलोकानां लक्ष्मीस्तस्या महान्तःपुरे कोष्ठागारे । यद्वा चतुर्दशलोकलक्ष्मीरेव महान्तःपुरं महिषी यस्य तस्मिन् । अन्तःपुरशब्देन तत्रस्था स्त्री लक्षणया भण्यते । भूः, भुवः, स्वः, महः, जनः, तपः, सत्यम्, वायुस्कन्धाश्च सप्तेति चतुर्दशभुवनानीति पुराणम् । 'मत्तवारण आख्यातो धीरैः समददन्तिनि । क्लीबं प्रासादवीथीनां कुन्दवृक्षवृतावपि ॥' इति मेदिनीकरः । 'स्त्र्यगारं भूभुजामन्तःपुरम्' इत्यमरः । तत्किमिन्द्रादितोऽपि न तस्य प्रतिकर्तव्यमस्तीत्यत आह—**यच्चेष्टा इति** । यस्य रावणस्य चेष्टाः पराक्रमव्यापारान्समनी-

१. 'पौलस्त्यपुरोहित' पुस्तकान्तरे एतावदेव. २. 'कश्चित्'. ३. 'राज्ञस्ते'. ४. 'महाक्षत्रियश्रोत्रिय'; 'महाक्षत्रिय'. ५. 'प्रत्यकरिष्यामः'. ६. 'वारणवलयितोरः–'. ७. 'भुवन'. ८. 'लङ्काधिपतौ'. ९. 'प्रतिकर्तव्यम्'. १०. 'स समीक–'.

चक्रे वर्त्म च नागलोकजयिनीं यात्रामिव प्रस्तुव-
न्यः कैलासमुदस्य कीदृशमपादानं[1] तु तस्यापदाम् ॥ ३८ ॥

**लक्ष्मणः**—(सामर्षं जनान्तिकम् ।) आर्य, कथमसौ[2] सहस्रार्जुनवालिभ्या-मवलीढशौर्यसारो दुरात्मा रावणः प्रस्तूयते ।

**रामः**—वत्स, न वक्तव्यमिदम्[3] । महान्तो हि[4] तादृशाः । किं च ।

ख्यातां नाम कपीन्द्रहैहयपती तस्यावगाढान्तर-
स्थामानौ दशकंधरस्य महती स्कन्धप्रतिष्ठा पुनः ।
सद्यःपाटितकण्ठकीकसकणाकीर्णा यदंसस्थलीः
स्वेनेभाजिनपल्लवेन मुदितः प्रास्फोटयद्धूर्जटिः ॥ ३९ ॥

---

कसीमनि सङ्ग्रामसीमायां परित्रस्तः सभयः सन्पराञ्चन्नपि पराङ्मुखोऽपि । अपिर्विरोधाभासाय । सहस्रनयन इन्द्रः प्रत्यक्षीकुरुते पश्यति । ननु पराङ्मुखः कथं पश्चादवस्थितं प्रत्यक्षीकरोतीत्यत आह—पृष्ठोद्भवैरक्षिभिर्नेत्रैः । सहस्रनयनत्वादेव पृष्ठेऽपि नेत्रसद्भावः । यश्च रावणो नागलोकजयिनीं यात्रामिव प्रस्तुवन्कुर्वन्कैलासं पर्वतविशेषमुदस्योत्पाट्य वर्त्म मार्गं चक्रे, तस्य रावणस्यापदां विपत्तीनां कीदृशमपादानं प्रभवो यस्मादापद्भविष्यति । अपि तु नास्त्येवेत्यर्थः । 'अनीकोऽस्त्री रणे सैन्ये' इति विश्वः । 'आखण्डलः सहस्राक्षः' इत्यमरः । **सामर्षमिति** । रावणशौर्यश्रवणादिति भावः । अवलीढशौर्यसारो ज्ञातशौर्यधनो गृहीतशौर्यधनो वा । 'सारो बले स्थिरांशे च मज्ज्ञि पुंसि जले धने' इति मेदिनीकरः । नन्ववलीढशौर्यसारत्वात्कुतो महत्त्वमित्यत आह—**ख्यातामिति** । तस्य रावणस्यावगाढान्तरस्थामानौ ज्ञातान्तर्बलौ कपीन्द्रहैहयपती वालिसहस्रार्जुनौ ख्यातां नाम । ताभ्यां जितो रावण इति न किंचिदेतत् । तथापि तस्य रावणस्य पुनर्महती स्कन्धप्रतिष्ठा कायप्रतिपत्तिः । स्कन्धः कायः, रूपादिपञ्चकं वा, अंसो वा । कुत इत्यत आह—यस्य कायस्य, रावणस्य वा, अंसस्थलीः स्कन्धप्रदेशान्धूर्जटिः शिवः स्वेनात्मनैवेभाजिनपल्लवेन हस्तिचर्माञ्चलेन मुदितो हर्षितः सन्प्रास्फोटयद्वीजयति स्म, संमार्जितवान्वा । कीदृशाः । सद्यस्तत्क्षणादेव पाटिता ये कण्ठास्तासां कीकसकणाभिरस्थिकणाभिः कीर्णा व्याप्ताः । 'रूपादिपञ्चके स्कन्धः कायेंऽसे भूपतावपि' इति विश्वः । 'कीकसं कुल्यमस्थि च' इत्यमरः । नन्वेतावता शिवभक्तत्वं दर्शितम्, न

---

१. 'उपादानम्'. २. 'अपि कथमसौ बलिसहस्रभुजार्जुनाभ्याम्'. ३. 'एवम्'. ४. 'अपि'.

अपि च ।

> मघोनस्तद्घोरं कुलिशमलसीकृत्य समरे
> भुनक्ति स्वाराज्यं त्रिभुवनभटोऽयं दशमुखः ।
> श्रियो नानास्थानभ्रमणरमणीयां चपलता-
> मवच्छिद्य स्वस्मिन्नपि भुजवने पूरयति यः ॥ ४० ॥

जनकः[1]—(शौष्कलं प्रति ।) ब्रह्मन्, सत्यमीदृशो[2] राक्षसराजः ।

शौष्कलः—राजर्षे जनक,

> संतुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डली-
> क्रीडा[3]कृत्तपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम् ।
> याञ्चादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
> त्वं वृण्वित्यभितो मुखानि स दशग्रीवः कथं वर्ण्यताम्[4] ॥४१॥

---

तु शूरत्वमित्यत आह—**अपि चेत्यादि** । अयं त्रिभुवनभटस्त्रिलोकीवीरो दशमुखो रावणः स्वाराज्यं स्वर्गं भुनक्ति पालयति । किं कृत्वा । मघोन इन्द्रस्य तत्प्रसिद्धं घोरं भयानकं कुलिशं वज्रं समरे सङ्ग्रामेऽलसीकृत्य निष्क्रियं कृत्वा । यश्च रावणः श्रियो लक्ष्म्या नानास्थानभ्रमणेन रमणीयां चपलतां चलत्वमवच्छिद्यान्यतो व्यावर्त्य स्वस्मिन्स्वकीये भुजवने पूरयति कुरुते । अपिः संभावनायाम् । तदीयभुजवन एवैकभुजादपरभुजगमनमित्यनेन प्रकारेण श्रियश्चाञ्चल्यम् । यद्वा तदीयभुजास्वेव प्रत्येकं वीरश्रीः स्थितेति वहुस्थानस्थिततया चाञ्चल्यमिति भावः । 'घोरो भीमे हरेऽपि च' इति विश्वः । 'भटः स्यात्पुंसि वीरे च' इति च । आगमनप्रयोजनं पूरयितुं भूमिमारचयति—**संतुष्ट इति** । तिसृणां पुरामपि रिपौ त्रिपुरारौ महादेवे संतुष्टे सति । राक्षसरिपोरपि राक्षसे वरदानेन रावणस्यातिभक्तिः प्रकाशितेत्यपेः स्वरसः । कण्डूला कण्डूयुक्ता या दोर्मण्डली वाहुसमूहस्तस्याः क्रीडया कृत्तानि च्छिन्नानि पुनरनन्तरं प्ररूढानि जातानि शिरांसि मस्तकानि यस्य तस्य । अनन्तरं च वरं लिप्सोर्लब्धुमिच्छोर्यस्य रावणस्य मुखानि याञ्चादैन्ये पराञ्चि पराङ्मुखानि । अत एवाभितः सर्वतो मिथोऽन्योन्यं त्वं वृणु त्वं वृण्विति कृत्वा कलहायन्ते कलहं कुर्वन्ति । स दशग्रीवः कथं वर्ण्यताम् । अपि तु कथमपि वर्णयितुं न शक्यत इति । कण्डूलेत्यत्र 'सिध्मादिश्च' इति लच् । तिसृणामित्यत्र 'न तिसृचतसृ' इति दीर्घत्वनिषेधः । कलहायन्त इत्यत्र 'शब्दवैरकलह-' इत्यादिना क्यङ् । 'कृत्तं तु वेष्टिते छिन्ने' इति विश्वः । प्रयोजनमाह—**सोऽपीति** । यः

---

१. 'शतानन्दः'. २. 'ईदृशोऽयम्'. ३. 'लीलाद्धन–'. ४. 'कथ्यताम्'.

सोऽपि ।

कन्यामयोनिजन्मानं वरीतुं प्रजिघाय माम् ।
पुरोधसा गौतमेन गुप्तस्य भवतो गृहान् ॥ ४२ ॥

**विश्वामित्रः**—सखे सीरध्वज, पश्य[1] पिनाकदर्शनोल्लासिकाविसंस्थुलचित्तवृत्तिरिव वत्सो रामभद्रः ।

**जनकः**—(विहस्य ।)

किमेतदेवं[2] भगवन्नभिधीये पुनस्तराम् ।
इक्ष्वाकवो विदेहाश्च परवन्तस्त्वया वयम् ॥ ४३ ॥

**शौष्कलः**—भोः सीरध्वज, किमिदमस्माकमाकाशवचनम्[3], उत दुष्परिच्छेद्य एवायमर्थः । यदुत्तरमपि न प्रतिपद्यसे । पश्य[4] ।

दातव्येयमवश्यमेव दुहिता कस्मैचिदेनामसौ
दोर्लीलामसृणीकृतत्रिभुवनो[5] लङ्कापतिर्[6]याचते ।
तत्किं मूढवदीक्षसे ननु कथागोष्ठीषु[7] नः शासति
त्वद्वृत्तानि परोरजांसि मुनयः प्राच्या मरीच्यादयः ॥ ४४ ॥

---

प्रार्थनायामेतादृशः पराङ्मुखः सोऽपीत्यर्थः । वरीतुं प्रार्थयितुम् । 'वृतो वा' इतीटि दीर्घत्वम् । प्रजिघाय प्रहितवान् । 'हि गतौ' । लिट् । स्वकार्यसाधनाय शतानन्दं स्तुवन्नाह—पुरोधसेति । गौतमेन शतानन्देन गुप्तस्य रक्षितस्य । उल्लासितोत्कण्ठा तया विसंस्थुला व्याकुला चित्तवृत्तिर्यस्य तादृश इव । परवन्तः पराधीनाः । तथा च त्वदधीना एव वयमित्यर्थः । आकाशवचनमाकाशं लक्षीकृत्य वचनमित्यर्थः । न प्रतिपद्यसे न ददासि । नेदं वचनं दुष्परिच्छेद्यमिति पर्यवसितमाह—**दातव्येति** । इयं दुहिता सीता कस्मैचिदवश्यमेव दातव्या देया । एनां च लङ्कापतिर्याचते प्रार्थयते यतोऽतो रावणाय देयेत्याशयः । सीताप्रदानौपयिकरावणस्तुतिमाह—कीदृशः । दोर्लीलया भुजक्रीडया मसृणीकृतं श्लक्ष्णीकृतं त्रिभुवनं येन तादृशः । यतस्तादृशोऽपि लङ्कापतिर्याचतेऽतो मूढवत्किमीक्षसे पश्यसि । ननु मूढवदिति वतिप्रत्ययेन सादृश्यमभिहितं तस्य च भेदगर्भत्वेनास्माकममूढत्वं प्रतिपादितं तच्च कुतो ज्ञातमित्यत आह—ननु हेतौ । नोऽस्माकं कथागोष्ठीषु प्राच्याः पुरातना मरीच्यादयो मुनयः परोरजांसि रजसः पराणि । सात्त्विकानीति यावत् । त्वद्वृत्तानि त्वदीयचरितानि शासति कथयन्ति । यद्वा नोऽस्मांस्त्वद्वृत्तानि शासति । शासेर्द्विकर्मकत्वात् । तथा च तादृशस्य तव रावणेतराय सीता दातुं न युक्तेति

---

१. 'पश्य पश्य'. २. 'एवम्'. ३. 'किमस्माकम्'. ४. 'पश्य पश्य'. ५. 'दोःक्रीडा;' 'दोःक्रीडामशकीकृत–'. ६. 'लङ्काधिपः'. ७. 'तथा'.

**शतानन्दः**—ब्रह्मन्, चिराय दत्तमेवोत्तरमस्माभिः ।

**शौष्कलः**—हन्त[1], राजपुत्रीसमर्पणादन्यत्कीदृशं तत् ।

**शतानन्दः**—शृणु[2] ।

शांभवं चापमारोप्य योऽस्मानानन्दयिष्यति ।
पूर्णपात्रमियं तस्मै मैथिली कल्पयिष्यते[3] ॥ ४५ ॥

**शौष्कलः**—(विहस्य[4] ।) शान्तम्[5] । अहह युष्माकमप्यमून्यक्षराणि[6] ।

तेनाङ्गुलीशतनिघृष्टकुबेरशैल-
कण्ठोक्तदोःकुलिशकन्दलविक्रमेण ।
माहेश्वरेण महता दशकंधरेण
कर्मेदृशं[7] कथमनार्यमधिक्रियेत ॥ ४६ ॥

**शतानन्दः**—(विहस्य ।) ब्रह्मन्,

अयं महाक्षत्रियगोत्रजन्मा दृढप्रतिज्ञो जनकाधिराजः ।
न चापमारोपयिता दशास्यस्तथापि जानासि यदुत्तरं नः ॥ ४७ ॥

---

भावः । **दत्तमेवोत्तरमिति** । ईशधनुर्भङ्गरूपः पण एवोत्तरमिति भावः । शतानन्दवचनाभिप्रायमनभिज्ञायाह—**राजपुत्रीति** । राजपुत्री सीता । समर्पणं दानम् । विवाह इति यावत् । तदुत्तरम् । उत्तरमाह—**शांभवमिति** । पूर्णपात्रं संतोषदानम् । 'हर्षादुत्सवकाले यदलंकाराम्बरादिकम् । आकृष्य दीयते पूर्णपात्रं पूर्णानकं च तत् ॥' इति हारावली । तस्मै इति 'क्लृपि संपद्यमाने च' इति चतुर्थी । **युष्माकमपीति** । रावणं प्रति हरचापारोपणरूपाणीत्यर्थः । रावणस्य हरधनुःसमाकर्षणेऽशक्तिमवगम्य तदाकर्षणे व्याजमुद्भावयति—**तेनाङ्गुलीति** । विंशतिबाहुत्वादङ्गुलिशतेन निघृष्टो यः कुबेरशैलः कैलासस्तेन कण्ठेनोक्तः कथितो दोःकुलिशकन्दलस्य बाहुवज्रप्रकाण्डस्य विक्रमः पराक्रमो यस्य तादृशेन । महता माहेश्वरेणातिमहेश्वरभक्तेन दशकंधरेणेदृशमनार्यमनुचितं कर्म सेव्यस्य धनुःसमाकर्षणरूपं कथमधिक्रियेत । तथा च गुरोरीश्वरस्य चापारोपणं रावणस्य न युक्तमिति भावः । सोपहासमाह—**अयमिति** । आरोपयिता

---

१. 'हुम्'. २. 'शृणु' इति पुस्तकान्तरे नास्ति. ३. 'कल्पयिष्यति'. ४. 'विहस्य' इति पुस्तकान्तरे नास्ति. ५. 'शान्तं शान्तम्'. ६. 'अपि' इति पुस्तकान्तरे नास्ति. ७. 'कर्मेदमीदृशमनार्य–'.

**शौष्कलः**—(सहासम् ।)

अङ्गिराश्च पुलस्त्यश्च प्रसवौ परमेष्ठिनः ।
पौलस्त्ये ज्ञातिधर्मोऽयं तत्किमाङ्गिरसस्य ते ॥ ४८ ॥

(सामर्षम् ।)

माहेश्वरो दशग्रीवः क्षुद्राश्चान्ये महीभुजः ।
पिनाकारोपणं शुल्कं हा सीते किं भविष्यसि ॥ ४९ ॥

**शतानन्दः**—(सरोषव्यथम् ।) ब्रह्मन्, एवमनेन धनुषा किमपि विनयाधिकारिकमध्याप्यते । यदद्य परममाहेश्वरस्ते रावणोऽपि संवृत्तः ।

शंभोराधारमचलमुत्क्षेप्तुं भुजकौतुकी ।
माहेश्वरो धनुः कष्टमहो ते दशकंधरः ॥ ५० ॥

(शौष्कलवर्जमन्ये स्मयन्ते ।)

**शतानन्दः**—(सरोषावहित्थम् ।) रामभद्र,

तदेतदारोपय चापमीशप्रकोष्ठभस्मप्रतिरूषितज्यम् ।
शौर्योष्मभाजां भजतां मुखानि स्वबाहुमौर्वीकिणकालिकैव ॥ ५१ ॥

---

आरोपयिष्यति । लुट् । प्रस्तुतास्फूर्तावर्थान्तरमाह—**अङ्गिराश्चेति** । प्रसवः पुत्रः । पौलस्त्ये पुलस्त्यनप्तरि रावणे । **माहेश्वर इति** । दशग्रीवो रावणो माहेश्वरो महेश्वरभक्तो यतोऽतो न धनुरारोपयिष्यतीति भावः । ननु नारोपयतु नाम तत्किं न सन्त्येवान्ये राजान इत्यत आह—क्षुद्राश्चेति । अथ बलशून्या अपि त एव वरणीयाः, न तु रावण इत्यत आह—पिनाकस्य शिवधनुष आरोपणं शुल्कं पणः । तथा च न तदारोपणयोग्या इति भावः । हा कष्टम् । हे सीते, त्वं किं भविष्यसि । किं वस्तु त्वं भविष्यसीत्यर्थः । यद्वा किंभविष्यसि कुत्सिता भविष्यसि । कुत्सितप्रदानादिति भावः । यद्वाविवाहितैव भविष्यसि । 'किं भविष्यति' इति पाठे सीते किं भविता । तवेति शेषः । विनयाधिकारिकं विनयाधिकारिकसंज्ञमधिकरणं चाणक्ये । तत्र विनय उपदिश्यते । विनयाधिकारयोगात्तत्वम् । 'अत इनिठनौ' । कष्टमाकर्षितुम् । स्मयन्ते ईषद्धसन्ति । शौष्कलक्रोधादाह—**तदेतदिति** । तस्माद्धेतोरेतच्चापं धनुरारोपयेति योज्यम् । कीदृशम् । ईशस्य शिवस्य प्रकोष्ठभस्मना प्रतिरूषितज्यं मृदितगुणम् । कफोणेरधो मणिबन्धान्तं यावत्प्रकोष्ठः । 'स्यात्कफोणिस्तु कूर्परः । तस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य

---

१. 'जाति–'. २. 'सामर्षमाकाशे कर्णं दत्त्वा सहासम्'. ३. 'सरोषावहित्थम्'. ४. 'किमनेन'. ५. 'कारिकां कारिकामध्या–'. ६. 'ते रावणोऽपि परममाहेश्वर'. ७. 'इतरे'. ८. 'रामभद्र रामभद्र'. ९. 'ऐशं—भूषितज्यम्'.

**शौष्कलः**—(सक्रोधम् ।) अरे रे, शतानन्द, किमुद्भ्रान्तोऽसि । यदेवमस्मदग्रे पौलस्त्यं महाराजमधिक्षिपसि । कथमयं ते माणिक्यपरिहाणेन गैरिकपरिग्रहः । यदेवं दशग्रीवमवमन्यमानस्य मनुष्यपोतेऽनुरागः । यदि वा तत्रभवन्तं गौतममपहाय डुलिचक्षुषि सहस्राक्षे भवतो मातुरहल्यायाः ।

**शतानन्दः**—(सरोषहासम् ।) किमात्थ रे, किमात्थ अस्मदग्र इति ।

**विश्वामित्रः**—(सप्रणयरोषमिव ।) वत्स गौतम, विरम, विरम शुष्ककलहात् । अतिथिरयमस्माकमुपाध्यायो दशकण्ठस्य । (व्यथमानौ रामलक्ष्मणौ च दृष्ट्वा विहस्य ।) वत्स रामभद्र, धनुर्गृहोपसर्पणमभ्यनुजानाति ते जनकान्वयपुरोधाः ।

**रामः**—यदादिशन्ति गुरवः । (इति सविनयलज्जाकौतुकं परिक्रम्य लक्ष्मणेन सह निष्क्रान्तः ।)

**शौष्कलः**—राजर्षे सीरध्वज, धन्योऽसि । पुरा किल परमेश्वरपरिचर्यावदाने निकृत्तेषु नवमूर्धसु

वरं तादृक्कर्माद्भुतसदृशमप्रेक्ष्य किमपि<br>
प्ररोहद्वैलक्ष्यं पुरविजयिनो येन ददृशे ।

---

चाप्यधः ॥' इत्यमरः । तेन हरचापारोपणेन स्वबाहौ या मौर्वीकिणकालिका प्रत्यञ्चिकानृतमांसश्यामिका सैव शौर्योष्मभाजां नृपतीनां मुखानि कर्मभूतानि भजताम् । अन्यवीरमुखे श्यामिका भवत्विति भावः । ऊष्मा गर्वः । उद्भ्रान्तो दिङ्मोहग्रस्तः माणिक्यपरिहाणेन रत्नविशेषत्यागेन । 'ओहाक् त्यागे' । 'ओदितश्च' इति निष्ठातकारस्य नत्वम् । गैरिकं मनःशिलादि । पोतो बालकः । डुलिः कच्छपी । 'कछवी' इति ख्याता । डुलिरिव चक्षूंषि यस्य तस्मिन्सहस्राक्षे इन्द्रे । तस्य हि चक्षुः पिङ्गलं किल । तथा च श्रुतिः—'अक्षीणि ते इन्द्र पिङ्गलानि' इति । 'कमठी डुलिः' इत्यमरः । अहल्याया अनुराग इत्यनुषज्यते । अन्वयो वंशः । सविनयमिति कौशिकादेशश्रवणात् । सलज्जमिति सीताविवाहस्मरणात् । सकौतुकमिति धनुर्ग्रहण इति भावः । धन्यः पुण्यवान् । 'सुकृती पुण्यवान्धन्यः' इत्यमरः । अवदानं शुद्धकर्म । निकृत्तं छिन्नम् । **वरमित्यादि** । तदेव दशमं रावणमुखं त्वयि त्वद्विषयेऽर्थीभवति प्रार्थकं भवति । अभूततद्भावादिना च्विः ।

---

१. 'परिहारेण'. २. 'दशाननमवमत्य'; 'दशग्रीवमप्यवमन्यमानस्य ते'. ३.'यदिव'; 'अथवा'. ४. 'तव'. ५. मातुरपि कथमहल्यायाः. ६. 'सरोषाहंकारम्'. ७. 'सप्रणयमिव'. ८. 'दशकंधरस्य'. ९. 'धनुर्ग्रहोप–'.

तदुन्मार्ष्टुं येन त्रिभुवनमपि प्रार्थितमिदं
तदेव त्वय्यर्थीभवति दशमं रावणमुखम् ॥ ५२ ॥

**शतानन्दः**—(उत्थाय । नेपथ्यावलोकितकेन सहर्षाद्भुतम् ।) पश्यन्तु भवन्तः ।

यस्मिन्नेकधनुष्मतो भगवतः खट्वाङ्गपाणेरसा-
वाकृष्टो गुणतां गतोऽप्यहिपतिः कर्णावतंसायते ।
उन्मुक्तः पुनरेव भूषणपदं याति प्रकोष्ठान्तरे

(जनक औत्सुक्यं नाटयति ।)

**शतानन्द**—

काकुत्स्थेन तदेव भार्गवगुरोः कोदण्डमाकृष्यते ॥ ५३ ॥

(नेपथ्ये ।)

**लक्ष्मणः**—

रुन्धन्नष्ट विधेः श्रुतीर्मुखरयन्नष्टौ दिशः क्रोडय-
न्मूर्तीरष्ट महेश्वरस्य दलयन्नष्टौ कुलक्ष्माभृतः ।

---

'अस्य च्वौ' इतीत्त्वम् । दशममित्युपचारात् । नवानामभावात् । तत्कतरदित्याह—येन मुखेन तादृक्कर्माद्भुतसदृशं मस्तककर्तनोचितं वरं किमपि किंचिदप्यप्रेक्ष्य प्ररोहदुत्पद्यमानं वैलक्ष्यं पुरविजयिनो महादेवस्य ददृशे दृष्टम् । कर्मणि लिट् । ततस्तद्वैलक्ष्यमुन्मार्ष्टुं स्फोटयितुं त्रिभुवनमपीदं प्रार्थितम् । तथा च तादृगर्थी भाग्येन लभ्यत इति भावः । 'रावणशिरः' इति क्वचित्पाठः । 'रावणमुखम्' इति युक्तः पाठः । प्रार्थनाया मुखसाध्यत्वात् । **यस्मिन्निति** । यस्मिन्धनुषि गुणतां गतोऽप्यहिपतिर्वासुकिराकृष्टः सन्खट्वाङ्गपाणेर्महेशस्य कर्णावतंसायते कर्णालंकारवदाचरति । उन्मुक्तस्त्यक्तः सन्प्रकोष्ठान्तरे, अर्थात्खट्वाङ्गपाणेरेव, पुनरेव भूषणपदमलंकारस्थानं याति गच्छति । करस्योपरि मणिबन्धादारभ्य कफोणेरधः प्रकोष्ठः । तदेव कोदण्डं धनुर्भार्गवगुरोः परशुरामगुरोर्हरस्य काकुत्स्थेन रामेणाकृष्यत इति संबन्धः । नेपथ्ये लक्ष्मणवचनम्—**रुन्धन्निति** । अयमार्यस्य रामस्य दोर्बलेन भुजबलेन दलन्त्रुट्यत्कोदण्डं धनुस्तस्य कोलाहलः शब्द उन्मीलति प्रसरति । किं कुर्वन् । विधेर्ब्रह्मणोऽष्ट श्रुतीः कर्णान्रुन्धन्नवरोधयन् । चतुर्मुखत्वादष्टश्रुतित्वम् । अष्टौ दिशः प्राच्याद्या मुखरयन्सशब्दाः कुर्वन् । शिवस्याष्ट मूर्तीर्वारिवह्न्यादीः क्रोडयन्व्याप्नुवन् । धातोरनेकार्थत्वात् । 'वारि वह्निर्धरा वायुराकाशं चन्द्रमा अपि । यजमानो रविश्चेति मूर्तयोऽष्टौ मता हरेः ॥' इति पुराणम् । अष्टौ कुलक्ष्माभृतः

---

१. 'नेपथ्याभिमुखमवलोकयन्'. २. 'पश्यन्तु पश्यन्तु'. ३. 'उन्मुक्तश्च पुरेव'.

तान्यक्ष्णा बधिराणि पन्नगकुलान्यष्टौ च संपादय-
न्नुन्मीलत्ययमार्यदोर्बलदलत्कोदण्डकोलाहलः ॥ ५४ ॥

**जनकः**—(सहर्षविषादाद्भुतम् ।) कथं भग्नमपि ।

**शतानन्दः**—

वैदेहीकरबन्धमङ्गलयजुःसूक्तं द्विजानां मुखे
नारीणां च कपोलकन्दलतले श्रेयानुलूलुध्वनिः ।
पेष्टुं च द्विषतामुपश्रुतिशतं मध्येनभो जृम्भते
रामक्षुण्णमहोक्षलाञ्छनधनुर्दम्भोलिजन्मा रवः ॥ ५५ ॥

**शौष्कलः**—(सविषादाद्भुतमात्मगतम् ।) अहो दुरात्मनः क्षत्रियस्फुलि-ङ्गस्य सर्वकर्मीणमूष्मायितम् ।

**जनकः**—(सहर्षं पादयोर्निपत्य ।) भगवन्कौशिकनन्दन,

इयमात्मगुणेनैव क्रीता रामेण मैथिली ।
स्वगृहव्यवहारस्तु लक्ष्मणायोर्मिलास्तु नः ॥ ५६ ॥

**विश्वामित्रः**—(सस्मितम् ।) सखे सीरध्वज, यदभिरुचितं भवते ।

---

कुलपर्वतान्दलयन्खण्डयन् । तानि प्रसिद्धान्यष्टौ पन्नगकुलानि चाक्ष्णा चक्षुषा बधिराणि शब्दाग्राहकाणि संपादयन्कुर्वन् । तेषां चक्षुःश्रवस्त्वात् । अक्ष्णेति 'येनाङ्गविकारः' इति तृतीया । कथं भग्नमपीत्याकर्षणापेक्षयापिः । **वैदेहीति** । रामेण क्षुण्णो भग्नो यो महोक्षलाञ्छनस्य महेशस्य धनुर्दम्भोलिर्धनुरेव वज्रं तज्जन्मा रवः शब्दो द्विषतां शत्रूणां पेष्टुं शत्रून्हन्तुं मध्येनभो गगनस्य मध्ये जृम्भते । प्रसरतीत्यर्थः । उपश्रुतिशतं कर्णशतसमीपे । सामीप्येऽव्ययीभावः । धनुर्भङ्गादेव द्विजानां ब्राह्मणानां मुखे वैदेह्याः सीतायाः करबन्धे विवाहे मङ्गलार्थं यजुर्वेदस्थं सूक्तम् । यद्वा मङ्गलनामकं यजुःसूक्तम् । जृम्भत इति सर्वत्रान्वयः । नारीणां स्त्रीणां च कपोलकन्दलतले श्रेयानुलूलुध्वनिः । 'उलउली' इति प्रसिद्धः । जृम्भत इत्यन्वयः । दक्षिणदेशे विवाहाद्यवसरे स्त्रीभिरुलूलुध्वनिः क्रियत इत्याचारः । यद्वा द्वयमपि रवविशेषणमेव रूपकम् । द्विषतामित्यत्र 'जासिनि-प्रहण–' इति कर्मणि षष्ठी । मध्येनभ इति 'पारे मध्ये षष्ठ्या वा' इति समासः । सर्व-कर्मीणं सर्वकर्मसाधु । ऊष्मायितं तेजःशालित्वम् । 'बाष्पोष्मभ्यामुद्वमने' इति क्यङ् । स्वगृहस्य गृहस्थस्य व्यवहारः कन्यादानरूपः नोऽस्माकम् । भवत इति 'रुच्यर्थानां

---

१. 'ललत्'. २. 'सहर्षाद्भुतम्'. ३. 'कन्दर–'. ४. 'सविषादमात्मगतम्'. ५. 'कौ-शिकवंशवर्धन'.

**शतानन्दः**—([1]जनककर्णे एवमेवं कथयित्वा ।) भगवन्विश्वामित्र, ममापि चन्द्रशेखरशरासनारोपणप्रथमप्रियवादिनः पारितोषकं धारयसि ।

**विश्वामित्रः**—(विहस्य ।) वत्स, दीयते । किमभिप्रैषि ।

**शतानन्दः**—कुशध्वजदुहितृभ्यां माण्डवीश्रुतकीर्तिभ्यां भरतशत्रुघ्नावभ्यर्थये ।

**विश्वामित्रः**—[2]एवमस्तु । (शतानन्दं हस्ते गृहीत्वा सस्मितम् ।) वत्स, सर्वमस्माभिर्विधातव्यम् । आगमयस्व तावद्दशरथम् ।

**जनकः**—तर्हि प्रहीयतामेष [3]एव भगवानाङ्गिरसः प्रियसुहृदमुत्तरकोशलेश्वरमानेतुम् ।

**विश्वामित्रः**—एवमस्तु ।

**शतानन्दः**—([4]उत्थाय ।) भगवन्, किमन्यदधिकमस्ति वाचिकम् ।

**विश्वामित्रः**—वत्स, निसृष्टार्थोऽसि । गम्यताम् ।

(इति शतानन्दो निष्क्रान्तः ।)

**विश्वामित्रः**—(हर्षं नाटयन्नात्मगतम् ।)

दोर्लीलादलितेन्दुशेखरधनुर्विख्यातविक्रान्तिना
काकुत्स्थेन कृतो विदेहनृपतिः पूर्णप्रतिज्ञाभरः ।

---

प्रीयमाणः' इति संप्रदानता । कर्णे एवमेवेति । कुशध्वजदुहितरावपि भरतशत्रुघ्नाभ्यां दीयतामिति रहः कथनीयम् । पारितोषकं परितोषभवं दानम् । अध्यात्मादित्वाट्ठञ् । ममेति 'धारेरुत्तमर्णः' इति संप्रदानता न भवति । उत्तमर्णत्वाभावात् । अभिप्रैषि प्रार्थयसे । माण्डवीश्रुतकीर्तिभ्यामिति तादर्थ्ये चतुर्थी । अभ्यर्थये । वरत्वेनेति शेषः । आगमयस्व प्रतीक्षस्व । 'आगमेः क्षमायाम्' इति तङ् । उत्तरकोशलायोध्या तस्या ईश्वरो दशरथः । वाचिकं संदेशवाक् । 'संदेशवाग्वाचिकं स्यात्' इत्यमरः । निसृष्टार्थ ऊहापोहसमर्थो दूतविशेषः । तदुक्तम्—'उभयोर्भावमाश्रित्य परापेक्षाविवर्जितम् । स्वबुद्ध्या कुरुते कार्यं निसृष्टार्थः प्रकीर्तितः ॥' इति । **दोर्लीलेति** । काकुत्स्थेन रामेण विदेहनृपतिर्जनकः पूर्णः प्रतिज्ञाभरो यस्य तादृशः कृतः । महादेवकार्मुकाकर्षणादिति

---

१. 'जनकस्य कर्णे एवमेवमिति'. २. 'एवमस्तु' इति पुस्तकान्तरे नास्ति. ३. 'एव' इति पुस्तकान्तरे नास्ति. ४. 'उत्थाय' इति पुस्तकान्तरे नास्ति.

पश्यामश्च सुहृद्गृहान्नवनवोन्मीलद्विवाहोत्सवा-
नैक्ष्वाकेषु च मैथिलेषु च फलन्त्यस्माकमद्याशिषः ॥ ५७ ॥

**शौष्कलः**—(वैलक्ष्यरोषाभ्यां स्मयमानः ।) भोः सीरध्वज, पुरुषप्रकर्षाधाने हि विद्यावृद्धसंयोगाद्बहिरङ्गानि वयांसि । यदनया प्रहीणलब्धकन्यया यौनसंबन्धोपस्थितं पुलस्त्यकुलमुपेक्षमाणो वर्षीयानपि कोमलप्रज्ञोऽसि । (मुनिं प्रति ।) कौशिक, नाद्यापि किंचिदतिक्रामति । तवापि लङ्कापतौ ताडकावधापराधमपमार्ष्टुमयमेवावसरः । (कौशिकस्तत्रावज्ञां नाटयति ।)

**जनकः**—भगवन्, एहि । स्वयमुपेत्य रामभद्रवदनचन्द्रचन्द्रिकाप्रवाहेण निर्वापयामि तावदलीकधनुर्धरसहस्रप्रार्थ्यमानमैथिलीकदर्थितमा-

---

भावः । नवनवेति वीप्सायां द्विर्वचनम् । यद्वा नवेन नूतनेन नवेन स्तवेनोन्मीलन्प्रकाशवान्विवाहोत्सवो येषु तान् । 'णु स्तुतौ' । 'ऋदोरप्' इति कर्मण्यप् । ऐक्ष्वाकेष्विति यदा जनपदनाम तदा 'जनपदशब्दात्क्षत्रियादञ्' इत्यञ् । 'यञञोश्च' इति बहुषु स्त्रियां लुक् । एवं चेक्ष्वाकूणामपत्यानीक्ष्वाकवः । यदा त्विक्ष्वाकुः क्षत्रियमात्रे वर्तते तदेक्ष्वाकोरपत्यान्यैक्ष्वाकाः । 'तस्यापत्यम्' इत्यौत्सर्गिकोऽण् । 'दाण्डिनायन–' इत्यादिनोकारलोपः । **वैलक्ष्यरोषाभ्यामिति** । इन्दुशेखरधनुर्भङ्गश्रवणात्सीताया अप्राप्तिनिर्णयाच्चेति भावः । रामभद्रजामातृकरणे जनकस्याज्ञत्वमुपपादयति—**पुरुषेति** । पुरुषप्रकर्षाधाने पुरुषस्योत्कर्षारोपणे । हिशब्दोऽवधारणे । 'हि हेताववधारणे' इत्यमरः । विद्या शास्त्रादिज्ञानं तया वृद्धः पण्डितः । 'बुधवृद्धौ पण्डितेऽपि' इत्यमरः । यद्वा विद्यया ज्ञानेन वृद्धः प्रामाणिकः । तस्य संयोगः संबन्धः । तस्माद्वयांसि वार्धकानि बहिरङ्गान्यबलानि । एतदुक्तं भवति—विद्यावृद्धसंबन्धः पुरुषोत्कर्षेऽन्तरङ्गो हेतुर्वयो बहिरङ्गमिति भावः । नूनं कुतो वयसो बहिरङ्गत्वमित्यत आह—**यदनयेति** । यद्यस्मात्प्रहीणं हलपद्धतिस्तत्र प्राप्तकन्यया सीतया करणभूतया । अयोनिजयेति यावत् । यौनसंबन्धोपस्थितं यौनसंबन्धार्थमुपस्थितं मिलितं पुलस्त्यकुलं रावणमुपेक्षमाणो वर्षीयानपि वृद्धोऽपि । वृद्धशब्दस्य 'प्रियस्थिर–' इत्यादिना वर्षादेशः । कोमलप्रज्ञो मृदुबुद्धिरसि । ज्ञानशून्योऽसीत्यर्थः । यद्वा प्रहीणा प्रकर्षेण हीना । भूम्यां लब्धत्वेन केन जनितेति ज्ञानाभावात् । यद्वा निन्दिता सामुद्रकादौ । कृष्णवर्णत्वात् । 'कृष्णवर्णा हि

---

१. 'वृद्धस्य–'. २. 'यौवन–'. ३. 'प्रतिज्ञोऽसि'. ४. 'राजर्षे कौशिक'; 'ऋषे कौशिक'. ५. 'वधमपि मार्ष्टुम्'. ६. 'जनकः—(तत्रावज्ञां नाटयन् ।) भगवन्, एहि'. ७. 'स्वयमुपेत्य' इति पुस्तकान्तरे नास्ति. ८. 'रामचन्द्रमुखचन्द्रचन्द्रिकाप्रवाहैः'; 'रामभद्र—प्रवाहैः'. ९. 'निर्वापयामः'. १०. 'सहस्रार्थ्य–'.

त्मानम् । नहि मिहिरमरीचिनिचयपचेलिमस्य तुहिनकरबिम्बसंवादादपरोऽपि[3] कश्चिदगदंकारः कैरवाकरस्य ।

(इत्युत्थाय परिक्रामतः ।)

**शौष्कलः**—(सखेदमाकाशे ।) हा तपस्विनि सीते, हतासि । पौलस्त्यप्रार्थितापि विचार्यसे ।

त्रिभुवनविजयश्रियः सपत्नीं जनयतु को भवतीमनात्मतन्त्राम् ।
स्वजनमपि न ते निरूपयामः कमपि विपाट्य भुवं विनिर्गतासि ॥ ५८ ॥

(सरोषं जनकं प्रति ।) सीरध्वज,

पौराणीभिरनेकविक्रमकथागाथाभिरर्थापिता-
स्ते वीरस्य जयन्ति राक्षसपतेर्दोःस्तम्भदम्भोलयः ।
यानुत्प्रेक्ष्य विशोषयन्मदमयं मैरेयमैरावणो
भूषास्रग्भिरभूदमात्यमधुपश्रेणीषु साधारणः ॥ ५९ ॥

---

सा सीता' इति रामायणम् । अपमार्ष्टुं खण्डयितुं शोधयितुं वा । निर्वापयामि सुखयामि । अलीकं मिथ्या निष्फलं वा । कदर्थितं संतापितम् । दृष्टान्तमाह—**नहीति** । मिहिरः सूर्यः । निचयः समूहः । परिचयः संबन्धः । पचेलिमस्य पच्यमानस्य । स्वयं कथ्यमानस्येति यावत् । 'केलिमर उपसंख्यानम्' इति कर्मकर्तरि केलिमर् । अगदंकारः संकोचरूपव्याधेरपहर्ता । 'कारे सत्यागदस्य' इति मुम् । कैरवाकरस्य कुमुदसमूहस्य । 'आकरो निवहोत्पत्तिस्थानकोशेषु कथ्यते' इति मेदिनीकरः । हे तपस्विन्यनुकम्प्ये । वराकीति यावत् । अनात्मतन्त्रां पराधीनाम् । आद्योऽपिर्निन्दायाम् । निन्दितं स्वजनमित्यर्थः । द्वितीयोऽपिः समुच्चये । विपाट्य विदार्य । नयेन सीताया अप्राप्तिमवधार्य पराक्रमेण रावणः सीतां परिणेष्यतीति जनकमुत्रासयितुं रावणभुजपराक्रममाह—**पौराणीभिरिति** । राक्षसपते रावणस्य ते दोःस्तम्भदम्भोलयो बाहुस्तम्भवज्राणि जयन्ति । दोःस्तम्भदम्भोलय इति रूपकरूपकम् । कीदृशाः । पौराणीभिः पुराणभवाभिरनेकपराक्रमकथागाथाभिरर्थापिता अभिधेयीकृताः । व्याख्याता इत्यर्थः । 'तत्करोति–' इति णिच् । 'अर्थवेदसत्यानामापुक्' । के ते । ऐरावण इन्द्रहस्ती यान्बाहूनुत्प्रेक्ष्य दृष्ट्वा मदो हर्षस्तस्मादागतम् । 'हेतुमनुष्येभ्यो मयट्' इति मयट् । यद्वा मदमयं मत्ततामयम् । मैरेयं मद्यं विशोषयन्सन् । यद्वायमैरावणो मदं दानं मैरेयं मद्यजातम् । कारणे कार्योपचारात् । विशोषयंस्त्रासात् । भूषास्रग्भिरलंकरणमालाभिरमात्यमधुपश्रे-

---

१. 'परिचय–'. २. 'हिमकर–'. ३. 'अपि' इति पुस्तकान्तरे नास्ति. ४. 'कैरवकेदारस्य'.

तेपु च[1] सत्सु

वृथा सज्जनसंवन्धसत्कारेणासि वञ्चितः ।
पौलस्त्यहस्त[2]वर्तिन्या सीतया तु भविष्यते ॥ ६० ॥

(साक्षेपं च[3] नेपथ्याभिमुखमवलोक्य ।)

समन्तादुत्तालैः सुरसहचरीचामरमरु-
त्तरङ्गैरुत्कीलद्भुजपरिघसौरभ्यशुचिना ।
स्वयं पौलस्त्येन त्रिभुवनभुजा चेतसि कृता-
मरे राम त्वं मा जनकपतिपुत्रीमुपयथाः ॥ ६१ ॥

(स[4]विमर्शमात्मगतम् ।) अहो गम्भीरमिदं[5]मुपस्थितं वस्तु । तन्मन्त्रिणं माल्यवन्तमेव पुरस्कृत्य लङ्केश्वरस्य निवेदयामि ।

(इति निष्क्रान्ताः सर्वे ।)

इति पिनाकभङ्गो नाम तृतीयोऽङ्कः ।

---

णीपु सहचरभ्रमरपङ्क्तिषु साधारणो हेयोऽन्यहस्तितुल्यो वाभूत् । अमात्यः सहचरः सहजो वा । श्रेणीष्विति निमित्तसप्तमी । 'साधारणो हेयतुल्ययोः' इति विश्वः । 'मदो दाने च हर्षे च' इत्यमरः । 'मैरेयमासवः सीधुः' इति च । **वृथेति** । वञ्चितस्त्यक्तः । भविष्यते इति भावे लृट् । तथा च सांप्रतमपि रावणायैव सीतां दातुमर्हसीति भावः । संप्रति राममप्युत्त्रासयति—**समन्तादिति** । उत्तालैः । अनभ्यासादिति भावः । सुरसहचरी देवस्त्री । मरुत्तरङ्गैर्वायुकल्लोलैः । करणभूतैः । परिघोऽर्गलः । 'परिघोऽर्गलघातयोः' इति धरणिः । सौरभ्यं ख्यातिः । शुचिना शुद्धेन । त्रिभुवनभुजा त्रिभुवनं भुनक्ति । 'क्विप्च' इति क्विप् । अरे नीचसंबोधने । जनकपतिपुत्रीं सीताम् । मा उपयथा न विवाहयिष्यसि । 'यम उपयमे' लुङ् । 'उपाद्यमः स्वकरणे' इति तङ् । थासः 'विभाषोपयमने' इति कित्त्वम् । इदं वस्तु हरधनुर्भङ्गरूपम् । सीतापरिणयस्वरूपं चेत्यर्थः । माल्यवान्रावणस्य मातामहः । पुरस्कृत्य सत्कृत्य । 'पुरोऽव्ययम्' इति गतिसंज्ञा । 'नमस्पुरसोर्गत्योः' इति विसर्जनीयस्य सत्वम् ॥

इति समस्तप्रक्रियाविराजमानरिपुराजकंसनारायणभवभक्तिपरायणश्रीहरिनारायणपदसमलंकृतमहाराजाधिराजश्रीमद्भैरवसिंहदेवप्रोत्साहितवैजौलीग्रामवास्तव्यखौआलवंशप्रभवश्रीरुचिपतिमहोपाध्यायविरचितायामनर्घराघवटीकायां तृतीयोऽङ्कः ।

---

१. 'च' इति पुस्तकान्तरे नास्ति. २. 'वशवर्तिन्या'. ३. 'च' इति पुस्तकान्तरे नास्ति. ४. 'सविस्मयमात्मगतम्'. ५ 'इदम्' इति पुस्तकान्तरे नास्ति.

चतुर्थोऽङ्कः।

(ततः प्रविशति माल्यवान्।)

**माल्यवान्**—([1]जृम्भमाणश्चक्षुषी परिमृज्य।) अये [2]विभातैव विभावरी। तथाहि।

स्तोकोन्निद्रनिदाघदीधितिमहस्तन्द्रालुचन्द्रातपा-
[3]स्तायन्ते ककुभो रथाङ्गगृहिणीगार्हस्थ्यगर्हाभिदः।
अद्यापि स्वकुलायशाखि[4]शिरसि स्थित्वा रुवन्तो मुहु-
स्तूष्णीं प्रत्यभिजानते बलिभुजो भीताः स्वयूथ्यस्वरान्॥ १॥

---

तृतीयाङ्केन सीतायाः परिणयनं प्रतिपाद्य सांप्रतं पञ्चमाङ्कप्रतिपन्नमर्थं सूचयन्नेव 'अण्णं वि एत्थ अणत्थंतरं परापडिदं' इत्यादि वक्ष्यमाणेन चतुर्थाङ्कपर्यवसन्नं जामदग्न्यविजयं सूचयितुम् 'तन्मन्त्रिणं माल्यवन्तं पुरस्कृत्य लङ्केश्वरस्य निवेदयामि' इत्यनेन सूचितप्रवेशस्य माल्यवतः प्रवेशमाह—**ततः प्रविशतीति**। जृम्भमाणः 'जांभी' इति प्रसिद्धां कुर्वन्। विभाता प्रातःकालीना। विभावरी रात्रिः। शौष्कलमुखावगतसीतापाणिग्रहणं रावणाय निवेदयितुं राजकुलगमनस्यानुकूलिकत्वेन प्रातर्वर्णनमाह—**स्तोकोन्निद्रेति**। ककुभो दिशस्तायन्ते स्फीता भवन्ति। 'तायृ संताने' धातुः। कीदृशाः। स्तोकोन्निद्रमल्पप्रकाशि यन्निदाघदीधितिमहः सूर्यतेजस्तेन तन्द्रालवो निद्रालसाश्चन्द्रातपाश्चन्द्रकिरणा यासु ताः। 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्'। 'आतपो रश्मिमात्रे च सूर्यरश्मौ च दृश्यते' इति धरणिः। रथाङ्गगृहिण्याश्चक्रवाक्या गार्हस्थ्ये या गर्हा निन्दा तस्या भेदिकाः। रात्रावेकत्र स्थितयोरपि संगमाभावादनित्योऽयं संसारस्त्याज्यः। कृतं गार्हस्थ्येनेत्यादिरूपा या मतिरुदेति तामेव पुनरुदिते सूर्ये तयोरेवान्योन्यसंगतयोर्विपरीततां दिशो नयन्तीति भावः। ननु विभातैव विभावरीति कुतो ज्ञातमित्यत आह—अद्यापि। सूर्योदयं यावदपीत्यर्थः। बलिभुजः काका भीताः सन्तः तूष्णीं मूकीभूय स्वयूथ्यस्वरान् यूथ्यो यूथसंबन्धी। 'दिगादिभ्यो यत्'। प्रत्यभिजानते सम्यक्प्रकारेण जानन्ति। स्वीयः कुलायः पक्षिगृहं यत्र शाखिनि स स्वकुलायशाखी तस्य शिरसि स्थित्वा रुवन्तः शब्दं कुर्वन्तः। प्रत्यभिजानत इत्यत्र 'अनुपसर्गाज्ज्ञः' इति न तङ्। अस्य सोपसर्गत्वात्। नापि 'संप्रतिभ्यामनाध्याने' इति तङ्। अभिना प्रतेर्व्यवधानात्। मैवम्। प्रतिना धातोर्योगं कृत्वा 'संप्रतिभ्यामनाध्याने' इति तङं विधाय पश्चादभिना संबन्धः। स्वतन्त्रेच्छाया नियन्तुमशक्यत्वात्। विवक्षायाश्च प्रयोगेऽभ्यर्हितत्वात्। यद्वा प्रत्यभिजानते मिथः पूर्वानुभूतान्स्मरन्ति। 'कर्मव्यतिहारे तङ्'। 'दिशस्तु ककुभः काष्ठाः' इत्यमरः। 'कुलायो नीडमस्त्रियाम्' इति च। 'काके

---

१. 'विजृम्भ—प्रमृज्य'. २. 'विभातप्रायैव विभावरीयम्'. ३. 'स्त्यायन्ते'. ४. 'शिखरे'.

अपि च ।

प्राचीं वासकसज्जिकामुपगते भानौ दिशां वल्लभे
पश्यैता रुचयः पतङ्गदृषदामाग्नेयनाडिंधमाः ।
लोकस्य क्षणदानिरङ्कुशरसौ संभोगनिद्रागमौ
कोकस्तोमकुमुद्वतीविपिनयोर्निक्षेपमातन्वते ॥ २ ॥

(सर्वतो निरूप्य ।) हन्त समन्तादामोदमानपौरसंभोगमयी खल्वियं दशग्रीवभुजार्गलापरिपालिता राजधानी ।

इतः पौरस्त्यायां ककुभि विवृणोति क्रमदल-
त्तमिस्रामर्माणं किरणकलिकामम्बरमणिः ।
इतो निष्क्रामन्ती नवरतिगुरोः प्रोञ्छति वधूः
स्वकस्तूरीपत्राङ्कुरमकरिकामुद्रितमुरः ॥ ३ ॥

---

तु करटारिष्टबलिपुष्टसकृत्प्रजाः' इत्यपि । ननु काकशब्दस्य व्यभिचारित्वात्कथं प्रातर्निर्णय इत्यत आह—**प्राचीमिति** । पश्येत्यस्य वाक्यार्थ एव कर्म । एता रुचयो लोकस्य संभोगनिद्रागमौ रमणस्वापौ कर्मभूतौ कोकस्तोमे चक्रवाकसमूहे कुमुद्वतीविपिने कुमुदिनीवने च निक्षेपं न्यासं 'स्थगी' इति प्रसिद्धमातन्वते विस्तारयन्ति । कीदृशौ । क्षणदायां रात्रौ निरङ्कुशोऽनिवारितो रसो ययोस्तादृशौ । रात्रौ संभोगनिद्रयोरन्यकार्याभावाद्रसनिष्पत्तिरिति । चक्रद्वन्द्वे रतिः, कुमुदिनीवने संकोचो निक्षेप इति भावः । क सति । दिशां वल्लभे भानौ सूर्ये प्राचीं पूर्वां दिशमुपगते सति । कीदृशीम् । वासकसज्जिकां नायिकाभेदमिति रूपकम् । वासकसज्जिकालक्षणम्—'वासवेश्मनि सुकल्पितशय्या या समागमविधिं विदधाना । तिष्ठति प्रियसमागमसज्जा तामिहाकलय वासकसज्जाम् ॥' 'वासवदीक्षिताम्' इति पाठे वासवेनेन्द्रेण चिह्नभूतेन दीक्षितां कथिताम् । ऐन्द्रीति व्यपदेशात् । यद्वा दीक्षितां स्वीकृताम् । 'दीक्षा स्वीकार आदेशे' इति विश्वः । कीदृश्यो रुचयः । पतङ्गदृपदां सूर्यकान्तमणीनामाग्नेयनाडिंधमा आग्नेयनाडीध्मापिकाः । अग्नेरियमाग्नेयी । 'सर्वत्राग्निकलिभ्यां ढक्' । आग्नेयनाडीतोऽग्निरुत्तिष्ठति । आग्नेयनाडीं धमन्त्यग्निसंयुक्तां कुर्वन्ति । 'नाडीमुष्ट्योश्च' इति खश् । 'पतङ्गः सूर्ये शलभे' इति विश्वः । 'कोकश्चक्रश्चक्रवाक–' इत्यमरः । 'कुमुद्वती कुमुदिन्याम्' इति च । हन्त हर्षे । आमोदमानो हृष्यन् । पौरः पुरवासी । संभोगः सुखम् । खलु निश्चये । राजधानी नगरी । **इत इत्यादि** । इतोऽत्र प्रदेशे । आद्यादित्वात्तसिः । पौरस्त्यायां पूर्व-

---

१. 'कोकद्वन्द्व–'. २. 'निरूप्य सहर्षम्'. ३. 'मोदमान'. ४. 'भुजार्गलपालिता'.

अपि च[1]।

अयं मृदुमृणालिनीवनविलासवैहासिक-
स्त्विषां वितपते पतिः सपदि दृश्यमाना निजाः।
स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले
विपर्ययितवृत्तयो घुसृणपङ्कपत्राङ्कुराः ॥ ४ ॥

इतश्च।

प्रियवसतेरपयान्त्यो मिथः करम्बितकराम्बुजन्मानः।
करजव्रणविरलस्तनपुलकममूः किमपि विवदन्ते ॥ ५ ॥

---

संबद्धायाम्। ककुभि दिशि। पुरसस्त्यक्। अम्बरमणिः सूर्यः। किरण एव कलिका तां विवृणोति प्रकाशयति। मर्म हृदयादि। इत इहप्रदेशे। काचिद्वधूर्नवरतौ गुरोरध्यापकस्य। अभिनवनायकस्येत्यर्थः। उरो हृदयं प्रोञ्छति। निष्कामन्ती सती। कीदृशम्। निजकस्तूरीपत्रावलीमकरिकया मुद्रितं चिह्नितम्। अयमाशयः—नवजारस्य वक्षसि कस्तूरिकापत्रावलीदर्शनेनान्यज्ञानं स्यात्। तथा च वल्लभस्य पुनरागमनं न भवेदिति कामिन्या तदुरःप्रोञ्छनम्। यद्वा एतद्दर्शनान्मम ज्ञानं मा भूदिति कृत्वा कामिन्या नवजारवक्षःप्रोञ्छितम्। यद्वा नवरतिगुरोः सकाशान्निर्गच्छन्ती स्वीयमेवोरस्तादृशं प्रोञ्छति काचित्। सा हि कुलस्त्री नूतनाभिसारिका। ततो गोपनार्थमिदम्। यद्वा नवरतिगुरोर्नवस्वामिनो वधूर्नवोढा उरः प्रोञ्छति तादृशम्। एतद्दर्शनाच्छ्वश्र्वादिभिर्ज्ञातव्यमिति लज्जा स्यात्। **अयमिति**। अयं त्विषां पतिः सूर्यो वितपते। 'उद्विभ्यां तपः' इति तङ्। मृदु कोमलं यन्मृणालीवनं पद्मिनीकाननं तस्य यो विलासस्तस्य वैहासिकः केलिकर्ता। विदूषक इत्यर्थः। विहासो विहसितं तेन दीव्यतीति वैहासिकः। 'तेन दीव्यति—' इति ठक्। 'वैहासिकः केलिकरः प्रहासी च विदूषकः' इति भरतः। यद्वा वैहासिकः प्रकाशकारी। सपदि तत्क्षणादेव निजाः स्वीया दृश्यमाना घुसृणपङ्कपत्राङ्कुराः कुङ्कुमपङ्कपत्रावल्यः कर्त्रीभूता उत्पलदृशां स्तनौ कर्मभूतौ पुलकयन्ति रोमाञ्चयन्ति। प्रियाश्लेषस्मरणादिति भावः। घुसृणं कुङ्कुमम्। प्रियोरःस्थले विपर्ययिता विपर्ययं वैपरीत्यं प्राप्ता वृत्तिर्येषां ते। पुरुषायिते हि स्त्रिया अधोमुख्याः कान्तसमालिङ्गनाद्वामदक्षिणस्तनयोर्वैपरीत्येन पत्रावली स्थितेति भावः। विपर्ययितेति तारकादित्वादितच्। कुलवधूसंभोगमुक्त्वा वारवनितासंभोगमाह—**प्रियेति**। वसतेर्गृहात्। 'वसतिर्गृहयामिन्योः' इति शाश्वतः। अपयान्त्यो निःसरन्त्यः। मिथो रहसि परस्परं वा। करम्बितं मिलितमालम्बितं वा। अम्बुजन्म पद्मम्। अमूः स्त्रियः। किमप्यनिर्वचनीयस्वरूपम्। करजव्रणैर्नखक्षतैर्विरला व्याप्ता ये स्तनास्तेषां पुलकं रोमाञ्चं यथा

---

१. 'अपि च' इति पुस्तकान्तरे नास्ति.

(अन्यतश्च दृष्ट्वा ।) इतो रम्यतरं वर्तते ।

प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरी-
र्नवोढा न व्रीडामुकुलितमुखीयं सुखयति ।
लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयो-
श्चमत्कारो गूढं करजपदमासां कथयति ॥ ६ ॥

(मुहूर्तमनुध्याय ।) अहो यतःप्रभृति वैदेहीवरणाय प्रहितेन पुरोधसा कथ्यमानं ककुत्स्थकुलकुमारस्य मानुष्यकातिशयमश्रृणवम्, ततःप्रभृति कष्टां दशामनुभवामि । तथाहि ।

तत्तादृशं कथमुदेति मनुष्यलोके
तेजोऽद्भुतं निरभिसंधि न तावदेतत् ।
तान्येव चास्य चरितानि दशाननस्य
धिक्चिन्तया रजनिरक्षिषु नः प्रभाति ॥ ७ ॥

---

स्यादेवं विवदन्ते विवादं कुर्वन्ति । न मम स्तने नखक्षतं न वा रोमाञ्चस्तत्र, किं त्वागन्तुकोऽयं कोऽपि वेषभेद इति परस्परमनयोर्विवाद इति भावः । विवदन्त इति 'भासन-' इत्यादिना विमतौ तङ् । करजा नखाः । 'पुनर्भवः कररुहो नखोऽस्त्री' इत्यमरः । सामान्यवनितानां संभोगमुक्त्वा नायिकाविशेषसंभोगमाह—**प्रभात इति** । अन्यतोऽन्यत्र चेयं काचित्सहचरीः सखीः कर्मभूताः न सुखयति । कीदृशीः । प्रभाते प्रातःकाले, अनु समीपं रहोऽनुरहसम् । 'अन्ववतप्ताद्रहसः' इत्यच् समासान्तः । यद्वा रहोऽनु लक्षीकृत्य । अव्ययीभावः । पूर्ववदच् । तत्र वृत्तं कथां पृच्छन्तीः । कथं रहोवृत्तान्तेन सहचरीर्न सुखयतीत्यत आह—नवोढा नवविवाहिता यतः, अत एव सखीवचःश्रवणानन्तरं व्रीडया लज्जया मुकुलितमुखी नम्रमुखी । तु पुनः, अस्याः कुचयोश्चमत्कारश्चेष्टाविशेष आसां सखीनां कृते गूढं गुप्तमप्रत्यक्षं करजपदं नखस्थानं कथयति । स्वामिनो रहोवृत्तं लज्जया वक्तुमशक्ता वारंवारं रहोवृत्तं पृच्छन्त्यः सख्यः कुचयोर्नखवृत्तैनैवमेकान्तकर्तृकानुरागं जानन्त्वित्याशयेन चेष्टाविशेषेण तया कथितमिति भावः । कीदृशीनाम् । अनिशं वारंवारं पत्राङ्कुरं पत्रावलीलिखन्तीनाम् । प्रभृतिशब्दोऽयमारभ्यार्थोऽव्ययः । यतःप्रभृति यत आरभ्येत्यर्थः । पुरोधसा शौष्कलेन । मानुष्यकं मनुष्यकर्म । 'योपधाद्गुरूपोत्तमाद्वुञ्' । अश्रृणवं श्रुतवानस्मि । 'श्रु श्रवणे' । लङ् । मिपोऽम्भावः । दशामवस्थाम् । **तत्तादृशमिति** । तादृशमनिर्वचनीयम् । अद्भुतमाश्चर्यजनकम् ।

---

१. 'इतः' इत्यादि पुस्तकान्तरे नास्ति. २. 'मनुष्याति–'. ३. 'प्रयाति'.

अपि च ।

श्रुत्वा दुःश्रवमद्भुतं च मिथिलावृत्तान्तमन्तःपत-
चिन्तापह्नवसावहित्थवदनत्वग्विप्रकीर्णस्मितः ।
हेलाकृष्टसुरावरोधरमणीसीमन्तसंतानक-
स्रग्वासोज्ज्वलपाणिरप्यवति मां वत्सो न लङ्केश्वरः ॥ ८ ॥

(विमृश्य । आकाशे ।) अहह, दारुणेयमस्माकं चिरजीविता ।

प्रीते विधातरि पुरा परिभूय मर्त्या-
न्वव्रेऽन्यतो यदभयं स भवानहंयुः ।
तन्मर्मणि स्पृशति मामतिमात्रमद्य
हा वत्स शान्तमथवा दशकंधरोऽसि ॥ ९ ॥

---

तेजो रामरूपम् । एतत्कर्म न निरभिसंधि न निरभिप्रायम् । तावदिति लोकोक्तौ । दशाननस्य तानि चरितानि दुष्टचरितानि धिक् । धिग्योगे द्वितीया । नो ममाक्षिपु दर्शनपथेषु रजनी रात्रिः प्रभाति प्रतिभाति । चिन्तया जागरणेऽपि चक्षुष्यन्धकार इवेति भावः । न इति 'अस्मदो द्वयोश्च' इत्येकत्वे बहुवचनम् । **श्रुत्वेति** । लङ्केश्वरो रावणो मां नावति न प्रीणाति । कीदृशः । दुःश्रवं कर्णकटु । रामकर्तृकसीतापरिणयात् । अद्भुतमाश्चर्यजनकम् । हरधनुर्भङ्गात् । एतादृशं मिथिलावृत्तान्तं श्रुत्वा अन्तरभ्यन्तरे पतन्ती या चिन्ता तस्या अपह्नवेन गोपनेन सावहित्थान्याकारगुप्तिसहितानि यानि वदनानि तेषु दशसु मुखेषु त्वचि त्वचि प्रतित्वग् विकीर्णं दर्शितं स्मितमीषद्धासो येन सः । मुखैकदेशकृताल्पहास इत्यर्थः । हेलया लीलयाकृष्टा या सुरावरोधरमणीनां देवान्तःपुरस्त्रीणां सीमन्तेभ्यः संतानकस्रग्देववृक्षमाला तस्या वासेन सौरभेणोज्ज्वलः ख्यातः पाणिर्यस्य स तथा । 'स्रग्दामोज्ज्वल–' इति पाठे स्रगेकमाला, दाम मालासमूहः, इत्यनयोर्भेदः । यद्वा स्रगेव स्रग्दाम । यथा सूत्रं सूत्रतन्तुरिति । सीमन्तः केशरचनाभेदः । 'सिचमि' इति प्रसिद्धः । 'अवहित्थाकारगुप्तिः' इत्यमरः । अहह खेदे । दारुणा कठिना । —**प्रीते विधातरीति** । स भवानित्याकाशे । विधातरि शिवे प्रीते सति मर्त्यान्मनुष्यान्परिभूयानादृत्याहंयुरहंकारयुक्तः सन्पुरा पूर्वं यदन्यतो मर्त्यान्येभ्योऽभयं वव्रे वृतवांस्तदतिमात्रमत्यर्थं मां मर्मणि हृदि स्पृशति । मानुषाद्रामाद्रावणस्याहितं भविष्यतीति भावः । रामादहितं निश्चित्याह—हा वत्सेति । हा कष्टम् । हे वत्स, कष्टमित्यर्थः । इह शान्तमिति मङ्गलोक्तिः । रावणस्यापि शौर्यातिशयं स्मृत्वा हृदयप्रबोधायाह—अथवेति । एककंधरो रामो दशकंधरेण त्वया विनाश्य इति भावः । अहंयु-

१. 'सुरावरोधनवधू–'; 'सुराधिराजरमणी–'.

(सविमर्शम् ।) अहो मैथिलस्य नृपतेरकार्यज्ञता ।

विश्वामित्रवशीकृते हृदि वयं मा भूम संबन्धिन-
स्ते दृष्टा न कथं पुराणमुनयो मान्याः पुलस्त्यादयः ।
जामातापि महेन्द्रमौलिवलभीपर्यङ्करत्नाङ्कुर-
ज्योत्स्नापुष्टनखेन्दुदीधितिरयं नापेक्षितो रावणः ॥ १० ॥

(पुरोऽवलोक्य ।) कथं मिथिलाचरितानि चरितुमनुप्रहिता चिरयति वत्सा शूर्पणखा ।

(प्रविश्य शूर्पणखा ।)

**शूर्पणखा**—(सहर्षम् ।) अम्महे, सोम्मसुन्दरविआहणेवच्छलच्छीविच्छरिदकान्तिपब्भाराइं रहुउलकुमाराणं मुहपुण्डरीआइं पेक्खन्ती जुउच्छिदेणावि माआमाणुसीभावेण कदत्थीकिदम्हि । अम्मो सा तारिसी गुणाणं पकिदी जा विपक्खहत्थपडिदावि सुहावेदि ।

---

रिति 'अहंशुभमोर्युस्' । अकार्यज्ञत्वे हेतुमाह—**विश्वामित्रेति** । विश्वामित्रेण वशीकृतेऽनायत्तीकृते हृदि सति वयं संबन्धिनो मा भूम मा भविष्यामः । ते पुनः पुराणमुनयः पुलस्त्यादयो मान्याः कथं न दृष्टाः । पुलस्त्यापत्यत्वादपि रावणो वरीतुमर्हतीति भावः । ननु भवन्तु पुलस्त्यादयो मान्यास्तथापि वरगुणाभावादेव रावणो न वृत इत्यत आह—अयं रावणोऽपि जामाता नापेक्षितः । कीदृशः । महेन्द्रमौलिरेव वलभी प्रासादोपरिगृहं तदेव पर्यङ्कः । 'पालङ्क' इति प्रसिद्धः खट्वाभेदः । तत्रस्थो यो रत्नाङ्कुरस्तस्य ज्योत्स्नया पुष्टा नखचन्द्रदीधितिर्यस्य । तादृशोऽपीत्यर्थः । चरितुं गन्तुं चरक्रियां विधातुं वा । चिरयति विलम्बते । **अम्महे इत्यादि** । 'अम्महे, सौम्यसुन्दरविवाहनेपथ्यलक्ष्मीविच्छर्दितकान्तिप्राग्भाराणि रघुकुलकुमाराणां मुखपुण्डरीकाणि प्रेक्षमाणा जुगुप्सितेनापि मायामानुषीभावेन कृतार्थीकृतास्मि । अहो सा तादृशी गुणानां प्रकृतिर्या विपक्षहस्तपतितापि सुखयति' [इति च्छाया ।] इह अम्महे विस्मये । 'अम्मो अम्महे इति पदं कुर्यात्स्त्रीणां तु विस्मये' इति भरतः । यद्वा अम्ब हे मातः । सौम्या प्रियदर्शना सुन्दरी शोभावती विवाहलक्ष्मीः । यद्वा सोम एव सौम्यः । स्वार्थिकः ष्यञ् । सोमस्य चन्द्रस्येव सुन्दरी विवाहलक्ष्मीः । 'सामसुन्दरी' इति (पाठे) श्यामसुन्दरी या विवाहलक्ष्मीर्विवाहाधिष्ठात्री देवता तस्या नेपथ्यं शोभालंकरणं वा । यद्वा श्यामसुन्दरेण रामेण सह विवाहस्तस्य नेपथ्यं प्रसाधनं तस्य लक्ष्मीः शोभा । विच्छर्दिता अतिशयिता या कान्तिस्तस्याः प्राग्भारो विस्तारो येषु तानि रघुकुलकुमाराणां चतुर्णां मुखपुण्डरी-

---

१. 'नावेक्षितः'. २. 'वत्सामे'.

**माल्यवन्**—(दृष्ट्वा सस्नेहम् ।) कथं वत्सा शूर्पणखा । वत्से, अयमहम् । इत इतो भवती ।

**शूर्पणखा**—कधं इह ज्जेव्व अदालअसिहरपग्गीवे मादामहो । अहो दुसिलिट्ठता दद्धकज्जाणम् । जं दाणिं पजागरकिलिअन्तलोअणो पडिक्खणजिम्भिआपसारिदमुहकुहरदिट्ठहिअअट्ठिदकठिणकज्जभारो अण्णो विअ को वि दीसदि । अहवा सामण्णो वि गुरुओ मन्तिभावो विसेसेण साहसेक्करसव्ववसाअस्स चण्डचरिदस्स अह्मसामिणो रावणस्स । जाणामि मं जेव्व पडिपालअन्तो चिट्ठदि । जाव णं उवसप्पामि । (सविषादमुपसृत्य ।) अज्ज, वन्दे ।

**माल्यवान्**—वत्से[1], कल्याणिनी भूयाः । इहास्यताम् । अपि भरतशत्रुघ्नाभ्यां मिथिलामुपस्थितो[2] दशरथः ।

**शूर्पणखा**—(उपविश्य ।) अज्ज, दसरहे आअदे कुमाराणं गोदाणमङ्गले अ संवुत्ते दाव मए पत्तं मिहिलाणअरम् ।

---

काणि प्रेक्षमाणा जुगुप्सितेन निन्दितेनापि मायामानुषीभावेन कपटमानुषीत्वेन कृतार्थीकृतास्मि । अम्मो वितर्के देशीयं पदम् । सा तादृशी गुणानां प्रकृतिः स्वभावो वा विपक्षहस्ते पतितापि सुखयति । इतोऽत्रोपविशामि, अस्मि वा । **कधं इह ज्जेव्वेत्यादि ।** 'कथमिहैवाट्टालकशिखरप्रग्रीवे मातामहः । अहो दुःश्लिष्टता दग्धकार्याणाम् । यदिदानीं प्रजागरक्लान्तलोचनः प्रतिक्षणजृम्भाप्रसारितमुखकुहरदृष्टहृदयस्थितकठिनकार्यभारोऽन्य इव कोऽपि दृश्यसे । अथवा सामान्योऽपि गुरुको मन्त्रिभावो विशेषेण साहसैकरसव्यवसायस्य चण्डचरितस्यास्माकं स्वामिनो रावणस्य । जानामि मामेव प्रतिपालयंस्तिष्ठति । यावदेनमुपसर्पामि । आर्य, वन्दे' [इति च्छाया ।]इहाट्टालकं 'अटारी' इति प्रसिद्धं घनधारणस्थानम् । शिखरमग्रम् । प्रग्रीवं प्राङ्गणम् । मातामहो माल्यवान् । दुःश्लिष्टता दुःखदताम् । दग्धकार्याणां निन्दितकार्याणाम् । 'दग्धहतकनिन्दितानि कुत्सायाम्' इति शाब्दाः । जृम्भा 'हांफी' इति प्रसिद्धा । कठिनं दुष्करं गुरु वा । गुरुकोऽसह्यः । व्यवसायो व्यापारः । चण्डं तीक्ष्णम् । रावणस्य । कृते इति शेषः । रावणं लक्ष्यीकृत्य मन्त्रिभावोऽतिदुष्कर इत्यर्थः । यावच्छब्दो यस्मादर्थे । यत्तदोर्नित्याभिसंबन्धात् । यस्मान्मां प्रतिपालयंस्तिष्ठति तदेनमुपसर्पामीत्यर्थः । अपिः प्रश्ने । शूर्पणखावाक्ये—'आर्य, दशरथे आगते कुमाराणां गोदानमङ्गले च संवृत्ते तावन्मया प्राप्तं मिथिलानगरम्' [इति

---

१. 'कल्याणिनि, इहास्यताम्'. २. 'सह वैदेहमुपस्थितः'; 'शत्रुघ्नाभ्यामुपस्थितः'.

**माल्यवान्**—(निःश्वस्य ।) अतिप्रकाशोऽयमर्थो यथा निवृत्तस्वीकरणा जानकीति ।

**शूर्पणखा**—अध इं ।

**माल्यवान्**—(विमृश्य ।) अहो दुरात्मनः क्षत्रियब्राह्मणस्य कुशिकजन्मनो दुर्नाटकम् ।

यज्ञोपप्लवशान्तये परिणतो राजा सुतं याचित-
स्तं चानीय विनीय चायुधविधौ ते जघ्निरे राक्षसाः ।
त्रैयक्षं विदलय्य कार्मुकमथ स्वीकार्य सीतामितो
नो विद्मः कुहनाविटेन बटुना किं तेन कारिष्यते ॥ ११ ॥

**शूर्पणखा**—अज्ज, एव्वं णेदम् । सो मए तत्थ बह्मणो वसिट्ठमहेसिणो वि फुरन्तो दिट्ठो ।

**माल्यवान्**—(विहस्य ।) वत्से, तपोभिरस्य ब्राह्मणादेशोऽपि स्थानिवद्भावेन क्षत्रकार्यं न जहाति । किं च स्वभावमधुरोऽपि काकुत्स्थबटुरौत्प-

च्छाया ।] इह क्षत्रियाणां गोदानस्वरूपमङ्गलपूर्वको विवाहः क्रियत इत्याचारः । अर्थो विषयः । स्वीकरणं विवाहः । 'अथ किम्' स्वीकारे । दुर्नाटकं दुश्चेष्टा । **यज्ञोपप्लवेति** । उपप्लवो विघ्नः । सुतं याचित इत्यत्र यद्यपि कर्मणि क्तः, तथाप्यत्राप्रधानकर्मणस्तेनाभिहितत्वात्सुतमिति द्वितीया । 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनाम्' इति वचनात् । विनीय शिक्षयित्वा । जघ्निरे हताः । 'हन हिंसागत्योः' । लिट् । कर्मणि तङ् । 'गमहन–' इत्युपधालोपः । 'हो हन्तेः–' इति हस्य घत्वम् । त्र्यक्षो महेशस्तस्येदं त्रैयक्षम् । 'तस्येदम्' इत्यण् । 'न य्वाभ्यां–' इत्यैच् । विदलय्य भङ्क्त्वा । 'दल विदारणे' । चुरादावदन्तः । अथानन्तरम् । स्वीकार्य विवाह्य । इतोऽस्मादनन्तरम् । कुहना दम्भाचरणं तया विटो धूर्तः । 'कुहना दम्भचर्यायाम्' इति मेदिनीकरः । 'कुहना लोभान्मिथ्येर्यापथकल्पना' इत्यमरः । तेन बटुना कौशिकेन किं कारिष्यते किं कर्तव्यमिति नो विद्मो न जानीमः । यद्वा नो विद्मोऽपि तु जानीम एव । अनन्तरं रावणवधो येन कार्य इति भावः । कारिष्यत इति कर्मणि लृट् । 'स्यसिच्–' इत्यादिना वृद्धिरिडागमश्च । **अज्जेति** । 'आर्य, एवमेतत् । स मया तत्र ब्राह्मणो वसिष्ठमहर्षेरपि स्फुरन्दृष्टः' [इति च्छाया ।] इह ब्राह्मणः कौशिकः । **तपोभिरस्येति** । आदेशोऽतिदेशः । स्थानिवद्भावेन, स्थानं प्रकृतधर्मोऽस्यास्तीति स्थानी, स्थानिना तुल्यं वर्तते स्थानिवत् । तस्य भावेन तत्त्वेन । तथा च क्षत्रियत्वेने

१. 'प्रतिपदप्रकाशः'.

त्तिकेन क्षात्रेण ब्राह्मण्येन ब्राह्मणेन च जन्मना त्रिजातकादस्मान्मुनेरधी[1]-यानोऽधरीणं(णः) परिणंस्यते। तथाहि।

अविनयभुवामज्ञानानां शमाय भवन्नपि
प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये।
फणिभयभृतामस्तूच्छेद[2]क्षमस्तमसामसौ
विषधरफणारत्नालोको भयं तु भृशायते॥ १२॥

भवतु। किमतिक्रान्तोपवर्णनेन[3]। कथं[4] त्विदानीं स्वयंग्रहीतुमुत्तिष्ठमानो राक्षसपतिः प्रतिकर्तव्यः स्यात्।

**शूर्पणखा**—अज्ज, ण खु मोट्टिमं परिहरन्तो अण्णो उवाओ लक्खीअदि।

---

त्यर्थः। यथा—'स्थानिवदादेशोऽनल्विधौ' इति सूत्रसामर्थ्यादादेशः स्थानित्वं न जहाति तथा कौशिकस्य ब्राह्मणादेशोऽपि स्थानिवत्त्वेन क्षत्रकार्यं मारणादिस्वरूपं न त्यजतीत्यर्थः। स्वभावमधुरो निसर्गसुन्दरः। औत्पत्तिकेनोत्पत्तिभवेन क्षात्रमयेन। ब्राह्मण्येन ब्रह्म तपोधनमुपनयनव्रतं वा तद्भवेन। ब्राह्मणेन विशुद्धमातापितृयोनिजत्वेन। एतत्रितयानुगतेन जन्मना त्रिजातकाज्जन्मत्रययोगिनः। अथ च त्रिजातकमिति गालिदानम्। मुनेरिति 'आख्यातोपयोगे' इत्यपादानसंज्ञा। अधीयानोऽध्ययनं कुर्वन्। 'इङ् अध्ययने'। शानच्। अधरीणं निन्दितम्। 'अवरीणो धिक्कृतः' इत्यमरः। परिणंस्यते स्वयं परिणतो भविष्यति। सदपि वस्त्वसत्संसर्गात्सत्कार्यं जहातीत्याह— **अविनयभुवामिति**। भवत्यस्मादिति भूः स्थानम्। शमाय शान्तये। प्रकृतिकुटिलात्स्वभाववक्रात्। खलत्वविवृद्धये दौर्जन्यसंपत्तये। दृष्टान्तेन स्वोक्तं द्रढयति—असौ विषधरफणारत्नालोकः फणिभयपोषकाणां तमसामन्धकाराणामुच्छेदक्षमोऽस्तु तथापि भयं पुनर्भृशायते। अभृशं भृशं भवति। अत्यर्थं भवति। 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इति क्यङ्। 'फणिभयभृतां मास्तूच्छेदक्षमः' इति पाठे फणिभयपोषकाणां तमसामुच्छेदक्षमो मास्तु भयं पुनर्भृशायतेऽत्यर्थेन भवति। तस्मादित्यर्थः। यद्वा तमसां छेदक्षमो मास्तु फणिभयभृतां जनानां भयं पुनरत्यर्थेन भवति। ये सर्पाद्बिभ्यति तेषां ततो भयमेव विषधरसंबन्धाद्भवतीति भावः। उत्तिष्ठमानो यत्नं कुर्वाणः। 'उदोऽनूर्ध्वकर्मणि' इति तङ्। प्रतिकर्तव्यः प्रतिविधातव्यः। **अज्जेति**। 'आर्य, न खलु मोट्टिमं परिहरतोऽन्य उपायो लक्ष्यते' [इति च्छाया।] इह मोट्टिमं बलात्कारे देशी। तथा च बलात्कारं

---

१. 'अधीयन्नधरीणशीलः'. २. 'अस्तु च्छेद-'. ३. 'वर्णितेन'. ४. 'कथं वेत्थमिदानीम्'.

**माल्यवान्**—वत्से, मा मैवम्। महादोषो हि तादृशेन धर्मविजयिना वीरप्रवालेन परिगृहीताया वैदेह्याः प्रसह्यापहारः। पश्य।

दोःस्तम्भद्वयदर्पडम्बरमिति स्पष्टं न विस्पन्दते
वैदेहीकरबन्धसूचनमिति प्रस्तौति न व्रीडया।
इत्यालोच्य कृतस्मितैर्मुनिभिरादिष्टेन येन क्षणा-
दात्तं वन्दितमाञ्चितं च सहसा भग्नं च तादृग्धनुः॥ १३॥

तत्कथं च तस्मिन्निशाचरनाथमाततायिनमनुजानीमः।

**शूर्पणखा**—(निःश्वस्य।) जधा णिरूविदं मादामहेण। अहो कालस्स माहप्पं, जं दाणिं तिहुअणजअलच्छीलीलावन्दिआरे महाराअरावणेवि एव्वं मन्ती अदि।

**माल्यवान्**—वत्से,

मुनिरपि गुरुर्दिव्यास्त्राणां बभूव दिवौकसा-
मजगवधनुर्भङ्गे तावानहो स महोत्सवः।

---

विना नान्या युक्तिरिति भावः। मा मैवम्। वदेत्यध्याहार्यम्। महान्दोषो यस्मात्स महादोषः। धर्मेण विजयी धर्मविजयी। प्रवालोऽतिशिशुरङ्कुरो वा। परिगृहीता विवाहिता। प्रसह्य हठात्। **दोःस्तम्भेति**। अयं राम इत्यध्याहार्यम्। दोःस्तम्भद्वयदर्पाणां डम्बरो विस्तारः स्यादिति कृत्वा स्पष्टं व्यक्तं न विस्पन्दते न प्रकाशयति। वैदेहीकरबन्धसूचनं सीताविवाहकथनं स्यादिति कृत्वा व्रीडया लज्जया न प्रस्तौति नाख्याति। इत्यालोच्य ज्ञात्वा कृतास्मितैर्मुनिभिः शतानन्दादिभिरादिष्टेन येन रामेण तादृगतिदुराकर्षणं धनुः सहसात्तं गृहीतम्, वन्दितं नमस्कृतम्, आञ्चितं नामितम्, अनन्तरं भग्नमिति। येन महेशधनुरारोप्य भग्नं तस्य कलत्रापहरणेऽवश्यमनिष्टं स्यादिति भावः। ननु 'मुनिभिरा' इत्यत्र द्वादशेऽक्षरे यतिभङ्गो दोषः, पदमध्ये यतेरसंभवादिति चेत्। न। विशेषगुणेनादोषत्वात्। केचित्पाठविश्रामं यतिमाहुः। तथा चोक्तम्—'विश्रामो यतिरुच्यते' इति। वस्तुतस्तु यत्र श्रवणोद्वेगो बन्धपारुष्यादिकं वाक्यवान्तरेण प्रच्छाद्यते तत्र न दूषणम्। तथा च मुनिभिरादिष्टेनेत्यत्र न श्रवणोद्वेगो न वा बन्धपारुष्यादिकमिति न दोषः। तस्मिन् रामे। आततायी कलत्रापहारी। 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः॥' इति स्मृतिः। **जधेति**। 'यथा निरूपितं मातामहेन। अहो कालस्य माहात्म्यम्, यदिदानीं त्रिभुवनजयलक्ष्मीलीलाबन्दीकारे महाराजरावणेऽप्येवं मन्त्र्यते' [इति च्छाया।] इह मातामहो मातृपिता। **मुनिरपीति**। एतां जगत्त्रयीं

---

१. 'निजधर्मविजयिना'; 'धर्मविजयिना'. २. 'अञ्चितम्'. ३. 'कथं तस्मिन्'. ४. 'दीर्घमुष्णं च निश्वस्य'.

रघुपतिगुणक्रीतामेतामवेहि जगत्त्रयीं
विपरिणमते दौर्जन्यं तु प्रभुत्वपदेन नः ॥ १४ ॥

**शूर्पणखा**—को संदेहो। तस्सिं विवाहमहूसवे सव्वं मए पच्चक्खीकिदम्।

**माल्यवान्**—तदेवमेकलोष्टवधः स्यात्। तथाहि। मिथिलां[1] प्रविश्य बलादाकृष्यमाणे कलत्रे कथं तितिक्षेत[2] रघुराजपुत्रः[3]। तं चोत्तिष्ठमानं पौरजानपद[4]प्रकृतयोऽप्यनुतिष्ठेरन्। किमङ्ग[5], संबन्धिबान्धवाः। यथोक्तम्[6]—'आरण्योऽग्निरिव[7] दुःसहदुःखामर्षजं तेजो विक्रमयति, मण्डलस्य चानुग्राह्यो भवति' इति।

**शूर्पणखा**—(दीर्घमुष्णं च निःश्वस्य।) अज्ज, किं दाणिं जुत्तम्।

---

रघुपतिगुणक्रीतां रघुपती रामस्तस्य गुणेन क्रीतामवेहि जानीहि। 'क्रीतात्करणपूर्वात्' इति ङीष्। कुतः। मुनिरपि विश्वामित्रोऽपि दिव्यास्त्राणां गुरुरुपदेष्टा बभूव। दिवौकसां देवानामजगवधनुर्भङ्गे पिनाकनामकहरधनुर्भङ्गे तावानेव महोत्सवः। धनुष्यभंगे यादृश उत्सव आसीत्तादृश एव भग्नेऽपीत्यर्थः। पिनाकभङ्गे देवानां क्रोधस्योचितत्वात्तं विहायोत्सवाचरणे रामेऽनुरक्ता देवा इति भावः। एतादृशे रामे सत्येव नोऽस्माकं प्रभुत्वशब्देन दौर्जन्यमात्रं विपरिणमते विपर्यस्यति। कर्मव्यतिहारे तङ्। न त्वैश्वर्यादिकं भविष्यतीति भावः। 'पिनाकोऽजगवं धनुः' इत्यमरः। **को संदेहो इति**। 'कः संदेहः। तस्मिन्विवाहमहोत्सवे सर्वं मया प्रत्यक्षीकृतम्' [इति च्छाया।] **तदेवमिति**। कलत्रापहरणे सतीत्यर्थः। **एकलोष्टवध इति**। लोष्टं मृत्तिकाखण्डम्। यथा लोष्टद्वयास्फालनेनान्यतरस्फुटनं भवति तथा यो वधः स एकलोष्टवध इत्युच्यते। मिथिलातः सीतायामपहृतायां रामो रावणो वा न भवेदित्यर्थः। यद्वा बहुभिर्जनैर्मिलित्वा लोष्टेनैकेन य एकस्य वधः क्रियते स एकलोष्टवधो भण्यते। आकृष्यमाण आनीयमाने। तितिक्षेत क्षमेतेत्यर्थः। 'तिज निशाने'। 'गुप्तिज्किद्भ्यः सन्' इति क्षमायां सन्। उत्तिष्ठमानं यत्नं कुर्वाणम्। **किमङ्गेति**। किं पुनरित्यर्थः। अङ्ग संबोधने वा। 'अङ्ग संबोधने हर्षे पुनरर्थे च दृश्यते' इति मेदिनीकरः। **यथोक्तमिति**। चाणक्यादाविति शेषः। अरण्यं वनं तत्र भव आरण्यः। विक्रमयत्यतिशक्तिकयति। मण्डलस्य राष्ट्रस्य। द्वादशराजचक्रस्य वा। अनुग्राह्योऽनुगम्यः। **अज्जेति**। 'आर्य', किमिदानीं युक्तम्' [इति च्छाया।] वनौकसो वानराः। वसतीति वास्तव्यः।

---

१. 'मिथिलायाम्'. २. 'तितिक्षते'. ३. 'राजपुत्रः'. ४. 'जानपदाः'. ५. 'किमुताङ्ग'. ६. 'तथोक्तम्'. ७. 'अग्निरिव दुःखा–'.

**माल्यवान्**—[1]शृणु वत्से, कार्यज्ञासि । अस्ति वनौकसां मन्त्री जाम्बवान् । स मतङ्गाश्रमवास्तव्यामुपसृत्य [2]श्रमणां नाम सिद्धशबरीमभ्यर्थितवान् । यथास्य वालिनो द्वैराज्येन क्षीणा लुब्धै[3]रपवारिताः प्रकृतयः किष्किन्धायां [4]कुमारसुग्रीवमभिषेक्ष्यमाणाः सामवायिकं रामभद्रमपेक्षन्ते ।

**शूर्पणखा**—(सातङ्कम् ।) कधं खत्तिअपोदओ वालिणिग्गहे वि सहाओ समीहीअदि । तदो तदो ।

**माल्यवान्**—ततश्चायोध्यातः कैकेय्या भरतवार्ताहरणाय प्रेषिता मन्थरा नाम [5]स्थविरदासी [6]कठोरतरणितापव[7]ज्रानलज्वालावलीढजीविता मिथिला[8]प्रान्तरे तिष्ठतीति नि[9]दाघकिरणान्तेवासी सतीर्थ्यमृषिं याज्ञवल्क्यमुपस्थाय [10]संप्रत्येव निमेषमात्रान्निवृत्तो हनूमान्कथयति । अतस्त्वमप्यस्मदनुरोधेन [11]हनूमत्प्रत्यवेक्षितस्वशरीरा परपुरप्रवेशविद्यया मन्थराशरीर[12]मधितिष्ठन्ती मिथिलामुपेत्य प्रत्ययिता संविधानकमिदं दशरथगोचरीकरि[13]ष्यसि । इत्थं[14]भाविना गुरुनिदेशचर्याप्रसङ्गेन पङ्कपाषाणविषमकण्टकव्या[15]लकुलव-

---

'वसेस्तव्यत्कर्तरि णिच्च' इति तद्वृद्धिः । क्षीणा अधना अप्रधाना वा । लुब्धा लोलुपाः । अपवारिता अपकृताः । प्रकृतयः शिष्टाः । समवायः सैन्यसमूहस्तं समवैत्यागत्य मिलतो भवतीति सामवायिकः । 'समवायान्समवैति' इति ठक् । **कथमिति ।** 'कथं क्षत्रियपोतको वालिनिग्रहेऽपि सहायः समीह्यते । ततस्ततः' [इति च्छाया ।] अत्र कथमाश्चर्ये । निग्रहो मारणम् । स्थविरदासी वृद्धचेटी । कठोरः परिणतो दुःसहो वा । अवलीढं गृहीतम् । 'प्रान्तरं दूरशून्योऽध्वा' इत्यमरः । निदाघकिरणान्तेवासी सूर्यशिष्यः । 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः । सतीर्थ्यमेकगुरुम् । 'सतीर्थ्यास्त्वेकगुरवः' इत्यमरः । उपस्थायाभिवाद्य । परपुरमन्यकायम् । प्रत्ययिता जातसंप्रत्यया । संविधानकं रामभद्रवनप्रेषणभरतराज्यदानरूपम् । निदेश आज्ञा । 'आज्ञा निदेश आदेशः' इत्यमरः । चर्याचरणम् । प्रसङ्गः प्रसक्तिः । विषमं महत् । व्यालो

---

१. '(चिन्तां नाटयति ।) शृणु वत्से'. २. 'श्रवणाम्'. ३. 'अपचिताः'. ४. 'कुमारम्'. ५. 'स्थविरतरा'. ६. 'कठोरतरतरणि'. ७. 'वज्रानलावलीढ–'. ८. 'प्रान्ते'. ९. 'निदाघकिरणव्याकरणान्तेवासी'. १०. 'संप्रत्येव'. ११. 'हनूमदवेक्षित'. १२. 'उपतिष्ठन्ती'. १३. 'कुरुष्व'. १४. 'भाविना च'. १५. 'व्यालबहलाम्'.

हुलामरण्यानीमनुप्रविष्टः सर्वथा वैदेशिको राजपुत्रः कार्यगौरवान्नियतमेव वालिवधपूर्वकेण प्रतीकारसंधिना संबन्धेन सुग्रीवमुपगृह्णीयादिति।

**शूर्पणखा**—(सकौतुकम्।) अज्ज, किं तं संविहाणअम्।

**माल्यवान्**—(कर्णे।) एवमेवम्। (इति कथयति।)

**शूर्पणखा**—(हसन्ती।) अहो वुड्ढरिच्छस्स कुडिलदा। तदो तदो।

**माल्यवान्**—ततश्च सापि शबरयोगिनी सुग्रीवगुणानुरोधेन सर्वमोमित्युरसिकृत्य तदैव विदेहाभिमुखी प्रस्थितेति मे जनस्थानविहारिभिर्निशाचरैरागत्य निवेदितम्। तदमुना च जाम्बवत्प्रयोगेण फलता विराधप्रभृतिभिरधिष्ठितेषु विन्ध्यगिरिगह्वरेषु विहरतो रामस्य सुकरं कलत्रापहरणम्। अस्मदीयास्तु मायाः सुरासुरप्रथमरेखयोधस्य युद्धमुदितविबुधपतिना वितीर्णमायाहरणमन्त्रधारिणो दशरथस्य संनिधौ न प्रभवन्ति।

**शूर्पणखा**—(सविचिकित्सम्।) अज्ज, उवणदस्स एव्वं करीअदि।

---

व्याघ्रादिः सर्पश्च। अरण्यानी महारण्यम्। 'महारण्यमरण्यानी' इत्यमरः। 'इन्द्रवरुण–' इत्यादिना ङीषानुकौ। वैदेशिकोऽन्यदेशसंबद्धः। प्रतीकारसंधिरन्योन्योपकारतो यः संधिः। तदुक्तं चाणक्ये—'मयास्योपकृतं पूर्वमयं मामुपकरिष्यति। इति यः क्रियते संधिः प्रतीकारः स उच्यते॥ उपकारं करोम्यस्य ममाप्येष करिष्यति। अयं वापि प्रतीकारो रामसुग्रीवयोरिव॥' इति। **अज्जेति**। 'आर्य, किं तत्संविधानकम्' [इति च्छाया।] **कर्णे एवमेवेति**। रामभद्रवनप्रेषणभरतराज्यदानरूपं संविधानकमित्यर्थः। **अहो इति**। 'अहो वृद्धऋक्षस्य कुटिलता। ततस्ततः' [इति च्छाया।] इह वृद्धः स्थविरः। ऋक्षो भल्लूकः। उरसिकृत्य स्वीकृत्य हृदये कृत्वा वा। 'अनत्याधान उरसिमनसी' इति गतिसंज्ञा। समासे ल्यप्। सुरासुरयोर्मध्ये प्रथमा रेखा यस्य सः। तथा चाग्रगण्य इत्यर्थः। विबुधपतिर्नाम महाब्राह्मणः। तेन वितीर्णो दत्तः। **अज्जेति**। 'आर्य, उपनतस्यैवं क्रियते' [इति च्छाया।] इहोपनतस्य समीपागतस्य।

---

१. 'संधिना सुग्रीवम्'. २. 'ततः सापि.' ३. 'अनुरागेण सर्वं तथेत्युररीकृत्य तथैव'. ४. 'अमुना जाम्बवतः'. ५. 'फलवता'. ६. 'विहरतः सुकरम्'. ७. 'सुरासुरसमरप्रथमरेखा'. ८. 'विबुधपतिवितीर्ण'. ९. 'श्लोकद्वयं कामन्दकीयनीतिसारस्य नवमसर्गेऽपि वर्तते'.

**माल्यवान्**—(विहस्य ।) वत्से, साधु । वृद्धसंवादिनी ते दृष्टिः । यदाहुः—'यो ह्युपनतस्य पुत्रदारानतिमन्यते तस्योद्विग्नं मण्डलमभावायोपतिष्ठते' इति । किं पुनरस्मासु नैष निसर्गतेजस्वी संश्रयप्रवृत्तिमातिष्ठते ।

**शूर्पणखा**—हूं । अण्णं भणामि । अवि एव्वं करिस्सदि रामभद्दो ।

**माल्यवान्**—कः संशयः । लोकोत्तरं हि किमप्युन्मीलयन्तो जगति—राज्योपभोगेभ्योऽपि बीभत्सन्ते महानुभावाः ।

**शूर्पणखा**—अण्णं वि किं वि अणत्थन्तरं अत्थ पडिदमिति तक्केमि ।

**माल्यवान्**—(सहर्षम् ।) किं तत् ।

**शूर्पणखा**—मए जणअणअरादो णिक्कन्तीए सुदं, जधा खुडिदसिरिकण्ठसरासणस्स दासरहिणो मच्छरेण सअलखत्तिअकिदन्तो परसुरामो परागदोत्ति ।

**माल्यवान्**—(सहर्षम् ।) सर्वमुपपद्यते ।

भुजार्गलितनर्मदामकरचक्रदंष्ट्राङ्कुर-
व्रणप्रकरकर्कशं किमपि बिभ्रदुग्रं वपुः ।

---

अपि तु शरणागतस्याप्रियं न कर्तुमर्हतीति भावः । संवादिनी सदृशी । दृष्टिर्ज्ञानम् । अतिमन्यतेऽपहरति । उद्विग्नं विकलं क्रुद्धं च । मण्डलं स्वचक्रं परचक्रं च । उपतिष्ठते पर्यवस्यति । यत्नं कुरुत इति यावत् । प्रतियत्ने तङ् । निसर्गतेजस्वी स्वभावतेजोयुक्तः । राम इति शेषः । संश्रयप्रवृत्तिमाश्रयेण वर्तनम् । आतिष्ठतेऽङ्गीकुरुते । अपि तु नाङ्गीकुरुत इत्यर्थः । 'आङः स्थः प्रतिज्ञाने' इति तङ् । अयमभिमानो नाम नाट्यालंकारः । 'अभिमानोऽपरित्यागो दुःखोदर्कफलस्य यत्' इति भरतः । हूं प्रश्ने । 'हूं प्रश्नेऽङ्गीकृतौ रोषे' इति विश्वः । **अण्णमिति** । 'अन्यद्भणामि । अप्येवं करिष्यति रामभद्रः' [इति च्छाया ।] इहैवं दण्डकारण्यप्रवेशरूपदशरथवाक्यमित्यर्थः । उन्मीलयन्तः प्रकाशयन्तः । बीभत्सन्ते जुगुप्सन्ते । राज्योपभोगान्निन्दन्तीत्यर्थः । राज्योपभोगेभ्य इति 'जुगुप्साविराम—' इत्यादिनापादानता । बीभत्सन्त इति 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' इति सन् दीर्घश्च । इदानीमेतदङ्कप्रतिपादितमर्थं स्तोतुमुपक्रमते—**अण्णं वीति** । 'अन्यदपि किमप्यनर्थान्तरमत्र पतितमिति तर्कयामि' [इति च्छाया ।] 'मया जनकनगरान्निष्क्रान्तया श्रुतम्, यथा क्षुण्णश्रीकण्ठशरासनस्य दाशरथेर्मात्सर्येण सकलक्षत्रियकृतान्तः परशुरामः परागत इति' [इति च्छाया ।] इह मात्सर्यमीर्ष्या । कृतान्तो यमः । **भुजार्गलितेति** । सोऽसौ मुनिः परशुरामो गुरोर्महेशस्य

---

१. 'साधु वत्से'. २. 'बुद्धिः'. ३. 'अभिमन्यते'. ४. 'वत्से, कः संशयः । लोकोत्तरं किमपि रूपमुन्मीलयन्तः'. ५. 'किं च अण्णं वि'. ६. 'कीदृशं तत्'. ७. 'सहर्षम्' इति पुस्तकान्तरे नास्ति.

स येन परशौ हुतो नृपतिरर्जुनः कौतुका-
दसौ कथमुपेक्षते गुरुधनुर्व्यलीकं मुनिः ॥ १५ ॥

पैरं त्वनेनापि सकलमूर्धाभिषिक्तकैण्ठकाण्डरुधिरावसेकपङ्किलकुठारेण दु-रभिभवो दाशरथिः ।

**शूर्पणखा**—(साभ्यसूयम् ।) अहो दुद्धमुहे तस्सिं खत्तिअवटुए एव्वं संभावेदि मादामहो ।

**माल्यवान्**—वैत्से, नैतज्ज्ञानासि ।

सर्वराजकदुर्धर्षं सर्वदेवमयं धनुः ।
भञ्जता रामभद्रेण विजिग्ये भुवनत्रयम् ॥ १६ ॥

इदानीं तु

राजन्यरुधिराम्भोधिकृतत्रिषवणो मुनिः ।
प्राप्तः परशुरामोऽयं न विद्मः किं करिष्यति ॥ १७ ॥

तदेहि । राजकुलमेव गच्छावः ।

(इति निष्क्रान्तौ ।)

विष्कम्भकः ।

---

यद्धनुः पिनाकस्तस्य व्यलीकं पीडनमप्रियं वा कथमुपेक्षते । अपि तु नायमुपेक्षां करिष्यतीत्यर्थः । येन मुनिनार्जुनः सहस्रार्जुनो नृपतिः कौतुकात्परशौ कुठारे हुतो दग्धः । मारित इति यावत् । कीदृशः । किमप्यतिशयितमुग्रं शरीरं बिभ्रद्दधानः । भुजाभिर्बाहुभिरर्गलिता या नर्मदा नदीभेदस्तस्या मकरो जलजन्तुभेदस्तस्य चक्रं समूहस्तस्य दंष्ट्राङ्कुरस्य दन्ताग्रस्य व्रणप्रकरेण क्षतसमूहेन कर्कशं कठिनम् । पुरा किल बाहुभिर्नर्मदां बद्ध्वा स्त्रीभिः सह जलक्रीडां कुर्वतः सहस्रार्जुनस्याङ्गानि मकरचक्रैः क्षतानीति पुराणम् । बिभ्रदित्यत्र 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' इत्यमरः । पङ्किलः कर्दमयुक्तः । पिच्छादित्वादिलच् । **अहो इति** । 'अहो दुग्धमुग्धे तस्मिन्क्षत्रियबटुक एवं संभावयति मातामहः' [इति च्छाया ।] इह दुग्धमुखोऽतिशिशुः । **सर्वराजकेति** । राजकं क्षत्रियसमूहः । 'गोत्रोक्षोष्ट्रोरभ्र–' इति वुञ् । दुर्धर्षं दुराकर्षम् । विजिग्ये जितम् । 'जि जये' । कर्मणि लिट् । 'सन्लिटोर्जेः' इति कुत्वम् । **राजन्येति** । राजन्यः क्षत्रियः । त्रिषवणं त्रिसंध्यस्नानम् । राजकुलं

---

१. 'परमनेन'. २. 'कण्ठकंदरा'. ३. '(विहस्य ।) नैव तावज्ज्ञानासि'. ४. 'विजितम्'.

(नेपथ्ये ।)

भो भो जनकाग्निहोत्रपरिचारकाः, पाद्यं पाद्यम् । अर्घोऽर्घः ।

आजन्मब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमान-
ज्याघातश्रेणिसंज्ञान्तरितवसुमतीचक्रजैत्रप्रशस्तिः ।
वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्ष्णुवानः पृषत्का-
न्प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ॥ १८ ॥

अपि च ।

एष स्त्रैणकपोलकुङ्कुमलिपिस्तेयातिभीरौ भुजे
बिभ्राणश्चतुरन्तराजविजयि ज्यानादरौद्रं धनुः ।
तूणावेव पुनस्तरां द्रढयति स्वादन्तरस्मात्पटा-
दाकृष्टैः कुशचीरतन्तुभिरभिक्रुद्धो मुनिर्भार्गवः ॥ १९ ॥

---

राजगृहम् । 'राऊल' इति प्रसिद्धम् । अग्निहोत्रमग्निहोमः । पाद्यं पादार्थमुदकमित्यर्थः । अर्घः पूजा । 'अर्घः पूजनमूल्ययोः' इति विश्वः । त्वरया आदराद्वा द्विरुक्तिः । **आजन्मेति** । जामदग्न्यः परशुरामः । प्राप्तोऽस्तीति शेषः । आजन्म जन्मन आरभ्य ब्रह्मचारी । पृथुलो विशालो यो भुजस्तत्र विराजमाना या ज्याघातश्रेणिः प्रत्यञ्चिकाव्रणपङ्क्तिस्तस्याः संज्ञयान्तरिताच्छादिता वसुमतीचक्रस्य भूमण्डलस्य जैत्रप्रशस्तिर्यस्य सः । ज्याघातपङ्क्तिव्याजेन जयप्रशस्तिरिव लिखिता वर्तत इति भावः । घनः कठिनो निरन्तरो वा । व्रणकिणः क्षतमृतमांसचिह्नम् । संक्ष्णुवानस्तेजयन् । 'समः क्ष्णुवः' इति तङ् । पृषत्कान्बाणान् । 'पृषत्कबाणविशिखाः' इत्यमरः । राजन्यगोष्ठ्येव वनगजा इति रूपकम् । मृगयाखेटकम् । जैत्रेति जयतेस्तृजन्तात्प्रज्ञादित्वात्स्वार्थेऽण् । **एष इति** । एष भार्गवो मुनिर्भृगोरपत्यं परशुरामोऽतिक्रुद्धः सन् । पिनाकभङ्गश्रवणादिति भावः । स्वात्स्वकीयादन्तरस्मादुत्तरीयात्पटाद्वस्त्रादाकृष्टैः कुशचीरतन्तुभिः सूक्ष्मवल्कलसूत्रैः करणभूतैः तूणावेव इषुधी कर्मभूतौ पुनस्तरां पुनरपि द्रढयति । किं कुर्वन् । भुजे बाहौ धनुर्बिभ्राणः । कीदृशे । स्त्रैणः स्त्रीसंबन्धी यः कपोलस्तत्र या कुङ्कुमलिपिः कुङ्कुमपत्रावली तस्याः स्तेयेन चौर्येणातिभीरावतिशयितशङ्के । अन्योऽपि स्तेयेन सशङ्को भवति । अनेनापि परशुरामबाहुना क्षत्रियस्त्रीणां कुङ्कुमलिपिश्चोरिता । अतः सशङ्कोऽसावित्यर्थः । यद्वा तस्यास्तेये चौर्येऽतिभीरौ । तदीयभुजे स्त्रीकपोलकुङ्कुमलिपिप्रोञ्छनं न संवृत्तम् । स्त्रीसंबन्धाभावात् । आजन्मब्रह्मचारित्वात् । धनुः कीदृशम् । चतुरन्तराजविजयि चतुःसमुद्रान्तराजविजयीत्यर्थः । 'चतुरन्तरीपविजयि' इति पाठे

---

१. 'क्षत्रस्त्रैण'. २. 'अतिभीमे'; 'अतिरौद्रे'.

(ततः प्रविशति शरचापहस्तः क्रोधोद्धतो[1] जामदग्न्यः ।)

**जामदग्न्यः**—(सखेदम् ।) अहह यथा मृष्टभोजिना[2] कृतान्तेन प्रत्यवसितास्ते सांयुगीनाः । वर्तमाने तु

शस्त्राशस्त्रिकथैव का नवभवद्गीर्वाणपाणिंधमाः
पन्थानो दिवि संकुचन्ति वसुधा वन्ध्या न सूते भटान् ।
लक्ष्मीरप्यरविन्दसौधवलभीनिर्व्यूह[3]पर्यङ्किका-
विश्रान्तैरलिभिर्न कुञ्जरघटागण्डोद्धतै[4]र्मोदते ॥ २० ॥

---

चतुरन्तरीपस्य चतुर्द्वीपस्य । 'द्वीपोऽस्त्रियामन्तरीपम्' इत्यमरः । ज्यानादष्टंकाररूपस्तेन रौद्रं भीषणम् । स्त्रैणेति स्त्रियां भवं स्त्रैणम् । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ् । स्वादिति 'पूर्वादिभ्यो नवभ्यो वा' इति विकल्पेन स्मादादेशविधानात् । अन्तरस्मादिति 'अन्तरं बहिर्योगोपसंव्यानयोः' इत्यन्तरशब्दस्य सर्वनामसंज्ञायां स्मादादेशः । अहह खेदे । मृष्टं स्वादु । कृतान्तेन यमेन । प्रत्यवसिताः खादिताः । 'प्रत्यवसितगिलितखादितप्सातम्' इत्यमरः । सांयुगीना रणे साधवः सहस्रार्जुनप्रभृतयः । 'प्रतिजनादिभ्यः खञ्' । **शस्त्राशस्त्रीत्यादि** । शस्त्रैश्च शस्त्रैश्च प्रहृत्येदं युद्धं वृत्तं शस्त्राशस्त्रि युद्धं तस्य कथैव का । अपि तु न कापि । युद्धवार्ताप्यधुना नास्तीत्यर्थः । सङ्ग्रामे हता ये पार्थिवास्ते नवा नूतना भवन्तो गीर्वाणा देवास्तेषामसंख्याततया संकटगमनादन्योन्यलम्बितं पाणिं धमन्ति तापयन्ति ये पन्थानस्ते संप्रति दिवि व्योम्नि संकुचन्ति न प्रसरन्ति । रणाभावात् । नवभवदित्यत्राभूततद्भावस्याविवक्षितत्वाच्चिवप्रत्ययाभावः । विकल्पो वा तद्विधेः । वसुधा पृथ्वी वन्ध्या । प्रयोजकापत्याप्रसवात् । यत एव वन्ध्यात एव भटान्वीरान्न सूते । लक्ष्मीरपि जयश्रीरपि कुञ्जरघटा हस्तिसमूहस्तस्य गण्डस्थलनिर्गतैरलिभिर्भ्रमरैः सह न मोदते । किं त्वरविन्दसौधवलभीनिर्व्यूहपर्यङ्किकाविश्रान्तैर्भ्रमरैः सह । सौधस्य वलभी उपरिकुटी तस्यां यो निर्व्यूहो नागदन्तकः । 'खुंटा' इति प्रसिद्धः । स एव पर्यङ्किकाल्पखट्वा इति समासं कृत्वा पश्चादरविन्दमेव तादृशी पर्यङ्किका तस्यां विश्रान्तैरिति समासः । अरविन्दस्य विशिष्टपर्यङ्किकारूपणम् । सुखस्थानत्वात् । तथा च युद्धाभावाद्गजघटागण्डोद्गतालीनामप्रचारात्तैः सह संबन्धो न लक्ष्म्याः । किं तु पद्मस्थायिभ्रमरैरेव सह । तत्र तेषां वासस्योत्सर्गसिद्धत्वात् । यद्वारविन्देन सह पर्यङ्किकया द्वन्द्वसमासः । तथा चारविन्दस्थैः पर्यङ्किकास्थैश्चेत्यर्थः । अरविन्दे सहजात्, पर्यङ्किकायां तु सुगन्धिद्रव्यगन्धाकृष्टत्वादवस्थानमिति भावः । यद्वा निर्व्यूहो द्वारम् । वलभ्या द्वारमित्यर्थः । 'निर्व्यूहः शेखरे द्वारे निर्व्यूहो नागदन्तके' इति धरणिः । 'पर्यङ्किका तु खट्वा स्यात्' इति मेदिनीकरः । शस्त्राशस्त्रीत्यत्र 'तत्र तेनेदमिति सरूपे' इति बहुव्रीहिः । 'इच्कर्मव्यतिहारे' इतीच्समासान्तः । 'अन्येभ्योऽपि

---

१. 'क्रुद्धोद्धतः'. २. 'मिष्ट'. ३. 'निर्यूह'. ४. 'उत्कटैः'.

(सविमर्शाश्चर्यम् ।)

शंभुर्यद्गुणवल्लरीमुपनयत्याकृष्य कर्णान्तिकं
भ्रश्यन्ति त्रिपुरावरोधसुदृशां कर्णोत्पलग्रन्थयः ।
स्वं चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो
भिद्यन्ते वलयानि दाशरथिना तेद्भग्नमैशं धनुः ॥ २१ ॥

(सरोषविकटं परिक्रामन् ।) भो भो विदेहाः, क रामो दाशरथिः ।

यस्मिन्नर्जुनदोःसहस्रमलकप्रोद्गच्छदस्रच्छटा-
जिह्वाले जुहवांबभूविम रुषा राजन्यसत्तामपि ।
सोऽयं प्राक्कवलग्रहस्य विघसीभूतेष्वपि क्षत्रिय-
क्षुद्रेषु क्षुधितश्चिरेण परशुस्तेनायमन्विष्यते ॥ २२ ॥

(ततः प्रविशति सधैर्यप्रमोदो दाशरथी रामः ।)

**रामः—**

साकं शक्तिधरेण तत्रभवतो देवाद्भवानीपते-
र्यः सम्यञ्चमवाप चापनिगमं सम्यञ्चि सामानि च ।

---

दृश्यते' इति दीर्घः । पाणिंधमा इति 'उग्रंपश्येरंमदपाणिंधमाश्च' इति निपातः । **शंभुर्यदिति** । यस्य धनुषः । गुणवल्लरीं गुणलताम् । कर्णान्तिकं कर्णसमीपम् । भ्रश्यन्ति पतन्ति । अवरोधोऽन्तःपुरम् । सुदृशां स्त्रीणाम् । स्वं स्वकीयम् । प्रकोष्ठकं कफोणेरधोभागम् । इमां गुणवल्लरीम् । तासां त्रिपुरावरोधसुदृशाम् । अहो आश्चर्ये । येन धनुषा तासां पतिवधनिश्चयात्कर्णोत्पलाद्यधारणमिति भावः । अन्यस्य कर्णघातेनान्यासां कर्णोत्पलभ्रंशः, अन्यस्य प्रकोष्ठास्फालनेनान्यासां वलयभ्रंश इत्याश्चर्यम् । विरोधनामायमलंकारः । भिद्यन्त इति कर्मकर्तरि तङ् । 'भूभुजामन्तःपुरं स्यादवरोधनम्' इत्यमरः । **यस्मिन्निति** । यस्मिन्परशौ । रुषा क्रोधेन । राजन्यस्य क्षत्रियस्य । सत्तां विद्यमानताम् । सामस्त्यमिति यावत् । यद्वा सत्तां गुणतया व्यवस्थिताम् । तथा गुणीभूता अपि क्षत्रिया हता इति भावः । यद्वा सत्तां स्वरूपम् । तथा च स्वरूपनाशे सर्वे एव नष्टा इति भावः । वयं जुहवांबभूविम हुतवन्तः । सोऽयं परशुः क्षत्रियक्षुद्रेषु सत्सु चिरेण क्षुधितो यतस्तेन हेतुनायं क्षत्रियो रामोऽन्विष्यतेऽनुसंधीयते । मयेति शेषः । कीदृशेषु । प्राक्कवलग्रहस्य प्राथमिककवलग्रहस्य विघसीभूतेषु । भोजनशेषभूतेषु । कीदृशे परशौ । अर्जुनः कार्तवीर्यस्तस्य दोःसहस्रमेव नलकं मांसादिवेधकलोहशलाका तस्मात्प्रोद्गच्छन्ती यास्रच्छटा रुधिरच्छटा सैव जिह्वा । लोहितत्वात् । तद्योगाज्जिह्वाले ।

---

१. 'शंभौ'. २. 'रुग्णं तदीदृग्धनुः'. ३. 'अद्य'. ४. 'सधैर्यसंभ्रमो रामः'.

शूराणां च तपस्विनां च परमां काष्ठामधिष्ठास्नुभि-
स्तेजोभिर्भगवानसौ भृगुपतिर्दिष्ट्याद्य दर्शिष्यते ॥ २३ ॥

**जामदग्न्यः**—(सखेदोपालम्भमात्मानं प्रति ।)

भस्माङ्कुरेति खुरलीकलहे कुमार-
मप्याक्षिपन्परुषरोषरसान्धचेताः ।
दृष्टोऽस्मि यः कृतमिथोहसितं शिवाभ्यां
तच्चापभङ्गमपि हा सघृणः शृणोमि ॥ २४ ॥

(विमृश्य च ।) अहो मामरण्यनिवासिनमुपश्रुत्य दुरात्मना रघुकुटुम्बकेन दूर-मुच्छ्वसितम् । (किंचिदुच्चैः ।)

रे काकुत्स्थाः कथं वः श्रुतिविषयमयं नागमद्भार्गवीयो
दुःसामन्तापचारप्रचितपितृवधामर्षनिस्तारबन्धुः ।

---

'प्राणिस्थात्–' इत्यादिना लच् । जुहवांबभूविमेत्यत्र 'भीहीभृहुवां श्लुवच्च' इत्याम् । श्लुवद्भावश्च । क्षत्रियक्षुद्रेष्विति 'क्षुद्राजातिः' इति समासः । 'अमृतं विघसो यज्ञशेषभोजनशेषयोः ।' इति मेदिनीकरः । **साकमिति ।** असौ भगवान्भृगुपतिः परशुरामो दिष्ट्या भाग्येन दर्शिष्यते द्रष्टव्यः । मयेति शेषः । यः शक्तिधरेण कार्तिकेयेन सह तत्रभवतो मान्याद्भवानीपतेर्देवान्महेशात्सम्यञ्चं सम्यग्रूपम् । 'समः समि' इति सम्यादेशः । चापनिगमं धनुर्वेदं सम्यञ्चि सामानि चावाप प्राप्तवान् । तेजोभिरिति 'इत्थंभूतलक्षणे तृतीया' । शूराणां च तपस्विनां च परमामतिशयितां काष्ठामवधिमधिष्ठास्नुभिरधिष्ठानशीलैः । चकारौ समुच्चयार्थौ । 'शक्तिधरः कुमारः क्रौञ्चदारणः' इत्यमरः । दर्शिष्यत इति कर्मणि लृट् । 'स्यसिच्सीयुट्–' इत्यादिना चिण्वदिट् । अधिष्ठास्नुभिरिति 'ग्लाजिस्थश्च ग्स्नुः' । 'उपसर्गात्सुनोति–' इति षत्वम् । अतिक्रोधेन रामोक्तमौचितीमश्रुत्वैवाह— **भस्मेति ।** हा कष्टं सोऽहं सघृणो गर्हितः कृपावान्वा, तच्चापभङ्गं तस्य शिवस्य चापभङ्गं धनुर्भङ्गमपि शृणोमि । 'मसृणः' इति पाठे मन्द इत्यर्थः । स कः । योऽहं परुषं निष्ठुरोक्तिः, रोषरसश्च ताभ्यामन्धं मुग्धं चेतो यस्य तादृशः सन् । खुरलीकलहे शस्त्राभ्यासकलहे प्रकृतत्वाद्भस्माङ्कुर हे इति कृत्वा कुमारं कार्तिकेयमप्याक्षिपन्सन् । शिवाभ्यां भवभवानीभ्यामयमहो महारोषणो मामपि गुरुं गुरुपत्नीं च न गणयति, प्रत्युत कोपान्निन्दतीत्याशयेन कृतमिथोहसितं कृतान्योन्यहासं यथा स्यादेवं दृष्टोऽस्मि । भस्माङ्कुरो नष्टतपस्विसुतः । 'अभ्यासः खुरली योग्या' इति हारावली । परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ तु वाच्यवत् ॥' इति मेदिनीकरः । शिवाभ्यामिति शिवश्च शिवा च शिवौ ताभ्याम् । 'पुमान्स्त्रिया' इत्येकशेषः । अहो कष्टे । रामासंनिधानभ्रमादाह—**रे काकुत्स्था इति ।**

---

१. 'अधिष्ठानुभिः'. २. '(विमृश्य ।) अहो नु खलु मामरण्यवासिनम्'.

वारानासन्नविंशान्विशसितविषमक्षत्रजातिप्ररोहः

क्रोधादुत्कृत्तगर्भामिषरुधिरवसाविस्रगन्धिः कुठारः ॥ २५ ॥

**रामः**—(दृष्ट्वा सहर्षबहुमानम् ।)

जेतारं दशकंधरस्य रभसाद्दोःश्रेणिनिःश्रेणिका-

तुल्यारूढसमस्तलोकविजयश्रीपूर्यमाणोरसम् ।

यः संख्ये निजघान हैहयपतिं शत्रोर्मुखं दृष्टवा-

न्यः पृष्ठं ददतोऽपि षण्मुखजये सोऽयं कृती भार्गवः ॥ २६ ॥

(क्षणं च निर्वर्ण्य सस्मितम् ।) अहो संकीर्यमाणानेकरसानुभावगम्भीरमधुरोऽय-मस्याभोगः । तथाहि ।

---

रे इति नीचामन्त्रणे । ये काकुत्स्थाः काकुत्स्थकुलोद्भवा राजानः, अयं भार्गवीयो भार्गवसंबन्धी कुठारः शस्त्रविशेषो वो युष्माकं श्रुतिविषयं श्रवणपथं नागमन्न गतः । यतः प्रगल्भा भवन्त इति शेषः । कीदृशः कुठारः । दुःसामन्तस्य- दुष्टाधीश्वरस्य अर्थात्सहस्रार्जुनस्यापचारेणापराधेन प्रचित उपचितः । कृत इति यावत् । पितृवधस्तज्जन्यामर्षस्य निस्तारे बन्धुर्मित्रम् । पूर्वं सहस्रार्जुनेन जमदग्निर्हतः, अनन्तरं पितृवधामर्षात्परशुरामेण क्षत्रिया हता इति पुराण एव स्फुटम् । आसन्नविंशानेकविंशतिसंख्याकान्वारान्विशसितो मारितो विषमक्षत्रजातेः प्ररोहोऽङ्कुरो येन सः । पुनः कीदृशः । क्रोधादुत्कृत्तः खण्डितो यो गर्भः । अर्थात्क्षत्रियस्त्रीणाम् । तस्यामिषरुधिरवसाभिर्विस्रगन्धिरामगन्धिः । ननु 'विस्रं स्यादामगन्धि यत्' इत्यादिर्विस्रशब्देनैवामगन्धिप्राप्तेः किमर्थं पुनर्गन्धिपदोपादानमिति चेत् । न । यत्र पर्यायशब्दोपादानं तत्रातिशयित एवार्थो गम्यत इत्युक्तत्वात् । आसन्नविंशानिति आसन्ना विंशतिर्येषाम् । 'संख्ययाव्ययासन्न-' इत्यादिना बहुव्रीहिः । 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् । 'तिविंशतेर्डिति' इति टिलोपः । आमिषं मांसम् । 'मांसं क्रव्यमामिषम्' इति हारावली । सामन्तः कतिपयदेशाधिपः परुषं वदन्तमपि स्वमहिम्ना स्तौति—**जेतारमिति** । सोऽयं कृती युद्धकुशलो भार्गवः परशुरामः । अस्तीति शेषः । यः संख्ये सङ्ग्रामे हैहयपतिं सहस्रार्जुनं निजघान हतवान् । कीदृशम् । दशकंधरस्य रावणस्य जेतारम् । कीदृशस्य । रभसाद्दोःश्रेणिरेव भुजपङ्क्तिरेव निःश्रेणिकाधिरोहिणी । 'कटकली' इति ख्याता । तत्र तुल्यमेकदैवारूढा या समस्तलोकविजयश्रीस्तया पूर्यमाणमुरो यस्य तस्य । रभसो हर्षः । स च तुल्यारोहेण जनितः । यः षण्मुखजये कार्तिकेयजये शत्रोः कार्तिकेयस्यैव पृष्ठं ददतोऽपि मुखं दृष्टवान् । षण्मुखस्य पश्चादपि मुखसंभवादिति भावः । 'निःश्रेणिस्त्वधिरोहिणी' इत्यमरः । संकीर्यमाणः स्वयं संकीर्णीभवन् । कर्मकर्तरि

जटां धत्ते मूर्धा परशुधनुषी बाहुशिखरं
प्रकोष्ठो रौद्राक्षं वलयमिषुदण्डानपि करः।
प्ररूढप्रौढास्त्रव्रणविकटरौद्राद्भुतमिदं
प्रशान्तामैणेयीं त्वचमपि च वक्षः कलयति ॥ २७ ॥

(इत्युपसर्पति।)

**जामदग्न्यः**—(विलोक्य।) [1]कथमयमसौ श्रूयमाणगुणा[2]नुकल्पिताकारसंवादी दाशरथिः। साधु रे राजन्यपोत, साधु।

सविधमुपसरन्समूलकाषं कषितनृपान्वयमद्य मां धिनोषि।
हरिमिव करिकुम्भकूटकोटिप्रकटकठोरनखाङ्कुरं कुरङ्गः ॥ २८ ॥

**रामः**—(सस्मितम्।) भगवन्भार्गव, [3]गुरुगर्भरूपयोरेतावदेवान्तरम्। किं च[4]।

आदेष्टा भगवान्भृगुर्जननयोरौत्पत्तिकव्राह्मयो-
र्देवो धूर्जटिरस्त्रकर्मणि गुरुर्वीर्ये च दूरेगिराम्।

---

लट्। आभोगः शरीरपरिपूर्णता। संकीर्यमाणानेकरसत्वमेवं स्फोरयति—**जटामिति**। मूर्धा शिरो जटां धत्ते। बाहुशिखरं कर्तृ, परशुश्च धनुश्च परशुधनुषी ते कर्मभूते। सर्वत्र कलयतीत्यनेनान्वयः। जनितान्वयस्यापि पुनरन्वय आकाङ्क्षावशात्। आवृत्तिर्वा कलयति पदे। रुद्राक्षस्येदं रौद्राक्षं वलयं जपमालाम्। प्ररूढमुत्पन्नम्। विकटे स्फुटे रौद्राद्भुते रसौ यत्र तत्। एण्या विकार ऐणेयी। 'एण्या ढञ्'। वक्षो हृदयं कर्तृ। कलयति दधातीत्यर्थः। अनुकल्पितोऽनुगतः। आकारो वेषो रूपं वा। 'यत्राकृतिस्तत्र गुणा वसन्ति' इति नीतेः। रे आक्षेपे नीचामन्त्रणे वा। बालकाभिमानेन रामं तर्जयन्नाह—**सविधमिति**। सविधं समीपमुपसरन्नागच्छंस्त्वं मां धिनोषि प्रीणयसि। कीदृशम्। समूलकाषं समूलं कषितो हतो नृपान्वयः क्षत्रियवंशो येन तम्। कमिव कः। हरिमिव कुरङ्गः। यथा कुरङ्गो हरिणो हरिं सिंहं प्रीणयति तथा त्वं मामित्यर्थः। तथा च यथा हरिणमारणे सिंहस्य न काप्यशक्तिस्तथा भवद्विनाशे ममेति भावः। कीदृशम्। करिणां हस्तिनां कुम्भो गण्डस्थलं तस्य कूटं समूहः शिखरं वा। 'कूटं शिखरसंघयोः' इति धरणिः। तस्य कोटिः संख्याभेदस्तत्र प्रकटः स्फुटः कठोरः कठिनः। विदारक इति यावत्। नखाङ्कुरो यस्य तम्। समूलकाषमित्यत्र 'समूलनिमूलयोः कषः' इति णमुल्। 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' इति कषेरेवानुप्रयोगः। गुरुर्महान्। गर्भरूपो युवा। अन्तरं विशेषः। **आदेष्टेति**। हे अप्रतिमानुभाव अधिकपराक्रम, भवते

---

१. 'आः, कथमसौ'. २. 'गुणानुरूपकल्पिताकार—'. ३. 'गुरुगर्भयोः'; 'गुरुभर्गयोः'. ४. 'तु'.

सप्तद्वीपवतीं ददद्भुवमभिप्रैषि द्विजान्कश्यप-
प्रायानप्रतिमानुभाव भवते कस्मैचिदस्मै नमः ॥ २९ ॥

**जामदग्न्यः**—अरे क्षत्रियडिम्भ, तवानेन सत्त्वसौजन्यपौरुषोत्कर्षेण किमप्यन्तराप्यायितोऽस्मि । किं तु ।

नाराचैः कृतवीर्यनन्दनवधूबाष्पप्रियंभावुकै-
रुत्पाद्य क्षतजोदमर्णवमथ न्युप्तं पितृभ्यां पयः ।
संप्रत्यस्य समस्तबाहुजभुजः क्रोधस्य निर्वास्यतः
क्षुन्दानो धनुरैन्दुशेखरमहो जातो भवानिन्धनम् ॥ ३० ॥

**रामः**—(स्मित्वा ।) भगवन्,

बालस्वभावसुलभेन कुतूहलेन
कृष्टं धनुर्भगवतो वृषभध्वजस्य ।
तत्रानुषङ्गिकममङ्गलमीदृशं तु
संवृत्तमत्र न मया गणितस्त्वमासीः ॥ ३१ ॥

तुभ्यमस्मै कस्मैचिदनिर्वचनीयगुणाय नमः । अस्त्विति शेषः । यस्य तवेत्यर्थात् । जननयोर्जन्मनोः । उत्पत्तिभवमौत्पत्तिकम् । अध्यात्मादित्वाट्ठञ् । वटूकरणं व्रतं ब्रह्म । तस्येदं ब्राह्मम् । 'तस्येदम्' इत्यण् । तयोर्भगवान्भृगुरादेष्टा निर्वाहकः । धूर्जटिर्देवो महेशोऽस्त्रविद्यायां गुरुराचार्यः । तु पुनः । वीर्यं पराक्रमो गिरां वाचां दूरे वर्तते । तव पराक्रमस्तु वक्तुमेव न शक्य इति भावः । सप्तद्वीपवतीं भुवं ददत्सन्कश्यपप्रायान्कश्यपप्रभृतीन्द्विजानभिप्रैषि अभिसंबभ्रासि । संप्रदानीकरोषीति यावत् । 'जम्बूप्लक्षकुशक्रौञ्चशाकशाल्मलिपुष्कराः । द्वीपाः सप्ताथ सप्तैव समुद्रा अपि कीर्तिताः ॥ लवणेक्षुसुरासर्पिर्दधिदुग्धपयोमयाः ।' इति पुराणम् । अन्तरभ्यन्तरे । आप्यायितस्तृप्तः । क्रोधवशात्स्तुतिमप्यसहमान आह—**नाराचैरिति** । नाराचैर्बाणैः । क्षतजोदं रुधिरमेव पानीयं यस्य तमर्णवमुत्पाद्य अथानन्तरं पितृभ्यां पित्रे मात्रे च पयो न्युप्तं दत्तम् । संप्रति ममास्य निर्वास्यतो निर्वाणतां यास्यतः क्रोधस्यैन्दुशेखरं धनुः कर्मभूतं क्षुन्दानः क्षुण्णं कुर्वन्भवांनिन्धनं जातः । अन्यस्यापि निर्वास्यतो वह्न्यादेरिन्धनादिदानादुपचयो भवतीति ध्वनिः । कृतवीर्यनन्दनः कृतवीर्यपुत्रः सहस्रार्जुनः । प्रियंभावुक इति अप्रियः प्रियो भवतीति 'कर्तरि भुवः खिष्णुच्खुकञौ' इति खुकञ् । 'रक्तक्षतजशोणितम्' इत्यमरः । 'निवापः पितृदानं स्यात्' इति च । पितृभ्यामिति 'पिता मात्रा' इत्येकशेषः । बाहुजं क्षत्रियं भुङ्क्ते । भुज इति भुजेः क्विप् । तस्य । क्षुन्दान इति 'क्षुदिर् संपेषणे' । रुधादिः । शानच् । **स्मित्वेति** । स्वपराक्रमश्रवणादिति भावः । आनुषङ्गिकं प्रासङ्गिकम् । अनाक-

१. 'अप्रतिमप्रभाव'. २. 'क्षतजोत्थ'. ३. 'भगवन्भार्गव'.

**जामदग्न्यः**—(सरोषम् ।) आः क्षुद्रक्षत्रियडिम्भ, कथं प्रमथनाथप्रथमान्तेवासिनं परशुराममपि भवान्नाजीगणत् ।

महासेनो यस्य प्रमदयमदंष्ट्रासहचरैः
शरैर्मुक्तो जीवन्द्विरिव शरजन्मा समभवत् ।
इमां च क्षत्राणां भुजवनमहादुर्गविषमा-
मयं वीरो वारानजयदुपविंशान्वसुमतीम् ॥ ३२ ॥

**रामः**—शान्तं शान्तम् । प्रसीद भगवन् । अविमृष्यकारितया न गणितोऽसि । न पुनरवलेपात् ।

स्त्रीषु प्रवीरजननी जननी तवैव
देवी स्वयं भगवती गिरिजापि यस्यै ।
त्वद्दोर्वशीकृतविशाखमुखावलोक-
व्रीडाविदीर्णहृदया स्पृहयांबभूव ॥ ३३ ॥

**जामदग्न्यः**—(विहस्य ।) रे[3] राजन्यपोत,

अनुभवपुनरुक्तां मुञ्च नः स्तोत्रचर्या-
मुपनमय तदेतत्कौशिकोपज्ञमस्त्रम् ।

---

लितमित्यर्थः । अमङ्गलं धनुर्भङ्गरूपम् । आः कोपे । प्रमथनाथः शिवः । 'पिनाकी प्रमथाधिपः' इत्यमरः । नाजीगणन्न गणितवान् । 'गण संख्याने' । णिच् । लुङ् । च्लेश्चङ् । 'ई च गणः' इत्यभ्यास ईकारः । **महासेन इति** । महासेनः कार्तिकेयः । 'कार्तिकेयो महासेनः शरजन्मा' इत्यमरः । यस्य मम यमदन्ततुल्यैः शरैर्मुक्तस्त्यक्तः सन् द्विरिव द्वौ वारौ शरजन्मा समभवद्वृत्तः । शरवणे जातत्वात्प्रथमं शरजन्मेति, पुनरपि परशुरामशराज्जातत्वादस्य वारद्वयं शरजन्मत्वमिति भावः । सोऽयं परशुराम उपविंशानेकविंशतिवारान्वसुमतीं पृथ्वीमजयज्जितवान् । क्षत्राणां भुजवनेन महादुर्गामत एव विषमां कठिनाम् । प्रमदो दृप्तोऽतिमत्तो वा । द्विरिति । 'द्वित्रिचतुर्भ्यः सुच्' । उपविंशानिति । उपगता निकटस्था विंशतिर्येषां तान् । एकविंशानित्यर्थः । 'अवलेपः स्मृतो गर्वे' इति विश्वः । **स्त्रीष्विति** । स्त्रीषु मध्ये प्रवीरजननी प्रकृष्टवीरसवित्री । जननी माता । गिरिजा गौरी यस्यै त्वन्मात्रे स्पृहयांबभूव स्पृहां चकार । गौरवं कृतवतीत्यर्थः । 'स्पृहेरीप्सितः' इति संप्रदानता । वशीकृतो निष्पीडितः । विशाखः कार्तिकेयः । 'विशाखः शिखिवाहनः' इत्यमरः । विदीर्णमिव विदीर्णम् । परशुरामेण कौतुकेनैव बाहुपीडनेन

---

१. 'क्षुद्र' इति पुस्तकान्तरे नास्ति. २. 'प्रसीद' इति पुस्तकान्तरे नास्ति. ३. 'रे राजन्यपोत' इति पुस्तकान्तरे नास्ति.

क्षिपति न खलु कालं वीरगोष्ठीविनोद-
प्रियपरशुरयं मे बाहुरुद्यच्छमानः ॥ ३४ ॥

**रामः**—(स्वगतम्।) अये भगवन्तं विश्वामित्रमपि स्पृशति। भवत्वेवं तावत्। (प्रकाशम्। सधैर्यस्मितम्।)

भूमात्रं कियदेतदर्णवमयं तत्साधितं हार्यते
यद्वीरेण भवादृशेन वदति त्रिःसप्तकृत्वो जयः।
डिम्भोऽयं[2] नवबाहुरीदृशमिदं घोरं च वीरव्रतं
तत्कोपाद्विरम[3] प्रसीद भगवञ्जात्यैव पूज्योऽसि नः ॥ ३५ ॥

**जामदग्न्यः**—(सक्रोधकम्पं[4] स्वगतम्।) अहो दुरात्मनोऽस्य[5] राजन्यपोतस्य वीरप्रहतायाः[6] पद्धतेरस्खलितमुक्तिप्रत्युक्तिवैदग्ध्यम्। (प्रकाशम्[7]।) आः पाप, जात्यैव केवलया पूज्यस्ते[8] परशुरामः। कथमद्यापि निरायुधोऽसि।

विनयनिचुलितैर्भवद्वचोभिः किमपि नवं विवृणद्भिरङ्कमन्तः।
अयमजनि करः कृतान्तदंष्ट्राक्रकचकठोरकुठारदुर्निरीक्ष्यः ॥ ३६ ॥

---

कार्तिकेये जिते सति कथमहो मत्पुत्रः पराजयीति सलज्जा या पार्वती योग्यपुत्रप्रसवितृत्वात्त्वमतिधन्यासीति परशुराममातरं स्तुतवतीति फलितोऽर्थः। **अनुभवेति**। अनुभवेन पुनरुक्तां पुनः कथिताम्। उपनमयारोपय। कौशिक आद्य उपदेष्टा यत्र तत्कौशिकोपज्ञम्। 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः। खलु यस्मादर्थे। वीरगोष्ठी युद्धम्। उद्यच्छमान उद्यतो भवन्। 'समुदाङ्भ्यो यमोऽग्रन्थे' इति तङ्। विश्वामित्रमपि स्पृशतीति कौशिकोपज्ञमस्त्रमुपनमयेत्यनेनेत्यर्थः। भवत्वेवमिति। वीरसदृशं कर्माचरिष्यामीति भावः। **भूमात्रमिति**। भूमात्रं भूमण्डलं कियदेतत्। अपि त्वल्पमिदम्। अर्णवमयं समुद्रव्याप्तम्। तद्भूमात्रं साधितं जितं सद्भवादृशेन वीरेण यद्धार्यते तत्रिःसप्तकृत्व एकविंशतिवारान्कृतो जयो वदति कथयति। यदि हि मध्ये तत्र हारितं स्यात्तदा पुनः कथं जयः स्यात्। एकजयेनैव निर्वाहादिति भावः। त्रिरिति 'द्वित्रिचतुर्भ्यः सुच्'। सप्तकृत्व इति 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्'। अयमहं रामो डिम्भो बालकः। नवबाहुः कोमलबाहुः। वीरव्रतं घोरं भयानकम्। तर्हि किमुचितमित्यत आह—तस्माद्धेतोः कोपाद्विरम विरतो भव। नोऽस्माकं जात्यैव ब्राह्मणत्वेनैव त्वं पूज्योऽसि। ब्रह्मवधभयादेव क्षम्यत इति भावः। कोपादिति 'जुगुप्साविराम—' इत्यादिनापादानता। विरमेति 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। वीरप्रहताया वीरशीलितायाः। पद्धतेर्मार्गात्, मार्गस्य वा। उक्तिप्रत्युक्तिवैदग्ध्यमुत्तरप्रत्युत्तरकौशलम्। **विनयनिचुलितैरिति**।

---

१. 'मितम्'. २. 'अहम्'. ३. 'क्रोधात्'. ४. 'सक्रोधकम्पम्' इति पुस्तकान्तरे नास्ति. ५. 'अस्य' इति पुस्तकान्तरे नास्ति. ६. 'महावीर'. ७. 'प्रकाशं सरोषम्'. ८. 'पूजनीयः'.

(उच्चैश्च।) अहो नु खलु भोः,

त्रैलोक्यत्राणशौण्डः सरसिजवसतेर्यः प्रसूतो भुजाभ्यां
स क्षत्रं नाम वर्णः कुलिशकठिनयोर्यस्य दोष्णोर्विलीनः।
ज्वालाजिह्वालकालानलकवलभयभ्रान्तदेवासुराणि
व्यातन्वानो जगन्ति ज्वलति मुनिरयं पार्वतीधर्मपुत्रः॥ ३७॥

(नेपथ्ये।)

भगवन्भार्गव,

अप्रवृत्तिविषयं वितन्वतः क्षत्रशब्दमियमेव मेदिनी।
दक्षिणा तव बभूव यज्वनो मुञ्च संप्रति तु शुष्कमायुधम्॥ ३८॥

**जामदग्न्यः**—अये, प्रशान्तगम्भीरः क एषः। तर्हि जनकेन भवितव्यम्। (तदभिमुखमवलोक्य।) राजर्षे सीरध्वज, भगवतः सूर्यशिष्यात्पुराणवाजसनेयिनो याज्ञवल्क्यादधीतब्रह्मसिद्धान्तो गृहीतवाक्य एवासि। किं तु नायमवसरः शिष्टानुरोधस्य।

---

भवद्वचोभिरयं मम करो हस्तः कृतान्तो यमस्तस्य दंष्ट्रा दन्तः स एव क्रकचः करपत्रं 'करवत' इति प्रसिद्धं तद्वत्कठोरो यः कुठारस्तेन दुर्निरीक्ष्योऽजनि। जात इत्यर्थः। विनयेन निचुलितैः पिहितैः। तथा च विनयेन पिहितम्, परं न त्वभ्यन्तरेऽपि विनयोऽस्तीति भावः। नोऽस्माकं किमप्यनिर्वचनीयं धनुर्भङ्गरूपमङ्कं कलङ्कं विवृणद्भिः प्रकाशयद्भिः। 'अहो नु खलु भोरिति विस्मये संप्रयुज्यते' इति भरतः। **त्रैलोक्येति**। अयं पार्वतीधर्मपुत्रः परशुरामः। हरशिष्यत्वात्तस्य। ज्वलति दीप्यते। अतिक्रुद्ध इति यावत्। कीदृशः। त्रैलोक्यरक्षायां शौण्डः ख्यातो दर्पिष्ठो वा। पुनः कीदृशः। ज्वालैव जिह्वा तद्योगाल्लच्। एतादृशो यः कालानलः प्रलयाग्निः। यद्वा कालो यमः स एवानलोऽग्निस्तस्य कवलनभयेन ग्रासत्रासेन भ्रान्ताः पलायिता देवा असुराश्च येषु। तादृशानि जगन्ति भुवनानि व्यातन्वानो विस्तीर्णीकुर्वन्। यस्य परशुरामस्य दोष्णोर्बाह्वोरधिकरणयोः सः क्षत्रं नाम वर्णः क्षत्रियजातिर्विलीनो लयितः। कीदृशः क्षत्रं नाम वर्णः। सरसिजवसतेर्ब्रह्मणो भुजाभ्यां संप्रसूतो जातः। बाहुजत्वात्क्षत्रियस्य। 'बाहू राजन्यः कृतः' इति श्रुतेः। 'शौण्डो मत्ते च विख्याते दर्पशालिन्यपि स्मृतः' इति विश्वः। दोष्णोरित्यत्र 'पद्दन्नोमास्—' इत्यादिना दोःशब्दस्य दोषन्नादेशः। नेपथ्ये जनकः परशुरामक्रोधादनिष्टमाशङ्कमान आह—**अप्रवृत्तीत्यादि**। यज्वनो याज्ञिकस्य तवेयमेव पृथ्वी दक्षिणा बभूव। तस्माद्धेतोः संप्रति शुष्कं निष्फलम्। कार्याभावात्। आयुधं मुञ्च। त्यजेत्यर्थः। भूमिर्दक्षिणा-

---

१. 'संप्रसूतः'. २. 'भार्गव भार्गव'. ३. 'अप्रवृत्त'. ४. 'प्रशान्तगम्भीरस्वरेण जनकेन'. ५. 'राजर्षे' इति पुस्तकान्तरे नास्ति. ६. 'वागेवासि'.

अवनिमधिकविंशानभ्यवस्कन्द्य वारा-
नवभृथभृतकेभ्यः संप्रदाय द्विजेभ्यः ।
विरमति रमणीयाद्द्वन्द्वयुद्धात्कथं मे
निखिलनृपतिहत्यादृष्टसारः कुठारः ॥ ३९ ॥

(पुनर्नेपथ्ये ।)[1]

भृगुतिलक नमस्ते मुञ्च वैमत्यमेत-
त्कुरु करुणमिदानीं मानसं मानशौण्ड ।
वहति बत किमस्त्रं पुत्रभाण्डेऽपि रामे
त्रिजगदभयदानस्थूललक्षो भुजस्ते ॥ ४० ॥

**जामदग्न्यः**—(रामं प्रति ।) अये, धीरकर्कशस्वरः क एषः ।

**रामः**—(सप्रश्रयम् ।) भगवन्, अयं नस्तातो रघुपतिः ।

**जामदग्न्यः**—(सव्यथम् ।) धिक्, सर्वतः क्षत्रकलम्बोद्भेदः[2] (नेपथ्याभि-[3]

---

यैव त्यक्तातः किमर्थमायुधग्रहणमिति भावः । पुराणवाजसनेयेनोक्तं वेद वा, अधीते वा । 'शौनकादिभ्यश्च' इति णिनिः । ब्रह्म वेदः । गृहीतं [वाक्यं यस्य सः । यद्वा गृहीतं] ज्ञातं वाक्यं वेदवाक्यं येन सः । अवसरः प्रस्तावः । **अवनिमिति** । मे मम कुठारो द्वन्द्वस्य युग्मस्य युद्धं द्वन्द्वयुद्धं तस्मात्कथं विरमति । अपि न कथमपीत्यर्थः । अधिकविंशानधिका विंशतिर्येषां तानेकविंशतिवारानभ्यवस्कन्द्य मारयित्वा । क्षत्रियानित्यर्थात् । स्कन्दिरभ्यवपूर्वो मारणार्थः । 'हन्त्यर्थाश्च' इति चुरादिपाठाण्णिच् । अवनिं द्विजेभ्यो ब्राह्मणेभ्यो दत्त्वा । कीदृशेभ्यः । अवभृथो यज्ञान्तस्तस्य भृतका वैतनिका ऋत्विजस्तेभ्यः । यागे भृतिभुगृत्विग्भवति । हत्या हननम् । 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः । 'भृतको भृतिभुक्कर्मकरो वैतनिकोऽपि सः' इति धरणिः । नेपथ्ये दशरथः परशुरामादनिष्टमाशङ्कमानः पुत्रस्नेहात्तं निवर्तयितुमाह—**भृगुतिलकेति** । मानेन माने वा शौण्ड ख्यात हे, ते तव भुजः पुत्रभाण्डेऽपि पुत्रतुल्येऽपि रामे रामचन्द्रे किमस्त्रं वहति कुतोऽस्त्रं धारयति । अपि तु पुत्रेऽस्त्रधारणमयुक्तमिति भावः । बत खेदे । अस्त्राधारणे हेतुमाह—त्रिलोक्या अभयदाने स्थूललक्षो बहुप्रदः । तथा च रामचन्द्रेऽप्यभयदानं युक्तमिति भावः । वैमत्यं मतविपरीतता । करुणं कृपामयम् । 'भाण्डं पात्रेऽपि सदृशे स्वल्पेऽपि च निगद्यते' इति धरणिः । 'स्थूललक्षो बहुप्रदः' इत्यमरः । धीरो गभीरः । धिक् निन्दायां सामान्यतः । तेन तद्योगेन द्वितीया । सर्वतः सर्वत्र । कलम्बोऽङ्कुरः । उद्भेदः प्रकाशः । गुरुधनुर्भङ्गजन्यक्रोधान्धः स्तुतिमप्यसहिष्णुराह—

---

१. 'पुनः' इति पुस्तकान्तरे नास्ति. २. 'कदम्बकोद्भेदः'. ३. 'नेपथ्याभिमुखः'.

मुखमवलोक्य ।) भो राजन्दशरथ[1], अस्मन्नामधेयमात्रमित्रेण[2] पुत्रेणामुना[3] मानार्हो भवान् । किं पुनरनभिज्ञोऽसि वीरव्यवहारस्य ।

पुरमथनधनुर्विमर्दनोत्थं प्रदहदहर्दिवमस्ति तीव्रमर्चिः ।
रघुजनककुटुम्बबाष्पपूरैः परमिह शान्तिमुशन्ति शस्त्रभाजः ॥ ४१ ॥

(नेपथ्ये ।)

आः जामदग्न्यः, किमेवमेतिप्रसक्तः संन्यस्तशस्त्रान[4]स्मानपि बलाद्धनुर्ग्राहयसि ।

**जामदग्न्यः**—(सरोषम् ।) अरे विदेहप्रसवपांशुल[5],
अयमधिपतिर्भासामेकान्तरो भवतो गुरु-
स्त्वमसि तपसा[6] यद्वर्षीयानिति स तितिक्ष्यसे ।
कथमसि धनुर्नामग्राही तदेष समाप्यते[7]
मम हि सकलक्षत्रालम्भक्रतोरमृतं भवान् ॥ ४२ ॥

(नेपथ्ये ।)

भार्गव[8] भार्गव, च्यवनादिवृद्धवाक्यगौरवनिगृहीतसंप्रहारक्रियासमभि-

---

**पुरमथनेति** । पुरमथनधनुर्विमर्दनोत्थं हरधनुर्भङ्गसमुद्भूतं तीव्रमर्चिस्तेजोऽस्ति । अहर्दिवं प्रत्यहं प्रदहत् । 'अचतुर–' इत्यादिना निपातनम् । शस्त्रभाजोऽस्मदादयो रघुजनकयोः कुटुम्बस्य वाष्पपूरैः परमर्चिषः शान्तिमुशन्तीच्छन्ति । 'वश कान्तौ' । 'ग्रहिज्या–' इत्यादिना संप्रसारणम् । नेपथ्ये जनकवचनम् । 'आस्तु स्यात्कोपपीडयोः' इत्यमरः । पांशुलोऽधमो दूषको वा । **अयमिति** । अयं भासामधिपतिः सूर्यो भवतः एकान्तरो गुरुः । याज्ञवल्क्येन सूर्यादधीतम्, जनकेन याज्ञवल्क्यात्, तेन सूर्यशिष्यशिष्यो जनकः । तपसा यद्वर्षीयान्वृद्धस्त्वमसि, अतो हेतोस्तितिक्ष्यसे स क्षान्तोऽसि । क्वचित् 'तपसे' इति पाठः । तत्र त्वमपि तपसे तपः करोषीति हेतोस्तितिक्ष्यसे स क्षान्तस्त्वम् । धनुर्नामग्राही धनुषो नामग्रहणकर्ता कथमसि । अपि तु धनुर्नामग्राही यदसि तत्तस्मादेष भवान्समाप्यते । मार्यत इत्यर्थः । कीदृशः । मम हि ममैव सकलक्षत्रालम्भक्रतोर्निखिलक्षत्रियमारणयज्ञस्यामृतं यज्ञशेषीभूतः । तितिक्ष्यस इत्यत्र 'तिज निशामने' । 'गुप्तिज्किद्भ्यः सन्' इति क्षमायां सन् । 'लट् स्मे' इति कर्मणि लट् । 'हि हेताववधारणे' इत्यमरः । 'अमृतं यज्ञशेषे स्यात्' इति विश्वः । च्यवनो मुनिः । वृद्धः पण्डितः सुचिरो वा । निगृहीतः संकुचितः । संप्रहारो युद्धम् । क्रियासमभिहारः पौ-

---

१. 'राजन्' इति पुस्तकान्तरे नास्ति. २. 'नामधेयमित्रेण'. ३. 'सूनुना मानार्हो'. ४. 'शस्त्रानपि'. ५. 'पांसन'. ६. 'तपसा त्वम्'. ७. 'समाप्यसे'. ८. 'भगवन्भार्गव'.

हारस्य तत्रभवतः परमे ब्रह्मणि वर्तमानस्य पुनरुपप्लवन्ते बुद्धयः । तद्विरम, कियच्चिरमितः परमपि नाटयिष्यति भवन्तमायुधपिशाची ।

**जामदग्न्यः**—(विहस्य ।) अहो याज्यस्नेहः शतानन्दमाकुलयति । भवतु, सान्त्वयामि तावदेनम् । (तदभिमुखम् ।) आङ्गिरस,

नृपस्ते पाल्योऽयं मम पशुपुरोडाशरसिकः
पृथिव्यामव्याजोद्भटभुजभृतः सन्ति रघवः ।
अमीषामुत्सिक्तं किमपि कुलमुत्कृत्य लवशो
विधाता तत्सर्वं यदभिरुचितं ते भृगुपतिः ॥ ४३ ॥

(नेपथ्ये ।)

आः पाप क्षत्रियायाः पुत्र क्षत्रियभ्रूणहत्यापातकिन्, निसर्गनिष्प्राणं हि प्रहरणमिक्ष्वाकूणां ब्राह्मणेषु । तैर्यादृशस्तादृशो वा सोढव्योऽसि । कथमेवमतिक्रामन्नस्माकमपि ब्रह्मवर्चसान्न बिभेषि ।

**जामदग्न्यः**—(सरोपहासम् ।)अरे ब्रह्मबन्धो बान्धकिनेय गौतमगोत्रपांसन,

कुर्युः शस्त्रकथाममी यदि मनोर्वंशे मनुष्याङ्कुराः
स्याच्चेद्ब्रह्मगणोऽयमाकृतिगणस्तत्रेष्यते चेद्भवान् ।

---

नःपुन्यं भृशार्थो वा । तत्रभवतो मान्यस्य । तवेति शेषः । ब्रह्म तत्त्वम् । उपप्लवन्तेऽस्थिरीभवन्ति । पिशाची तृष्णा । याज्यत इति याज्यो यागशिष्यः । **नृप इति** । ते तवायं नृपो जनको मम पाल्यो रक्षणीयः । पशुश्छागो मृगो वा । पुरोडाशो हविर्भेदः । तथा च पशुपुरोडाशरसिकोयं तपस्वी वराको न हन्तव्य इति भावः । क्रोधान्धोऽपि मान्यतया प्रबोधायाह—अमीषां रघूणामुत्सिक्तमुद्धतं कुलं लवशो लेशं लेशं कृत्वोत्कृत्य खण्डयित्वा यत्ते तुभ्यमभिरुचितं तव प्रीतिविषयस्तत्सर्वं भृगुपतिर्विधाता करिष्यति । रामभद्रविनाशवर्जं सकलमभिमतं ते करिष्यामीति भावः । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानता । नेपथ्ये पुनः शतानन्दवचनम् । आः कोपे । क्षत्रियायाः पुत्र । कुत्सितक्षत्रियायाः पुत्रेत्यर्थः । 'षष्ठ्या आक्रोशे' इत्यलुक् । भ्रूणो गर्भः । हत्या हननम् । 'हनस्त च' इति भावे क्यप् । तश्चान्तादेशः । निसर्गनिष्प्राणं स्वभावबलशून्यम् । ब्रह्मवर्चसं ब्रह्मतेजः । यद्वा वृत्ताध्ययनसंपत् । 'स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिः' इत्यमरः । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच् । वर्चसादिति 'भीत्रार्थानां भयहेतुः'इत्यपादानता । ब्रह्मबन्धो कुत्सितब्राह्मण । 'ब्रह्मबन्धुरधिक्षेपे' इत्यमरः । बान्धकिनेयोऽसतीपुत्रः । 'अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः' इत्यमरः । **कुर्युरिति** । मनोर्वंशे कुले अमी मनुष्याङ्कुरा मनुष्य-

---

१. 'भवतः'. २. 'विरम विरम'. ३. 'इयमपरमपि'. ४. 'परवन्तम्. ५. 'क्षत्रियापुत्र'. ६. 'अतिक्रमन्'.

सम्राजां समिधां च साधकतमं धत्ते छिदाकारणं
धिङ्मौर्वीकुशकर्षणोल्बणकिणग्रन्थिर्ममायं करः ॥ ४४ ॥

(नेपथ्ये।)

भगवन्भार्गव भार्गव,

त्वं वेदवानसि वसिष्ठगुरोः सनाभिः
स्वायंभुवः स भगवान्प्रभवो गुरुस्ते।
तेनातिमात्रमसृणं हृदयं मदीय-
मद्यापि न त्रुटति शाम्यतु ते कुदृष्टिः ॥ ४५ ॥

**जामदग्न्यः**—(सोच्चैर्हासम्।) किमात्थ रे दशरथ, किमात्थ। नाद्यापि हृदयं त्रुटतीति। कथं वा त्रुटतु यावदेष न व्याप्रियते परशुः।

(नेपथ्ये।)

आः जामदग्न्य, गुरूनप्यधिक्षिपसि।

पुरोजन्मा नाद्यप्रभृति मम रामः स्वयमहं
न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम्।
अधीरं धीरं वा कलयतु जनो मामयमयं
मया बद्धो दुष्टद्विजदमनदीक्षापरिकरः ॥ ४६ ॥

---

पोता यदि शस्त्रकथां कुर्युः। यदि चायं ब्रह्मगणो ब्राह्मणगणः ऋत्विग्गणो वा आकृतिगणः स्यात्। आकृत्या आकारेण गृह्यते यत्र गणे स आकृतिगणो वैयाकरणप्रसिद्धः। तत्रापि चेद्यदि भवानिष्यते। तदा सम्राजां क्षत्रियाणां समिधां होमीयकाष्ठानां च च्छिदाकारणं छेदनिमित्तं साधकतमं करणं कुठारं यन्ममायं करो धत्ते तद्धिक् निष्फलम्। इह धिक्शब्दस्य कुत्सार्थस्याभावान्न द्वितीया। 'धिग्भर्त्सने च निन्दायां निष्फले कुत्सितेऽपि च' इति विश्वः। 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः। 'किणः स्यान्मृतशोणिते' इति च। नेपथ्ये दशरथवाक्यम्। सनाभिः सपिण्डः। एकगोत्र इति यावत्। 'सपिण्डास्तु सनाभयः' इत्यमरः। स्वयंभूर्ब्रह्मा। तस्यापत्यं स्वायंभुवः। अण् संज्ञापूर्वकविधेरनित्यत्वान्न गुणः। किं तु उवङेव भवति। प्रभवत्यस्मादिति प्रभव उत्पत्तिहेतुः। गुरोरधिक्षेपमसहमानः सक्रोधं लक्ष्मण आह—**पुरोजन्मेति**। अद्यप्रभृत्यद्यारभ्य रामो मम पुरोजन्मा ज्येष्ठभ्राता न। तदादेशाकरणात्। रघुवंशजातानां क्षितिभुजां च न पुत्रो न वा पौत्रः। तादृशाचारानाचरणात्। किं तु स्वयमेवाहम्। असाधारणस्वभाव इति

---

१. 'भगवन्' इति पुस्तकान्तरे नास्ति. २. 'अपि' इति पुस्तकान्तरे नास्ति. ३. 'अवीरं वीरं वा'.

**जामदग्न्यः**—(सावज्ञं रामं प्रति ।) अये, किमयं लक्ष्मणो भवन्तं पुरोजन्मानमपदिशति ।

**रामः**—(सविलक्षस्मितम्[1] ।) प्रसीद भगवन्, स एवायं यौवनादर्वाचि[2] निरपराधमधुरे वयसि वर्तमानो यानिकानिचिदक्षराणि प्रलपति ।

**जामदग्न्यः**—(सस्मितम् ।) कथमेतावत्यपि[3] माममृष्यमाणमाशङ्कसे । यतस्त्वदनुवर्ती[4] खल्वयं त्वामेवास्तमयमानमन्वस्तमयिष्यते । निर्वाणं हि सवितारं तरणिमणिरप्यनुनिर्वाति । (नेपथ्यं प्रति ।) साधु रे लक्ष्मण, साधु । कनिष्ठतरोऽपि वरं[5] भवान्, न पुनरयं वृथाज्येष्ठो रामस्ते ।

प्रागुच्चैःशिरसं[6] क्षुरप्रनखरैः क्रौञ्चाद्रिदन्तावलं
भित्त्वा हंसमयानि मौक्तिकफलान्याकीर्य पर्यापिताम् ।
सैंहीं वृत्तिमधिष्ठितेऽपि हि मयि क्षात्रेण कल्पेन ते
दिष्ट्या कौतुकमाभिरामिकमसि त्वं कोऽपि वीराङ्कुरः ॥ ४७ ॥

भावः । अधीरमपण्डितमधैर्यशालिनं वा कलयतु कथयतु जानातु वायं जनः । अयं परिकरः प्रारम्भः । संनाहो बद्धः कृतः । 'मामघमयम्' इति पाठे अघमयं पापमयं द्विजवधात् । अपदिशति दूरीकरोति । यौवनादर्वाचि यौवनात्पूर्वस्मिन् । कौमार इत्यर्थः । प्रलपत्यनर्थकं वदति । 'प्रलापोऽनर्थकं वचः' इत्यमरः । एतावति विषये । अमृष्यमाणमक्षाम्यन्तम् । अस्तं नाशमयमानं गच्छन्तम् । 'अय गतौ' । शानच् । अनु पश्चात् । तरणिमणिः सूर्यकान्तः । वरं भवानिति वरमव्ययम् । 'मनागिष्टे वरं यत्तु कश्चिदाह तदव्ययम्' इति शाश्वतः । यथा 'याच्ञा मोघा वरमधिगुणे' इति, 'वरं विरोधोऽपि समं महात्मभिः' इति च । **प्रागिति** । प्राक् पूर्वं क्षुरप्रस्वरूपैर्नखरैर्नखैः क्रौञ्चाद्रिरेव क्रौञ्चनामकपर्वत एव दन्तावलो हस्ती तं भित्त्वा विदार्य हंसमयानि हंसरूपाणि मौक्तिकान्याकीर्य विक्षिप्य पर्यापितां व्यवस्थापितां सैंहीं सिंहस्येयं सैंही तां वृत्तिं व्यापारमधिष्ठितेऽप्यास्थितेऽपि मयि विषये ते तव क्षात्रेण कल्पेन विधिना कौतुकं कौतुकहेतुत्वादस्ति । कीदृशम् । आभिरामिकम् । अभिरमणमभिरामः प्रीतिः । तस्मै प्रभवत्याभिरामिकम् । 'तस्मै प्रभवति संतापादिभ्यः' इति ठञ् । तस्मात्त्वं कोऽप्यनिर्वचनीयो वीराङ्कुरोऽसि । उच्चैःशिरसमिति । उच्चैः शिरो मस्तकं शिखरं वा यस्य तम् । परशुरामेण क्रौञ्चं भित्त्वा राजहंसा आनीता इति पुराणम् । क्षुरप्रखुरप्रशब्दावस्त्रभेदवाचकावपि भवतः । 'क्षुर विखण्डने', 'खुर च्छेदने' इति धात्वोर्वर्णदेशनायां साधितत्वात् । 'दशाननक्षिप्तखुरप्रखण्डितः' इ-

१. 'सवैलक्ष्य–'. २. 'अर्वाच्यपराध–'. ३. 'एतावतापि'. ४. 'त्वदनुवर्ती खल्वल्पं' ५. 'वरो' . ६. 'शिखरं'.

(नेपथ्ये।)

भार्गव भार्गव, दुर्विज्ञानमिदमर्वाक्फलनिष्पत्तेराभिरामिकं साङ्ग्रामिकं वा।

**रामः**—(सरोषं नेपथ्याभिमुखम्।) आः वत्स, कोऽयमद्यतनस्ते दुर्विनयप्ररोहो[1] यद्गुरूनपि क्षेत्रीकरोषि।

(नेपथ्ये।)

आर्य, तूष्णीमयमस्मि[2]। क्षमस्व जामदग्न्य, नियन्त्रितोऽहमार्येण।

**जामदग्न्यः**—(विहस्य।) अरे[3] राम, कथमद्यापि[4] वाचमेव सूनृतामसदभियोगप्रशमनीं प्रथयसे[5]। कवचहरोऽसि। शस्त्रैरेव प्रतिक्रियन्तां शस्त्राणि। किं च रे,

राजन्येभ्यो जन्म वैवस्वतेभ्यश्चक्रे चापाचार्यकं कौशिकश्च।
क्षात्रीं चर्यामेवमुन्मुञ्चतस्ते गोत्राक्षेपी वज्रलेपः कलङ्कः॥ ४८॥

**रामः**—(सगर्वस्मितम्।) भगवन्, सत्यमेतत्।

जातः सोऽहं दिनकरकुले क्षत्रियश्रोत्रियेभ्यो[6]
विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः[7]।
अस्मिन्वंशे कथयतु[8] जनो दुर्यशो वा यशो वा
विप्रे शस्त्रग्रहणगुरुणः साहसिक्याद्बिभेमि॥ ४९॥

---

त्यत्र, पुरस्तात् 'मृगखुरक्षुरप्रव्यालेखस्थपुटितविभागा वनभुवः' इत्यत्र च प्रयुक्तत्वात्। दन्तावलमिति 'दन्तशिखात्संज्ञायाम्' इति वलच्। 'वले च' इति दीर्घः। अर्वाक् पूर्वम्। साङ्ग्रामिकमाभिरामिकवत्साधु। क्षेत्रमाश्रयः। क्षमस्व सहस्व। 'क्षमु प्रसहने' भ्वादावपि पठ्यते। स चात्मनेपदी। सूनृतां प्रियसत्याम्। 'सत्यं प्रियं च वचनं सूनृतं समुदाहृतम्' इति। अभियोगो युद्धम्। कवचहरः संनद्धः। **राजन्येभ्य इति**। वैवस्वतेभ्यो विवस्वदपत्येभ्यो राजन्येभ्यः क्षत्रियेभ्यस्ते तव जन्म। अभूदिति शेषः। कौशिकश्च तव चापाचार्यकं धनुरध्यापकत्वं चक्रे कृतवान्। क्षात्रीं क्षत्रसंबन्धिनीं चर्यां परिपाटीमुन्मुञ्चतस्त्यजतस्तव गोत्रमाक्षिपतीति गोत्राक्षेपी कलङ्कोऽपवादः। जात इति शेषः। तथा च क्षत्रियेभ्यो जन्म, विश्वामित्रादध्ययनं च। क्षात्रचर्यापालनकारणम्, तत्सर्वं त्यजतस्तव कलङ्क एव भविष्यतीत्यतः सर्वथा मया सह युद्धादि योग्यमिति भावः। आचार्यकमिति 'योपधाद्गुरूपोत्तमाद्वुञ्' इति भावे वुञ्। **जात इत्यादि**। श्रोत्रियश्छन्दोऽध्येता उत्तमो वा। दृष्टं ज्ञातम्। अस्मिन्वंशे सूर्यवंशे। सहो बलं तेन सह वर्तते

---

1. 'विनयातिप्ररोहो यद्गूरूनपि'. 2. 'तूष्णीमस्मि'. 3. 'रेरे'. 4. 'कथं वाचमेव.' 5. 'समर्थयसे'. 6. 'कुलक्षत्रिय–'. 7. 'लब्धविद्यास्त्र–'. 8. 'अस्मिन्नंशे कलयतु'.

**जामदग्न्यः**—(सक्रोधम्।) आः पाप दुर्मुख, वसिष्ठ इव विश्वामित्र इव स्वस्तिवाचनिको ब्राह्मणस्ते परशुरामः। (सव्यथम्।) धिक्कष्टम्। एवमुच्चावचवाचः क्षत्रियाः श्रूयन्ते। (क्रोधातिशयं नाटयन्।) अयमहं भोः,

सहदशरथमद्योत्कृत्य पुत्रैश्चतुर्भि-
र्जनककुलकबन्धस्कन्धनिर्गत्वरीभिः।
नवरुधिरलताभिः क्लृप्तलीलापताकां
रणभुवमतिरौद्रीं रुद्रशिष्यः करोमि॥ ५०॥

**रामः**—(सरोषम्।) आः जामदग्न्य, केयं वाग्विभीषिका। दूरमतिक्रामति प्रसङ्गे कदाचिदिक्ष्वाकवोऽपि दुर्मनायन्ते।

**जामदग्न्यः**—(सभ्रुकुटीभङ्गम्।) ततः किम्।

**रामः**—(सावष्टम्भम्।) ततश्च।

तैस्त्रिःसप्तभिरेव राजविजयैर्यत्ते भुजस्तम्भयोः
कृत्वा तोरणमालिकां पुनरमुं द्वाविंशमारिप्सते।
द्रक्ष्यामि त्वयि वर्तमानमधुना तच्चापविद्याद्भुतं
शंभोस्तस्य हि केवलेन धनुषा कृष्टेन तुष्टिर्न मे॥ ५१॥

---

साहसिकः। 'ओजःसहोऽम्भसा वर्तते' इति ठक्। तस्य भावः साहसिक्यं साहसम्। अस्यैव विशेषणं गुरुण इति। 'भीत्रार्थानां भयहेतुः' इत्यपादानता। स्वस्तिवचनमाह स्वस्तिवाचनिकः। 'तदाहेति माशब्दादिभ्यः' इति ठक्। 'उत्तरपदस्य च' इति वृद्धिः। यद्वा स्वस्तिवाचनं प्रयोजनमस्य। 'तदस्य प्रयोजनम्' इति ठक्। 'उच्चावचं नैकभेदम्' इत्यमरः। **सहदशरथेति**। चतुर्भिः पुत्रैः सह। सहयुक्ते तृतीया। उत्कृत्योन्मूल्य। स्कन्धः समूहः। निर्गत्वरी निर्गमनशीला। 'गत्वरश्च' इति साधुत्वम्। नवरुधिरेति। नवपदं स्यानरक्तनिषेधार्थम्। अन्यापि पताका लतया क्रियत इति ध्वनिः। अतिरौद्रीमतिभयानकाम्। वाचा त्रासयितुमिच्छा वाग्विभीषिका। बिभेतेरन्तर्भावितण्यर्थात्सन्। अतिक्रामति वर्तमाने। प्रसङ्गे कोपे। दुर्मनायन्ते। अच्व्यर्थे भृशादित्वात्क्यङ् सलोपश्च। **तैरिति**। यच्चापविद्याद्भुतं कर्तृ, तैस्त्रिभिः सप्तभिरेकविंशतिसंख्याकैः राजविजयैः, भुजावेव स्तम्भौ तयोस्तोरणमालां कृत्वा पुनरप्यस्मज्जयादमुं द्वाविंशं द्वाविंशतेः पूरणं राजविजयमारिप्सते आरब्धुमिच्छति। तदधुना त्वयि वर्तमानं द्रक्ष्यामि। यतः केवलेन हरचापाकर्षणेन मम न तुष्टिः। द्वाविंशमिति द्वाविंशतेः पूरणम्। 'तस्य पूरणे डट्'। ति-

---

१. 'लुस–'. २. 'सक्रोधम्'. ३. 'विभीषा'. ४. 'सभ्रुकुटिबन्धम्'.

**जामदग्न्यः**—(संरोषम्[1] ।) किमात्थ रे, किमात्थ । ('द्रक्ष्यामि त्वयि वर्तमानमधुना' इत्यादि श्लोकोत्तरार्धं पठित्वा सव्यथम् ।) अहो सर्वतः समिध्यमानदारुणस्य रोषजातवेदसो विदेहदिलीपयोः कुलं नाम कति भविष्यन्त्याहुतयः । (उच्चैः[2] ।) भो भोः सप्तद्वीपकुलपर्वतवर्तिनो राजानः, चेतयध्वं चेतयध्वम् ।

येन स्वां विनिहत्य मातरमपि क्षत्रास्रमध्वासव-
स्वादाभिज्ञपरश्वधेन विदधे निक्षत्रिया मेदिनी ।
यद्बाणव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
दद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ॥ ५२ ॥

**रामः**—(सहर्षसंभ्रमम्[3] ।)

नृपानप्रत्यक्षान्किमपवदसे नन्वयमहं
शिशुक्रीडाभग्नत्रिपुरहरधन्वा तव पुरः ।
अहंकारक्रूरार्जुनभुजवनव्रश्चनकला-
निसृष्टार्थो बाहुः कथय कतरस्ते प्रहरतु ॥ ५३ ॥

**जामदग्न्यः**—(सकोपाटोपम्[4] ।) आः पाप विकर्तनकुलकलङ्क, पुनस्तरां तदेव पार्वतीदयितकोदण्डदलनसाहसमुद्भावयसि[5] । अहह क्षत्रियोऽपि भार्गवस्य कार्तवीर्यजयिनं[6] भुजदण्डमन्विष्यति । अहो गरीयान्कालः । यदश्रुतचरमपि श्रावयति । अदृष्टचरमपि दर्शयति । अपि च रे राजन्यकीट,

---

विंशतेर्डिति' इति टिलोपः । समिध्यमानस्य स्वयं दीप्यमानस्य । 'ञिइन्धी दीप्तौ' । जातवेदसोऽग्नेः कुलपर्वता गन्धमादनादयः । राजानो दिक्पालाः । चेतयध्वं चेतना भवत । विधौ लोट् । **येनेति** । स्वां मातरं क्षत्रियामेव । क्षत्रास्रमेव क्षत्रियरुधिरमेव मधु क्षौद्रं आसवो मद्यम् । 'मध्वासवो माधवको मधु माध्वीकमद्वयोः' इत्यमरः । 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इति च । 'परशुश्च परश्वधः' इत्यमरः । व्रणं रन्ध्ररूपम् । हंसा हि कैलासस्थमानससरसः शरदि क्रौञ्चगिरिविवरेण भुवमायान्तीति वार्ता । **नृपानिति** । अपवदसे निन्दसि । 'अपाद्वदः' इति तङ् । अयमहमित्य[त्य]न्ताहंकारे । त्रिपुरहरो महेशः । अर्जुनः कार्तवीर्यः । व्रश्चनं छेदनम् । निसृष्टार्थो ज्ञातार्थः । विकर्तनः सूर्यः । अश्रुतचरं न पूर्वश्रुतम् । 'भूतपूर्वे चरट्' । कीट इव कीटः पोतः । **जानास्येवे-**

---

१. 'ससंरम्भम्'. २. 'उच्चैः' इति पुस्तकान्तरे नास्ति. ३. 'सहासम्'. ४. 'साटोपम्'. ५. 'साहसम्' इति पुस्तकान्तरे नास्ति. ६. 'कार्तवीर्यभुजविजयिनं—अन्वेषयति'.

जानास्येव यथा पितुः परिभवन्होमार्जुनीमर्जुनो
मत्कोदण्डमनेकराजकवधस्वाध्यायमध्यापिपत्[1] ।
तेनैवास्ति भवत्सु यद्यपि मम क्रोधोऽयमौत्सर्गिक-
स्तत्संप्रत्युपसर्जनं गुरुधनुर्भङ्गादयं हेतुमान् ॥ ५४ ॥

**रामः**—ऋषे[2] जामदग्न्य, पटच्चरीभूता खल्वियं पुरातनी कीर्तिपताका। नन्विदानीमेव द्रष्टव्यम् । (नेपथ्याभिमुखम् ।) वत्स लक्ष्मण, धनुर्धनुः ।

**जामदग्न्यः**—(साक्षेपम्[3] ।) अरे[4] अनात्मज्ञ क्षत्रियवटो,

तच्चापमीशभुजपीडनपीतसारं
प्रागप्यभज्यत भवांस्तु निमित्तमात्रम् ।
राजन्यकप्रधनसाधनमस्मदीय-
माकर्ष कार्मुकमिदं गरुडध्वजस्य ॥ ५५ ॥

आकृष्टेन पुनरमुनैव धनुषा किलास्मानभियोत्स्यसे[5] । क्षत्रसत्रे दीक्षितानां तु चिरस्य होतायं[6] परशुरस्माकमस्त्येव । (इति रामस्य हस्ते धनुरर्पयति।)

---

ति । मम पितुर्जमदग्नेर्होमसाधनिकामर्जुनीं गां परिभवन्नपहरन्सन्नर्जुनः कार्तवीर्यो यथा मम कोदण्डं धनुरनेकक्षत्रियवधस्वरूपं स्वाध्यायं वेदं पाठमात्रं वाध्यापिपदध्यापितवान्, तथा त्वं जानास्येव । तेनैव हेतुना भवत्सु क्षत्रियवंशोद्भूतेषु ममौत्सर्गिकः स्वाभाविकः क्षत्रियसामान्यविषयकः क्रोधो यद्यप्यस्ति तत्संप्रत्युपसर्जनमप्रधानम् । यतो गुरुधनुर्भङ्गादयं क्रोधः क्षत्रियवधे हेतुमान्प्रयोजकवान् । 'तत्प्रयोजको हेतुश्च' इति । 'भङ्गादहं हेतुमान्' इति पाठेऽहमेव प्रयोजकवानित्यर्थः । 'भङ्गे तु' इति पाठे भङ्गे सतीत्यर्थः । अध्यापिपदिति अधिपूर्वकादिङः 'क्रीङ्जीनां णौ' इत्यात्वे कृते रूपम् । न च 'अभिज्ञावचने लृट्' इति लृट् स्यादिति वाच्यम् । 'विभाषा साकाङ्क्षे' इति विकल्पनात् । 'अर्जुनी सौरभेयी गौः' इत्यमरः । 'अर्जुनः ककुभे पार्थे भवेदप्यर्जुनी गवि' इति मेदिनीकरः । पटच्चरीभूता जीर्णवस्त्रीभूता । 'पटच्चरं जीर्णवस्त्रम्' इत्यमरः । अनात्मज्ञोऽतत्त्वज्ञः । चापं कर्तृ । पीतसारं गृहीतबलम् । प्रागप्यभज्यत पूर्वमेव भग्नम् । अपिरेवार्थे । 'भञ्जो आमर्दने' । कर्मकर्तरि तङ् । राजन्यकं क्षत्रियसमूहः । प्रधनं मारणम् । साधनं हेतुः । कार्मुकं धनुः । अभियोत्स्यसे योधयिष्यसि । क्षत्रसत्रे क्षत्रियहोमयज्ञे । 'सत्रमाच्छादने यज्ञे' इति विश्वः । दीक्षितानां गृहीतव्रतानाम् । उद्धातः पादस्खलनं तद्युक्ता उद्धातिनी ।

---

१. 'अध्यापयत्'. २. 'ऋषे' इति पुस्तकान्तरे नास्ति. ३. 'साक्षेपम्' इति पुस्तकान्तरे नास्ति. ४. 'रे रे'. ५ 'अभियोक्ष्यसे'. ६. 'अयम्' इति पुस्तकान्तरे नास्ति.

**रामः**—(गृहीत्वा।) भार्गव, समन्तादुद्घातिनी भूमिरियम्। तदेहि, विमर्दक्षमं प्रदेशान्तरमवतराव:।

**जामदग्न्यः**—(सरोषं परिक्रामन्।) भो भोः क्षात्रेण ब्राह्मेण च तेजसा विकत्थमानाः, तदत्र

भवतु शरणदो वा सर्वशस्त्राभिसारः
प्रतिविदधतु वास्मिन्नाशिषो वैजयिक्यः।
अदशरथमरामं निर्विदेहेन्द्रमुर्वी-
वलयमिह विधत्ते रोषणो रैणुकेयः॥ ५६॥

(इति निष्क्रान्तौ।)

(नेपथ्ये।)

भो भोः पौरजानपदाः, प्रवर्त्यतां माङ्गलिकमातोद्यम्। प्रसज्यतामयमपि[1] वैदेहीविवाहमहोत्सवो जामदग्न्यविजयोत्सवेन।

कन्यां काचिदिहापि कर्मणि पणः स्यादित्यसूयावल-
त्सीतापाङ्गमयूखमांसलमुखज्योत्स्नाविलिप्तां दिवम्।
कुर्वाणेन रघूद्वहेन चकृषे नारायणीयं धनुः
संधायाथ शरश्च[2] भार्गवगतिच्छेदादमोघीकृतः॥ ५७॥

---

'उद्घातस्तु पुमान्पादस्खलने समुपक्रमे' इति मेदिनीकरः। विकत्थमानाः श्लाघमानाः। शरणं रक्षणम्। 'शरणं रक्षणेऽपि च' इति धरणिः। सर्वशस्त्राभिसारः सर्वयोधैरेकदैव सर्वशस्त्रेण युद्धम्। प्रतिविदधतु प्रतीकारं कुर्वन्तु। वैजयिक्यो विजयप्रयोजनाः। 'तदस्य प्रयोजनम्' इति ठक्। रोषणो रोषशीलः। 'क्रुधमण्डार्थेभ्यश्च' इति युच्। रेणुका परशुराममाता। तस्या अपत्यं रैणुकेयः। 'स्त्रीभ्यो ढक्'। निष्क्रान्तौ रामपरशुरामौ। मङ्गलाय प्रभवति माङ्गलिकम्। 'तस्मै प्रभवति संतापादिभ्यः' इति ठक्। आतोद्यं वीणामुरजवंशकांस्यवाद्यम्। 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः। प्रसज्यतामारभ्यताम्। यद्वा प्रसज्यतां प्रसङ्गादेव निष्पाद्यताम्। अन्यथानुष्ठितस्यान्यदीयोपकारजननसामर्थ्यं प्रसङ्गः। यथा प्रासादे देवाय दत्तस्य दीपस्य राजमार्गावलोककरणसामर्थ्यम्। इहापि कर्मणि नारायणीयधनुर्भङ्गेऽपि। पणः शुल्कः। अपाङ्गो नेत्रप्रान्तो नेत्रान्तदर्शनं वा। ज्योत्स्ना कान्तिः। विलिप्तामल्पविलिप्ताम्। 'क्वादल्पाख्यायाम्' इति ङीष्। दिवमाकाशम्। उद्वहः पुत्रः। यद्वा रघुमुद्वहति रघुवंशधारक

---

१. 'प्रसर्पतामयं वैदेहीविवाहोत्सवो जामदग्न्यविजयमहोत्सवेन'; 'प्रसज्जतामयमपि—विजयेन'. २. 'शरं च'.

(ततः प्रविशतो रामजामदग्न्यौ।)[1]

**रामः**—भगवन्भार्गव,

परैराहूतानां विहितमपि शस्त्रं भवतु नः
प्रकृत्या विप्रेभ्यः पुनरकृतशिल्पा रघुभुवः।
चिरादण्डीरेण त्वयि तदपि रामे न गणितं
तपोविद्यावीरव्रतमय मयि[2] क्षाम्यतु भवान्॥ ५८॥

**जामदग्न्यः**—(विहस्य।) कथमपराद्धमस्मासु वत्सेन।

यदर्थमस्माभिरिह प्रकोपितस्तदद्य दृष्ट्वा[3] तव धाम वैष्णवम्।
विशीर्णसर्वामयमस्मदान्तरं चिरस्य कंचिल्लघिमानमश्नुते॥ ५९॥

**रामः**—इत इतो भगवन्[4]।

**जामदग्न्यः**—(रामस्य चिबुकमुन्नमय्य सस्मितम्।) वत्स, अप्रशस्तः खल्वारण्यकानां जनपदेषु चिरप्रचारः। तत्क[5] पुनरस्मान्नेष्यसि।

**रामः**—भगवन्, भगवतो[6] याज्ञवल्क्यस्यावसथे कृतातिथेयसंविधानौ तातजनकौ भवन्तमनुपालयतः।

---

इत्यर्थः। 'मूलविभुजादिभ्यः कः'। चकृषे आकृष्टम्। कर्मणि लिट्। संधाय शरं संयुज्य। गतिः स्वर्गगमनम्। अमोघः सफलः। परैः शत्रुभिः। आहूतानामास्कन्दितानाम्। यद्वा युक्तानाम्। युद्धार्थमिति शेषः। विहितं विधिबोधितम्। प्रकृत्या स्वभावेन। रघुभुवो रघुवंश्याः। विप्रेभ्योऽकृतशस्त्राभ्यासाः। अण्डीरेण दर्पिष्ठेन मया त्वयि रामे परशुरामे तदपि न गणितं नावगतम्। 'रामेण गुणितम्' इति पाठे रामेण मया चिरेण गुणितं प्रमाणीकृतम्। अण्डीर इति 'काण्डाण्डादीरन्नीरचौ' इतीरच्। 'अण्डीरः पुरुषे शक्ते' इति मेदिनीकरः। **यदर्थमिति**। यदर्थमस्माभिस्त्वं प्रकोपितोऽसि तद्वैष्णवं विष्णुसंबन्धि धाम तेजस्तव दृष्ट्वा ममैतदान्तरम्। अन्तरेवान्तरम्। स्वार्थेऽण्। किंचिल्लघिमानमल्पलघुत्वमश्नुते प्राप्नोति। कीदृशम्। विशीर्णो नष्टः सर्व आमयो रागादिरोगो यत्र तत्। वैष्णवधामदर्शनादेवेति भावः। 'अस्मदन्तरम्' इति पाठे मम हृदयमित्यर्थः। 'गर्वामयम्' इति पाठे अहंकाररूपरोगमित्यर्थः। इत इत इह इह। आगच्छेति शेषः। अधराधश्चिबुकम्। 'अधस्ताच्चिबुकम्' इत्यमरः। उन्नमय्योत्तोल्य। 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। आरण्यकानामरण्यवासिनाम्। 'अरण्यान्मनुष्ये' इति वुञ्। प्रचारो गमनम्। अवसथे गृहे। अतिथौ साधु आतिथेयम्। 'पथ्यतिथिवसति-

---

१. 'ततः प्रविशति रामः परशुरामश्च'. २. 'मम'. ३. 'दृष्टम्'. ४. 'भवान्'; 'भगवान्'. ५. 'तत्कथम्'. ६. 'भगवतः' इति पुस्तकान्तरे नास्ति.

एहि विष्टरपाद्यार्घमधुपर्कैरुपस्थितान् ।
इक्ष्वाकूंश्च विदेहांश्च पुनीहि भगवन्नमून् ॥ ६० ॥

**जामदग्न्यः**—वत्स, अपरिहार्यमेवं ह्यातिथ्यं राजन्यश्रोत्रियाणाम् । किं पुनरेवंविधवैखानसोचिताचारस्खलितविलक्षो न शक्नोमि धर्माचार्यं याज्ञवल्क्यमुपेत्यावलोकितुम् । आचारस्तु दूरादपि कृतः कृतः स्यात् । (किंचिदुच्चैर्नेपथ्याभिमुखम् ।)

यस्य स्मृतीः प्रतीक्षन्ते चतुर्वर्गे मनीषिणः ।
नमो भगवते तस्मै याज्ञवल्क्याय योगिने ॥ ६१ ॥

(नेपथ्ये ।)

गायत्री द्रुपदा देवी पाप्मानमपहन्तु ते ।
पुनन्तु पावमान्यस्त्वामृध्नोतु ब्रह्म ते परम् ॥ ६२ ॥

**जामदग्न्यः**—भगवन्, अपत्रपमाणो न भवन्तं द्रष्टुमुत्सहे । तदनुमन्यस्व मामरण्याय ।

(नेपथ्ये ।)

शिवास्ते पन्थानो व्रज निजगृहेभ्यो निजगृहा-
न्किमन्यत्सर्वेषां गुणमय शिरोमाल्यमसि नः ।

---

स्वपतेर्ढञ्' विष्टरमासनम् । 'वृक्षासनयोर्विष्टरः' इति निपातनम् । आतिथ्यमतिथिसत्कारः । ब्राह्मणादित्वात्ष्यञ् । वैखानसो नाम मुनिस्तेन प्रोक्तमधीयते वैखानसास्तृतीयाश्रमस्था मुनयः । वैखानसो वानप्रस्थो गृह इति पर्यायाः । स्खलितं स्खलनम् । दूरादेवास्माभिरर्घादि प्रतिगृह्यत इति भावः । स्मृतीः स्मृतिवाक्यानि । चतुर्वर्गे धर्मार्थकाममोक्षे । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । प्रतीक्षन्ते चिन्तयन्ति प्रमाणयन्तीति यावत् । योगिने योगियाज्ञवल्क्यायेत्यर्थः । गायत्री सावित्रीमन्त्रः । यद्वा गायत्रीमन्त्रे ध्येया देवता । द्रुपदा 'द्रुपदादिव मुमुचानः' इत्यादि मन्त्रः । पाप्मानं पापम् । पावमान्यो ऋग्विशेषाः । परं ब्रह्म तत्त्वज्ञानम् । ऋध्नोतु उपचितिं यात्वित्यर्थः । अपत्रपमाणोऽन्यतो लज्जमानः । 'लज्जा सापत्रपान्यतः' इत्यमरः । अरण्याय गन्तुमित्यर्थः । 'क्रियार्थोपपद—' इत्यादिना चतुर्थी । शिवाः कल्याणदाः पन्थानः सन्त्विति शेषः । हे गुणमय । 'तत्प्रकृतवचने मयट्' । नोऽस्माकं सर्वेषां शिरोमाल्यं शिरसि पुष्पं माला वा । 'पुष्पपुष्पस्रजोर्माल्यम्' इत्यमरः । निर्माणं सृष्टिः । स्थितिः

---

१. 'पाद्यार्घ'; 'पाद्यार्घ्य'. २. 'एव हि' इति पुस्तकान्तरे नास्ति. ३. 'अवलोकयितुम्'. ४. 'कृतकृत्यः'. ५. 'अभिमुखः'. ६. 'अपेक्षन्ते'. ७. 'त्रिपदा'. ८. 'अरण्यगमनाय'. ९. 'शिरोरत्नम्'.

त्रिलोकीनिर्माणस्थितिनिधनबन्धोर्मधुभिदो
भवान्षष्ठी मूर्तिर्भृगुकुलमधिष्ठाय रमते ॥ ६३ ॥

**जामदग्न्यः**—वत्स रामभद्र ।

**रामः**—आज्ञापय ।

**जामदग्न्यः**—निवर्तस्व । नूनमिदानीं कृतकौतुकागारमङ्गलोपचारः श्वशुरकुललोकस्त्वां प्रतीक्षते (इति परिष्वज्य निष्कान्तः ।)

**रामः**—(सोद्वेगम् ।) कथं गतो भगवान् । तदहमपि तातसमीपमेव गच्छामि । (इति परिक्रामन्पुरोऽवलोक्य ।) कथं तातश्च जनकश्चेत एवाभिवर्तेते । (इत्युपसर्पति ।)

(ततः प्रविशतो जनकदशरथौ । राजानावन्योन्यं परिष्वज्य ।)

**जनकः**—

सुचरितमिदमैतिहासिकानां हृदि न विरंस्यति यत्तवैष पुत्रः ।
भृगुसुतपरशूदराद्द्विराजां सहजविजित्वरमाचकर्ष तेजः ॥ ६४ ॥

**दशरथः**—(पुरोऽवलोक्य सहर्षम् ।) कथमागत एव वत्सो रामभद्रः ।

**जनकः**—सखे महाराज दशरथ, पश्य पश्य ।

चिरात्क्षात्रं तेजस्त्रिजगदवजैत्रं जनयिता
विधाता सर्वेषामुपरि सवितारं कुलभृताम् ।

---

पालनम् । निधनं विनाशः । मधुभिदो विष्णोः षष्ठी मूर्तिः परशुरामस्वरूपा । तथा हि दशावतारे—'मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः । रामो रामश्च रामश्च बुद्धः कल्की च ते दश ॥' अत्र रामः परशुरामः । रामो रामभद्रः । रामो बलभद्र इति । कौतुकं विवाहः, उत्सवः हर्षो वा । तदर्थमगारो गृहं तत्र मङ्गलस्य चित्रादेरुपचारः परिपाटी । 'कौतुकं तु विवाहे स्यादुत्सवे नर्महर्षयोः' इति मेदिनीकरः । इतिहासः पुरावृत्तं तद्विदन्ति ऐतिहासिकाः । 'आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग्वक्तव्यः' । ऐतिहासिकानां हृदि इदं सुचरितं न विरंस्यति न लुप्तं भविष्यति । यत्तवैष पुत्रो भार्गवकुठारमध्याद्द्विराजां क्षत्रियाणां स्वभावजयशीलं तेजः कर्म आचकर्ष कृष्टवान् । विजित्वरमिति 'इण्नशजिसर्तिभ्यः क्वरप्' । 'बाहुजः क्षत्रियो विराट्' इत्यमरः । **चिरादिति** । अयं रामोऽक्ष्णोरधिकरणयोरमृतं विकिरति विक्षिपति । अत्यन्तानन्ददानात् कीदृशः ।

---

१. 'मूर्तिः षष्ठी'. २. 'कुल' इति पुस्तकान्तरे नास्ति. ३. 'पुरतोऽवलोक्य च'. ४. 'न हृदि'. ५. 'उपजीव्यम्'. ६. 'कुलकृताम्'.

विनेता वर्णानां भृगुपतिभुजादर्पनिकषो
महावीरः श्रीमानयममृतमक्ष्णोर्विकिरति ॥ ६५ ॥

**दशरथः**—(निर्वर्ण्य। सस्नेहम्।) सखे सीरध्वज, रघुराजधर्माधिकारसर्वधुरीणः शिशुरपि वत्सोऽयम्। तदस्मिञ्जरसा दुर्वहं वर्णाश्रमभारमारोप्य वयमपि क्वापि तपोवने दिलीपकुलोचितेन विधिना शेषमायुरुपबुभुक्षामहे।

**जनकः**—सखे दशरथ, साधु ते हृदयमीदृशम्। क्रमादेतदनुष्ठातव्यम्।

**रामः**—(उपसृत्य।) तातौ, अभिवादये।

**जनकः**—एह्येहि वत्स रामभद्र। (इति सहर्षमालिङ्गति।)

**दशरथः**—(राममालिङ्ग्य।) सखे जनक, रामभद्रमभिषेक्तुं जामदग्न्यविजयप्रीतिरेव श्रेयानवसरः। कालक्षेपे पुनः को हेतुः।

(प्रविश्य।)

**लक्ष्मणः**—इयमार्यया मन्थरयोपनीता मध्यमाम्बायाः पत्री।

(राजानौ सवितर्कमन्योन्यं पश्यतः।)

**रामः**—(सहर्षम्।) वत्स लक्ष्मण, अपि सपरिवाराया कुशलमम्बायाः कथयत्यार्या मन्थरा।

**लक्ष्मणः**—आर्य, अथ किम्।

**रामः**—नूनमस्मत्प्रवासदौर्मनस्यमम्बां पीडयिष्यति।

---

क्षात्रं तेजस्त्रिजगतामवजैत्रं जेतृ जनयिता उत्पादयिता। तृनि रूपम्। तेन 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति न षष्ठी। कुलभृतां कुलधारकाणां वीजिनां चन्द्रादीनां सर्वेषामुपरि सवितारं सूर्यं विधाता कर्ता। रामेण सवितृकुलं सर्वकुलेभ्यः प्रशस्यमित्यर्थः। वर्णानां ब्राह्मणादीनां विनेता विनयकर्ता। निकषः 'कसौटी' इति प्रसिद्धः। 'निकषः कषपट्टिका' इत्यमरः। धर्माधिकारो धर्मजिज्ञासाभियोगः। तत्र सर्वधुरीणः सर्वभारवाही। 'खः सर्वधुरात्' इति खः। वर्णा ब्राह्मणादयः। आश्रमा ब्रह्मचार्यादयः। उपबुभुक्षामह उपभोक्तुमिच्छामः। भुजेः सन्नन्तात् 'पूर्ववत्सनः' इति तङ्। कालक्षेपे पुनः इति छलोक्तिः। 'वाक्यं वाक्यान्तरासक्तमर्थान्तरस्य सूचकम्। यत्र सा स्याच्छलोक्तिस्तु नाट्यालंकारसंमता॥' इति भरतः। यथोत्तरचरिते—'किमस्या न प्रेयो यदि परमसह्यस्तु विरहः' इति। मन्थरानाम्नी प्रतीहारी। दौर्मनस्यं विमनस्कत्वं कर्तृ।

---

१. 'अमृतमयम्'. २. 'वयमपि' इति पुस्तकान्तरे नास्ति. ३. 'उपभोक्ष्यामहे'. ४. 'एवमनुष्ठातव्यम्'. ५. 'तातौ' इति पुस्तकान्तरे नास्ति. ६. 'आर्य' इति पुस्तकान्तरे नास्ति.

**जनकः**—(लक्ष्मणहस्तात्पत्रिकां गृहीत्वा वाचयति ।) स्वस्ति । महाराजं दशरथं कैकेयी[1] विज्ञापयति । यथा

तन्मे वरद्वयमुरीकृतपूर्वमेव
याचे बिभर्तु भरतस्तव राज्यलक्ष्मीम् ।
वर्षाणि तिष्ठतु चतुर्दश दण्डकायां
सौमित्रिमैथिलसुतासहितश्च रामः ॥ ६६ ॥

(इति राजानौ मूर्छतः ।)

**रामः**—यदादिशत्यम्बा । (इति शिरसि पत्रिकां दत्त्वा[2] ।) वत्स लक्ष्मण, निजामस्मदाराधनसहाध्यायिनीं प्रजावतीमादाय पुरो[3] भव ।[4]

**लक्ष्मणः**—तथा । (इति निष्क्रान्तः ।)

**रामः**—तातौ, समाश्वसितं[5] समाश्वसितम् ।

**जनकः**—(आश्वस्य ।) अहह ।

पाणिर्गृहीतो रघुपुंगवेन देवः[6] पुराणः श्वशुरो विवस्वान् ।
पिता स्वयं केकयचक्रवर्ती कर्मेदमेतादृशमाः किमेतत् ॥ ६७ ॥

(इति मूर्च्छति ।)

(रामः पटाञ्चलेन[7] वीजयति ।)

**दशरथः**—(आश्वस्य ।)

कोऽप्येष वाङ्मनसयोरतिवृत्तवृत्ति-[8]
र्भावो हुताशनमयश्च तमोमयश्च ।
भोक्तृत्वमात्रमिह मे पुनरीदृशं मां
हा वत्स राम कथमुत्सहसे विहातुम् ॥ ६८ ॥

(विमृश्य ।) हा वत्से जानकि, निशाचराणामातिथेयीभवितुं दशरथगृहे[9] प्रविष्टासि । (इति मूर्च्छति ।)

---

ऊरीकृतपूर्वं पूर्वाङ्गीकृतमेव । वरद्वयमहं याचे । तदेवाह—बिभर्त्विति । दण्डकारण्यभेदः । 'प्रजावती भ्रातृजाया' इत्यमरः । पुंगवः श्रेष्ठः । पुराणोऽतिचिरंतनः । आः क्रोधे । वाङ्मनसोऽजन्तोऽचतुरादौ निपातितः । अतिवृत्तवृत्तिरविषयः । इह हुताशनमयतमोमयभावे भोक्तृत्वमात्रं मे । अनुभविता परमहं न प्रतीकारक्षम इत्यर्थः । आतिथेयी अतिथि-

१. 'देवी कैकेयी'. २. 'गृहीत्वा'. ३. 'पुरस्ताद्भवेति'. ४. 'यदाज्ञापयत्यार्यः'. ५. 'समाश्वसीतां समाश्वसीताम्'. ६. 'देवश्च साक्षात्'. ७. 'रामस्तथैव पटान्तेन'. ८. 'अनिवृत्तकर्मा'; 'अतिवृत्तवर्त्मा'. ९. 'गृहमनुप्रविष्टासि'.

**रामः**—तातौ, [1]समाश्वसितं समाश्वसितम् ।

**जनकः**—(आश्वस्य । आकाशे लक्ष्यं बद्ध्वा ।) साधु सखि कैकेयि, साधु । यदस्या विश्वंभराद्दुहितुर्मे वत्सायाः पत्युरनुवृत्तिरेव प्रसादीकृता । (विमृश्य । सव्यथम् ।)

धनुष्मन्तौ वत्सौ दशरथभुजैरूष्मल[2]तमाः
प्रदेशास्ते वत्सा शिशुरशिववृत्ता वनभुवः ।
प्रियै राजा मुक्तैरसुभिरपमार्ष्टि स्वमयश-
श्चरित्रव्यत्यासः सखि कथमयं केकयकुले ॥ ६९ ॥

कष्टं च । वयमपि कथमनेन जनपदेषु [3]बहुलीभवता भरतयौवराज्यलक्ष्मी-कर्णपूरतमालपल्लवेन कैकेयीदुर्यशसा मूर्धानमुन्नमय्य लोकस्य मुखं द्रक्ष्यामः।

**रामः**—(उत्थाय ।) तात जनक, यथा सुस्थं तातं शृणोमि तथा [4]भवता [5]विधातव्यम् । (इति निष्क्रान्तः ।)

**दशरथः**—(आश्वस्योत्थाय च ।) वत्स रामभद्र, परिपालय माम् । (इति जनकेन धार्यमाणो निष्क्रान्तः ।)

(इति निष्क्रान्ताः सर्वे ।)

इति दशरथविप्रलम्भो नाम चतुर्थोऽङ्कः ।

---

विषये साध्वी । ऊष्मलतमा अत्यन्ततेजोयुक्ताः सिध्मादित्वाल्लच् । अशिववृत्ता अकल्याणयुक्ताः । सर्पव्याघ्रादियोगात् । मुक्तैस्त्यक्तैः । अपमार्ष्टि खण्डयति । व्यत्यासो विपर्ययः । जनपदेषु लोकेषु । 'देशे जने जनपदः' इति । दुर्यशसः श्यामत्वात्तमालपत्रेण रूपणम् । उन्नमय्योत्तोल्य । सुस्थं निराकुलम् । 'स्वस्थम्' इति पाठे स्वस्मिन्नात्मनि तिष्ठति स्वस्थः । आत्मज्ञ इत्यर्थः । यद्वा प्रकृतिस्थम् । स्वस्थं स्वर्गस्थमित्यपि सूचितम् । 'खर्परे शरि वा लोपो वक्तव्यः' इति विसर्गलोपः । गण्डोक्तिरियम् । 'अनारम्भेण भाव्यार्थवादो गण्ड इति स्मृतः' इति भरतः । परिपालय प्रतीक्षस्व ॥

इति समस्तप्रक्रियाविराजमानरिपुराजकंसनारायणभवभक्तिपरायणश्रीहरिनारायणपदसमलंकृतमहाराजाधिराजश्रीमद्भैरवसिंहदेवप्रोत्साहितवैजौलीग्रामवास्तव्यखौआलवंशप्रभवश्रीरुचिपतिमहोपाध्यायविरचितायामनर्घराघवटीकायां चतुर्थोऽङ्कः ।

---

१. 'समाश्वसीतां समाश्वसीताम्.' २. 'उल्बणतमाः.' ३. 'बहुलीभविष्यता.' ४. 'भवतैव'. ५. 'तथा विधातव्यम्'.

पञ्चमोऽङ्कः ।

(ततः प्रविशतः श्रवणाजाम्बवन्तौ ।)

**जाम्बवान्**—ततस्ततः ।

**श्रवणा**—ततो मिथिलाया निष्क्रम्य मन्थराकलेवरमवकीर्य मारुति-प्रत्यवेक्षितं स्वशरीरमधिष्ठाय गङ्गायां शृङ्गवेरपुरं नाम निषादपक्कणमागत्य शबरीभूतास्मि ।

**जाम्बवान्**—ततस्ततः ।

**श्रवणा**—ततश्च ममानुपदमेव तस्मिन्निमौ रामलक्ष्मणावियं सीतेति सर्वतः शब्दो महानभूत् ।

**जाम्बवान्**—(सहर्षम् ।) ततस्ततः ।

**श्रवणा**—ततश्च कावेतौ रामलक्ष्मणाविति कर्णधाराधिपतिना गुहेनाहमनुयुक्ता निवेदितवत्यस्मि ।

पुत्रीयता दशरथेन मुनिप्रसादा-

त्प्राप्ताः पुराणपुरुषस्य कलाश्चतस्रः ।

---

इदानीं रामचन्द्रस्य दशरथस्वर्गगमनश्रवणं पञ्चवटीगमनं शूर्पणखानासाछेदनं खरदूषणादिवधो रावणकर्तृकसीतापहरणं सुग्रीवमैत्रं वालिवधादिकं च पञ्चमाङ्कप्रतिपन्नमर्थं सूचयितुं श्रवणाजाम्बवतोः प्रवेशमाह—**ततः प्रविशत इति**। चतुर्थाङ्के शूर्पणखामाल्यवद्विष्कम्भके 'मन्थराकायप्रवेशेन मिथिलामुपेत्य प्रत्ययिता संविधानकमिदं दशरथगोचरीकुरुष्वेति जाम्बवता श्रवणा प्रार्थिता । सापि शबरयोगिनी श्रवणा सर्वं तथेत्युरसि कृत्वैव विदेहाभिमुखी प्रस्थिता' इत्युक्तम् । इदानीं विदेहात्समागतायाः श्रवणायाः सकाशात्तद्वृत्तान्तं शुश्रूषुर्जाम्बवानाह—**ततस्तत इति** । तत्र श्रवणा स्वव्यापारं कथयतीति पूर्वापरसंबन्धः । कलेवरं मृतकायम् । अवकीर्य क्षिप्त्वा । 'अवतीर्य' इति पाठे त्यक्त्वेत्यर्थः । धातोरनेकार्थत्वात् । मारुतिर्हनूमान् । गङ्गायामिति सामीप्ये सप्तमी । लक्षणया वा तीरोपस्थितिः । निषादो धीवरश्चण्डालो वा । 'निषादः स्वरभेदे स्याच्चण्डाले धीवरेऽपि च' इति मेदिनीकरः । पक्कणस्तद्ग्रामः । 'पक्कणः शबरालयः' इत्यमरः । ममानुपदं मम पश्चात् । तस्मिञ्शबरालये । कर्णधारो नाविकः । गुहेन गुहनाम्ना निषादेन । अनुयुक्ता पृष्टा । निवेदनस्वरूपमाह—**पुत्रीयतेति** । पुत्रीयता आत्मनः पुत्रमिच्छता दशरथेन मुनिप्रसादादृष्यशृङ्गप्रसादात्पुराणपुरुषस्य विष्णोश्चतस्रः

---

१. 'श्रमणा- '. २. 'गङ्गातीरे'. ३. 'आगत्य भूतास्मि'. ४. 'अस्मि'. इति पुस्तकान्तरे नास्ति.

तासामयं गुणमयः प्रथमः कुमारो
वीरोद्धतः[1] पुनरसावपरस्तृतीयः ॥ १ ॥

**जाम्बवान्**—श्रवणे, साधूक्तम्। ततस्ततः।

**श्रवणा**—ततश्चोदकान्तनिवर्तितानुयात्रिकबन्धुवर्गः ससंभ्रमोपगतेन[2] गुहेनोपनीतां नावमधिरुह्य

तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपहृतवानातरं नाविकाय।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ॥ २ ॥

**जाम्बवान्**—हन्त महत्करुणम्।

**श्रवणा**—आर्य, करुणभयादेव तस्मिन्निङ्गुदीतरुमूले कुमारयोर्जटा-[3]ग्रहणवृत्तान्तमन्तरितवत्यस्मि।

**जाम्बवान्**—श्रवणे, सर्वमेतत्कल्याणोदर्कं भविष्यति[4]।

**श्रवणा**—अहं तु निषादपतिप्रीतये तत्रैवातिष्ठम्। अतीते च गण-

---

कला अंशाः प्राप्ताः। तासां कलानां मध्येऽयं गुणमयो रामः प्रथमा कला। असावपरस्तृतीया कला लक्ष्मणो वीरोद्धतो नायकः। देवांशत्वात्। 'देवा वीरोद्धता ज्ञेयाः' इति प्रागेवोक्तत्वात्। यद्वा वीरेण रसेनोद्धत उपचितः। पुत्रीयतेति 'सुप आत्मनः क्यच्'। 'क्यचि च' इति दीर्घत्वम्। उदकान्तो जलसमीपम्। 'आ उदकान्तं प्रियमनुव्रजेत्' इति स्मृतिः। अनुयात्रया चरत्यानुयात्रिकः। 'चरति' इति ठक्। संभ्रमस्त्वरा। उपगतः समीपगतः। उपनीतामुपढौकिताम्। **तीर्त्वेति**। अमरधुनीं गङ्गाम्। असौ राम आत्मना स्वेन तृतीयस्त्रिपूरणः सन्सौमित्रिमैत्रीमयं लक्ष्मणमैत्रप्रधानमातरं तरपण्यं 'खेव' इति प्रसिद्धं तस्मै नाविकाय कर्णधाराय गुहायोपहृतवान्दत्तवान्। 'आतरस्तरपण्यं स्यात्कर्णधारस्तु नाविकः'. इत्यमरः। व्यामग्राह्यस्तनीभिरङ्कपालीग्राह्यपयोधराभिः। 'व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्' इत्यमरः। कौतुकोदञ्चदक्षं कौतुकोन्नतचक्षुर्यथा स्यादेवम्। अन्वीयमानोऽनुगम्यमानः। इङ्गुदी पुत्रंजीववृक्षो मुञ्जनीवृक्षो वा। 'इङ्गुदी तापसतरौ पुत्रंजीवेऽपि चेङ्गुदी' इति विश्वः। अन्तरितवती त्यक्तवती। कल्याणोदर्कं कल्याणोत्तरफलम्। 'उदर्कः फलमुत्तरम्' इत्यमरः। अतिष्ठं स्थितवती। लङ्। गणरात्रे प्रचुरनिशासु। 'गणरात्रं निशा बह्व्यः' इत्यमरः।

---

१. 'धीरोद्धतः'. २. 'उपगतेन'. ३. 'जटाजूट—'. ४. 'भविष्यति। ततः'.

रात्रे संप्रकृतिजनपदः पितुः स्वर्गारोहणवार्ताभिधायी द्वितीयो दाशरथी रामभद्रमयोध्यामुपनेतुं तेनैव पथा चित्रकूटमुपगतः ।

**जाम्बवान्**—(सशङ्कम् ।) ततस्ततः ।

**श्रवणा**—ततश्च तस्मिन् 'आर्य, लोके कैकेयानामाकल्पमनल्पमकीर्तिस्तम्भं निखनता केनापि च्छलितस्तातः । तत्संप्रति गृहाण रघूणामधिराज्यम्' इति पुनः पुनश्चिरमनुबन्धी रामेण सृष्टिकया प्रत्यादिष्टः कृतजटापरिग्रहो भरतः शरभङ्गमुनिप्रेषितामस्य पादुकां भद्रासनमधिरोप्य प्रजानामाभ्युदयिकमवेक्षमाणस्तदैव नन्दिग्रामं गतवान् ।

**जाम्बवान्**—(सहर्षम् ।) हन्त फलितमस्मद्व्यवसायश्रवणापरिश्रमाभ्याम् । ततस्ततः ।

**श्रवणा**—ततश्च शावाशौचमास्थितस्य क्षत्रियस्य प्रतिषिद्धमस्त्रग्रहणमिति च्छिद्रान्वेषिभिर्जनस्थानवास्तव्यैः खरदूषणप्रभृतिभिस्तत्र विराधो नाम राक्षसस्तीक्ष्णः प्रहितः ।

**जाम्बवान्**—(विहस्य ।) धिङ्मूर्खाः, आतिपातिके हि कार्ये राज्ञां सद्यः शुद्धिः । ततस्ततः ।

---

प्रकृतिः शिष्टः । द्वितीयो दाशरथिर्भरतः । तस्मिन्रामे पुनः पुनरनुबन्धीत्यन्वयः । 'आर्य' इति संबोधनम् । अनुबन्धी सस्नेहवचनः । आकल्पं यावत्संसारम् । निखनता आरोपयता । 'सृष्टिका शपथेऽपि च' इति रत्नकोषः । 'शरीरस्पृष्टिकया' इति पाठे शरीरस्पर्शरूपशपथेनेत्यर्थः । प्रत्यादिष्टो निषिद्धः । परिग्रहो ग्रहणम् । पादुका उपानत् । 'अथ पादुका । पादूरुपानत्' इत्यमरः । साध्वसाच्छरभङ्गमुनिद्वारा पादुका याचितेति भावः । भद्रासनं सिंहासनम् । आभ्युदयिकमभ्युदयम् । स्वार्थे 'विनयादिभ्यष्ठक्' । शावाशौचं मृतकाशुद्धिः । 'शावमाशौचं' इति पाठे 'नञः शुचीश्वर–' इत्यादिनोभयपदवृद्धिः । आस्थितः प्राप्तः । जनस्थानं मलयाद्रिसमीपे रक्षोवासस्थानम् । वास्तव्यैर्वासिभिः । वसेस्तव्यत् कर्तरि णिच्च । तीक्ष्णः खरः । 'खरात्मत्यागिनोस्तीक्ष्णः' इति धरणिः । आतिपातिके तत्क्षणोपजाते । यद्वातिपातः शत्रोरागमनं तद्भवं कार्यमस्त्रग्रह-

---

१. 'प्रकृतिपौरजानपदः'. २. 'स्वर्गाधिरोहण–'. ३. 'दाशरथिर्द्वितीयः'; 'भरतो दाशरथिर्द्वितीयः'. ४. 'सातङ्कम्'. ५. 'केनापि भूतेन'. ६. 'रघूणां धुरमिति पुनः पुनरनुबन्धी'. ७. 'अस्य रामस्य'. ८. 'आरोप्य'. ९. 'अवेक्षिष्यमाणः'. १० 'गतः'. ११. 'क्षत्रस्य निषिद्धम्'. १२. 'विराधनामा'. १३. 'विशुद्धिः'

श्रवणा—ततश्च विराधवधाक्षिप्तहृदये दुःसहशोकदीर्घाह्नीमौर्ध्वदेहिकीं पितुः क्रियामतिवाह्य भगवता चतुःसमुद्रमुष्टिंधयेन विन्ध्याचलचापलारम्भविस्रब्धघातिना वातापिदानवदीर्घयात्रामङ्गलकलशेन कलशयोनिना सनाथामरण्यवीथीं प्रतिष्ठमाने दाशरथौ पथि धाराधरो नाम वायसः सहसैव वैदेहीमुपाद्रवत् ।

जाम्बवान्—(स्वगतम् ।) इदं तावदपशकुनं नाम । (प्रकाशम् ।) ततस्ततः।

श्रवणा—ततश्च

रक्षोभिचारचरुभाण्डमिव स्तनं यो
देव्या विदेहदुहितुर्विददार काकः ।

णम् । 'न राज्ञां राजकर्मणि' इति स्मृतेः । दीर्घाह्नीम् । 'राजाहःसखिभ्यष्टच्' । 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः । 'अह्नोऽदन्तात्' इति णत्वम् । गौरादित्वान्ङीष् । देहादूर्ध्वं भवा-मौर्ध्वदेहिकीं श्राद्धादिक्रियाम् । अध्यात्मादित्वाट्ठञ् । चतुर्णां समुद्राणां समाहारश्चतुःसमुद्रम् पात्रादित्वात्स्त्रीत्वनिषेधः । समुद्राणां चतुःसंख्यत्वं प्राच्यादिदिक्चतुष्टयभेदात् । तन्मुष्टीकृत्य धयति पिवति मुष्टिंधयः । 'नाडीमुष्ट्योश्च' इति खश् । 'असुरैर्देवगणैः सह युधि भङ्गमवाप्य समुद्रे प्रविश्य स्थितम् । पुनरपि तथा कृत्वा तथा स्थितम् । एवं पुनःपुनरिति ज्ञात्वा शक्रेण समुद्रपानार्थमगस्त्यमुनिरर्थितः । तेन च निःशेषमयं पीतः-इति पुराणम् । विस्रब्धघाती विश्वासघातकः । पुरा किल सुमेरुस्पर्धया वर्धिते विन्ध्ये सूर्यसंचारावरोधाद्विनश्वरे जगति देवैरगस्त्यमुनिरर्थितः । ततस्तेन यावदहं परावृत्यागच्छामि तावत्त्वया न वर्धनीयम्, किं तु खर्वो भवेति विन्ध्यः सत्यंकारितः । ततो दक्षिणां दिशं प्रति गतोऽगस्त्यो न परावृत्त्य पुनरायातः । ततः प्रभृति विन्ध्यस्तादृश एवासीत्-इति पुराणम् । वातापी दानवभेदः । दीर्घयात्रा मरणम् । यात्रायां मङ्गलकलशस्यान्वयाद्रूपकम् । देवापिवातापिनौ भ्रातरावसुरौ मायाविनौ बभूवतुः । तत्र वातापी मेषरूपः । देवापी यं कंचिन्मांसार्थिनं वातापिनं मारयित्वा संस्कृत्य च भोजयति । ततो देवापी भुक्तं तमाह्वयति । स च भोजकस्योदरं विदार्य निर्गत्य तेन सह हस्तास्फालनेन क्रीडते । एवं तेन हर्षाद्बहवो मारिताः; कालक्रमेणागस्त्यमुनिरपि तेन तथैव भोजितः । ततश्च जीर्णस्तदुदरे वातापी-इति पुराणम् । कलशयोनिनागस्त्येन । 'वीथ्यालिरावलिः पङ्क्तिः' इत्यमरः । प्रतिष्ठमाने गच्छति । 'समवप्रविभ्यः स्थः' इति तङ् । वायसः काक उपाद्रवत् । स स्तनौ नखेन दारितवान् । संप्रति सीतापहारोत्थानं सूचयति—रक्षोभिचारेति । यः काकः सीतायाः स्तनं

१. 'वधक्षणाक्षिप्तहृदये दुःख-'. २. 'दीर्घनिद्रा-'. ३. 'कलशयोनिनागस्त्येन मुनिना सनाथामरण्यानीं प्रविष्टमाने'.

ऐषीकमस्त्रमधिकृत्य तदा तमक्ष्णा
काणीचकार चरमो रघुराजपुत्रः ॥ ३ ॥

**जाम्बवान्**—ततस्ततः ।

**श्रवणा**—ततश्च

क्रमेणैव सुतीक्ष्णादीनुपस्थाय महामुनीन् ।
अगस्त्यशासनादास्ते पञ्चवट्यां रघूद्वहः ॥ ४ ॥

**जाम्बवान्**—(सहर्षम् ।) तर्हि हस्तगत[1] एवास्माकम् । कियदन्तरमृष्यमूकजनस्थानयोः ।

**श्रवणा**—आर्य, न खल्वद्यापि श्रोतव्यं शृणोषि ।

**जाम्बवान्**—अवहितोऽस्मि ।

**श्रवणा**—तत्र च कामुकी रामभद्रमनुप्रविश्य[2] रसं[3] दास्यामीति संकल्पितपतिद्रोहपातकिनी शूर्पणखा लक्ष्मणरोषहुतभुजि कर्णनासौष्ठमयीभिस्तिसृभिराहुतिभिः प्रायश्चित्तयांचक्रे ।

---

विददार विदारयति स्म तं काकं चरमो रघुराजपुत्रो रामोऽक्ष्णा काणीचकार । 'येनाङ्गविकारः' इति तृतीया । इषीका वीरणशलाका । तस्या विकार ऐषीकमस्त्रमधिकृत्य व्यापार्य । विक्षिप्येति यावत् । कीदृशम् । अभिचारस्य मरणकारणयागस्य चरुभाण्डं हव्यभाण्डमिव । 'हव्यपाके चरुः पुमान्' इत्यमरः । ननु चरमशब्दस्य कनिष्ठवाचकत्वाद्रामस्य ज्येष्ठत्वात्कथं चरमो रघुराजपुत्र इति । न च चरमशब्देन कनिष्ठ एव लक्ष्मणो वाच्य इति वाच्यम् । रामेणैवाक्ष्णा काणः काकः कृत इति रामायणे दृष्टत्वात् । किं च रघुराजपुत्रान्वितेन कनिष्ठवाचकचरमशब्देन शत्रुघ्नस्यान्वयात् । तस्य च तत्रासांनिध्यादिति चेत्, अत्र केचित्—'ज्वलति कसन्तेभ्यो णः' इति विकल्पेन णप्रत्ययः । तेन रमयतीति रमो रामः इति समाधानमाहुः । तन्मन्दम् । चकारानन्वयात् । न च विददारेति क्रियापेक्षया काणीचकार चेत्यत्रैव चकारान्वयः । भिन्नकर्तृकत्वात् । एककर्तृके हि चकारान्वयो दृष्टः । यथा—देवदत्तो ग्रामं गच्छति पचति चेति । अन्ये तु—चरा संचारिणी । गतेति यावत् । मा लक्ष्मीर्यस्य स चरमो रामः । भरतप्रविष्टराज्यलक्ष्मीकत्वात्—इति वर्णयन्ति । अपरे तु—'चरमो ज्येष्ठकनिष्ठयोः' इति विश्वप्रकाशदर्शनाच्चरमो ज्येष्ठो रघुराजपुत्रः—इत्याहुः । इदं तु संगतमिव । कुव्याख्या तु विस्तरत्रासादुपेक्षिता । सुतीक्ष्णादीन्सुतीक्ष्णतृणबिन्दुशरभङ्गप्रभृतीन् । उपस्थाय संपूज्य । पञ्चवटी दण्डकारण्ये तपोवनम् । अन्तरं व्यवधानम् । कामुकी कामान्धा । 'लषपत—' इत्यादिना उकञ् । रसं विषविशेषम् । संकल्पितो मनसा कृतः । प्रायश्चित्तयांचक्रे प्राय-

---

१. 'हस्तस्थः'. २. 'राममनु—'. ३. 'विषं'.

**जाम्ववान्**—(सातङ्कम् ।) अहह महाननर्थकन्दः संवृत्तः । अथ भगिन्यास्तादृशं विडम्बनमवलोक्य खरादिभिः किं प्रतिपन्नम् ।

**श्रवणा**—(विहस्य ।) आर्य, किं प्रतिपन्नम् । यद्रामभद्रे धृतधनुषि प्रतिपद्यते ।

**जाम्ववान्**—(सहर्षहासम् ।) तत्किं तेऽपि वालिसाहायकोपस्थायिनो विराधयात्राप्रहतमध्वानमनुप्रपन्नाः ।

**श्रवणा**—अथ किम् ।

**जाम्ववान्**—श्रवणे, प्ररूढमिदानीं रामरावणयोर्वैरम् ।

**श्रवणा**—(हसन्ती ।) आर्य, मन्ये खरदूषणप्रभृतीनामभिभवाभिधाने केवलं क्लेशयिष्यति वाचमात्मनः । पुनरनक्षरमपि शूर्पणखामुखमावेदयिष्यति दशकंधरस्य ।

**जाम्ववान्**—(सस्मितम् ।) श्रवणे, लघूत्थमनर्थमुत्प्रेक्ष्य प्रमुग्धोऽस्मि ।

ऐक्ष्वाकेण पुरापि कौशिकमखादारभ्य लङ्केश्वरो
धत्ते शाश्वतिकं विरोधमधुना त्वेते हता बान्धवाः ।
उत्साहप्रभुमन्त्रशक्तिभिरलंभूष्णुच्छलज्ञो बली
दृप्तः शूर्पणखा निकारमपरं दृष्ट्वा कथं मृष्यते ॥ ५ ॥

शनैः शनैरनयोर्विरोधे संधुक्षमाणे तुल्यव्यसनस्थो दाशरथिरसहायः सूर्यसूनुना संधातुमीषत्करः स्यात् ।

---

श्चित्तं कृतवती । आतङ्कस्त्रासः । अहह खेदे । अनर्थकन्दोऽनिष्टमूलम् । विडम्बनं धर्षणम् । धृतधनुषीत्यत्र 'धनुषश्च' इत्यनङ् समासान्तो न भवति । समासान्तविधेरनित्यत्वात् । साहायकं सहायत्वम् । 'सहायाच्चेति वक्तव्यम्' इति वुञ् । यात्रा गमनम् । प्रहतं क्षुण्णम् । अभिभवो मारणम् । लघूत्थं शीघ्रोत्थानम् । **ऐक्ष्वाकेणेति** । ऐक्ष्वाकेण सह । शश्वन्नित्यम् । तद्भवं शाश्वतिकम् । 'कालाट्ठञ्' । कौशिकयागादारभ्य नित्यं विरोधं धत्ते । अधुना पुनरेते बान्धवा हता यतः, अतोऽवश्यं विरोधं धत्त इति भावः । अपरं शूर्पणखानिकारं दृष्ट्वा कथं मृष्यते सहिष्यते । उत्साहशक्तिरुत्साहसामर्थ्यम् । प्रभुशक्तिः प्रभावः । मन्त्रशक्तिर्मन्त्रणासामर्थ्यम् । अलंभूष्णुरतिसमर्थः । 'भुवश्च' इति ग्स्नुः । दृप्तो दर्पिष्ठः । संधुक्षणं दीपनम् । व्यसनं वैरम् । सहायो द्वितीयः सूर्यसूनुः

---

१. 'साहाकस्थायिनो'. २. 'खरप्रभृतीनां'. ३. 'लघूत्थानम्'. ४. 'क्वैते'. ५. 'स्वल्पव्यसनस्थो'.

**श्रवणा**—आर्य, किमिदानीमनुष्ठेयमस्ति। मम हि शिष्यपुत्रो निषादचक्रवर्ती गुहो लक्ष्मणमित्त्रम्। अनेन सोपानेन सुखाधिरोहो रघुपतिरस्माकम्।

**जाम्बवान्**—(सहर्षस्मितम्।) श्रवणे, य[1]द्यसि सुग्रीवपक्षपातिनी। तद्गच्छ सत्वरमुपस्थापय निषादराजम्।

(इति श्रवणा निष्क्रान्ता।)

(नेपथ्ये। एकतः।)

भो भो लक्ष्मण, वैशेषिककटन्दीप[2]ण्डितो जगद्विजयमानः पर्यटामि। क्वासौ रा[3]मः। तेन सह विव[4]दिष्ये।

(अन्यतः।)

भो भो परिव्राजक, कालसर्पखलीकारखर्जूलता न खलु सुखाकरी वृश्चिकमन्त्रतान्त्रिकस्य।

**जाम्बवान्**—क[5]थं लक्ष्मणपरिव्राजकौ [6]संलपतः। शृणोमि तावत्। (इ[7]त्यवधत्ते।)

(नेपथ्ये। पुनरेकतः।)

आः लक्ष्मण, सर्वविद्रावणः खल्वहम्। को मया जनितमानभङ्गो न पराजीयते।

---

सुग्रीवः ईषत्करः सुकरः। सोपानेनोपायेन। 'कटकली' इति प्रसिद्धेन। उपस्थापय लक्ष्मणसंनिधिं प्रस्थापय। 'निषादराजानम्' इति पाठे समासान्तविधेरनित्यत्वं शरणम्। नेपथ्ये रावणवचनम्। कटन्दी वैशेषिकशास्त्रव्याख्याग्रन्थः। कटन्द इति यस्य प्रसिद्धिः। सा च रावणेन कृतेति च्छलतो ज्ञापयति। 'कन्दली' इति पाठे कन्दली वैशेषिकटीका। सापि रावणेनैव कृता। अथ च कन्दली कलहवान्। पण्डितः सूरिः कुशलश्च। विवदिष्ये उद्ग्राहं करिष्ये योत्स्ये च। 'भासनोप-' इति तङ्। अन्यतश्च लक्ष्मणवचनम्। खलीकारो भर्त्सनम्। तत्र खर्जूः कण्डूः। तद्योगात्सिध्मादित्वाल्लच्। तस्य भावः खर्जूलता। न सुखाकरी न सुखजनिका। 'सुखप्रियादानुलोम्ये' इति डाच्। वृश्चिकमन्त्रतान्त्रिकस्य वृश्चिकमन्त्रज्ञातसिद्धान्तस्य। वृश्चिकः शूककीटः। 'वीछ' इति प्रसिद्धः। 'वृश्चिकः शूककीटौषधिविशेषयोः' इति विश्वः। 'तान्त्रिको ज्ञातसिद्धान्तः' इत्यमरः। संलपतः संलापं कुरुतः। 'संलापो भाषणं मिथः' इत्यमरः। सर्वं विद्रावयतीति सर्वविद्रावणः सर्वविप्लवकर्ता। अथ च सर्ववित्सर्वज्ञो रावणः। अनयोः पुरः-

---

१. 'सत्यमसि'. २. 'पण्डितोऽस्मि'. ३. 'ते रामभद्रः'. ४. 'विवदितव्यम्'. ५. 'कथं पथि'. ६. 'मिथः प्रलपतः'; 'संप्रलपतः'. ७. 'इत्यवधत्ते' इति पुस्तकान्तरे नास्ति.

(नेपथ्ये । पुनरन्यतः ।)

किं भवान्रावणः ।

(जाम्ववान्सविशेषमवदधाति ।)

(नेपथ्ये । पुनरेकतः ।

भो वाचोयुक्तिज्ञ, सर्वेषां विद्रावणः खल्वहमिति समस्य व्याहृतमन्यथाभिसंधाय वाक्छलेन प्रत्यवतिष्ठमानो निगृहीतोऽसि । तन्मुञ्च मां भिक्षायै ।

(अन्यतः ।)

किं त्वया, किंतरां च रावणेन । अहमप्युत्सुकोऽस्मि । त्वरितं गच्छामि ।

**जाम्बवान्**—कथमेतदस्फुटार्थमेव निर्वहणम् । मन्ये पुनरेष परिव्राजकच्छलेन रावण एव कोपादुक्तमप्यपलप्य स्वं नाम द्रागपक्रान्तः । (सर्वतो निरूप्य ।) अये, पुराणप्रियसुहृदस्माकं दक्षिणस्या दिशः परापतञ्जटायुरिव लक्ष्यते । तदेनमनुपालयामि तावत् । दूरदृशो हि गृध्राः । कदाचिदेष लङ्काद्वीपवृत्तान्तमप्युपलभेत ।

(प्रविश्य ।)

**जटायुः**—प्राप्तैवेयमस्माभिः पञ्चवटी । यदमूर्गोदावरीतरङ्गसीकरसेकसुकुमारमांसलपरिसरारण्यमालिन्यो जनस्थानसीमानः । अपि च ।

---

स्फूर्तिकमर्थमाश्रित्याह—भवान्रावण इति । वाचोयुक्तिरुक्तिप्रत्युक्त्यादिः । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इत्यलुक् । अन्यथाभिसंधाय तात्पर्याज्ञानेन हेतुना वा वाक्छलेनोत्तरं ददन्निगृहीतोऽसीत्यर्थः । यथा 'अयं नेपालादागतः । नवकम्बलवत्त्वात्' इति वादिवाक्ये 'कुतोऽस्य नवसंख्याकाः कम्बलाः' इत्युत्तरं ददत्प्रतिवादी वाक्छलेन निगृहीतो भवति, तथा 'सर्वविद्रावणोऽहम्' इति वाक्ये 'भवान्सर्वज्ञाता रावणः' इत्युत्तरं प्रयच्छन् लक्ष्मणो निगृहीत इति भावः । प्रत्यवतिष्ठमानः प्रत्यवस्थानं कुर्वन् । विरोधेनोपतिष्ठमान इति यावत् । भिक्षायै भिक्षां याचितुम् । 'क्रियार्थोपपदस्य च–' इति चतुर्थी । किं त्वया, किंतरां च रावणेन । अपि तु न किमपि । उभयत्र किंशब्दो जुगुप्सायाम् । निर्वहणमुपक्रान्तस्योपसंहारः । 'उपक्रान्तस्य संहारो भवेन्निर्वहणं त्विदम्' इति भरतः । परिव्राजको भिक्षुः । द्राक्शीघ्रम् । 'नासूचितं विशेत्पात्रम्' इति स्वरसाज्जटायुप्रवेशं सूचयितुमाह—**अये इत्यादि** । अये इति निर्लक्ष्यसंबोधने । दक्षिणस्या इत्यपादाने पञ्चमी । परापतन्नागच्छन् । अनुपालयाम्यपेक्षे । गृध्राः पक्षिभेदाः । वृत्तान्तं वार्ताम् । 'जटायुस्तु जटायुषा' इति शब्दभेदाज्जटायुशब्दे द्विरूपता । मांसलं घनम् ।

---

१. 'किं च'. २. 'पुराणसुहृत्'. ३. 'अनुलपामि'. ४. 'पञ्चवटीभूः'.

दृश्यन्ते मधुमत्तकोकिलवधूनिर्धूतचूताङ्कुर-
　　प्राग्भारप्रसरत्परागसिकतादुर्गास्तटीभूमयः ।
याः कृच्छ्रादतिलङ्घ्य लुब्धकभयात्तैरेव रेणूत्करै-
　　र्धारावाहिभिरस्ति लुप्तपदवीनिःशङ्कमेणीकुलम् ॥ ६ ॥

**जाम्बवान्**—(किंचिदुपसृत्य ।) कुतः पुनरियता वेगेन वयस्यो जटायुः ।

**जटायुः**—(दृष्ट्वा ।) कथं जाम्बवान् । सखे, क्षमस्व । न संभाजयिष्यामि[1] तावद्भवन्तम् । मया हि मलयाचलकुलायादार्यसंपातिपादानभिवाद्य[2] निवर्तमानेन मारीचसहचरः संचरन्निमामरण्यानीमभिलक्षितो राक्षसराजः । तदतिविषममाशङ्कमानं मां वत्सरामभद्रस्नेहस्त्वरयति ।

**जाम्बवान्**—(स्वगतम् ।) वयमप्येतदेव प्रतिपित्सामहे[3] । (प्रकाशम् ।) सखे, त्वरस्व[4] । (इति निष्क्रान्तः ।)

**जटायुः**—(परिक्रम्यावलोक्य च ।) इयमग्रे पञ्चवटी । (सवितर्कम् ।)

　　नीतो दूरं कनकहरिणश्रद्धया[5] रामभद्रः
　　　पश्चादेनं द्रुतमुपसरत्येष वत्सः कनिष्ठः ।

---

परिसरः समीपभूः । मालिन्यो मालायुक्ताः । 'व्रीह्यादिभ्यश्च' इतीनिः । **दृश्यन्त इति** । तटीभूमयो जलस्थानपरिसरभूमयो दृश्यन्त इत्यन्वयः । मधुभिः पुष्परसैर्मत्ता याः कोकिलवध्वस्ताभिर्निर्धूतो यश्चूताङ्कुरप्राग्भारस्तस्मात्तस्य वा प्रसरन्तो ये परागाः पुष्परेणवस्त एव सिकता वालुकास्ताभिर्दुर्गा गहनाः । यद्वा मधुर्वसन्तस्तत्र मत्ता उत्साहशालिन्यो याः कोकिलवध्व इत्यादि पूर्ववत् । प्राग्भारो विस्तारः शिखरं वा । 'परागः सुमनोरजः' इत्यमरः । यास्तटीभूमयः । कृच्छ्रात्कष्टात् । लुब्धक आखेटिकः । धारावाहिभिः पुनः पुनरनुवर्तमानैः कूटीभूतैर्वा । एणीकुलं कर्तृ । रेणूत्करैर्लुप्तपदवीनिःशङ्कं यथा स्यादेवमस्ति । कुलविशेषणमेव वा । सभाजयिष्यामि पूजयिष्यामि प्रीतिं करिष्यामि वा । 'सभाज प्रीतिसेवनयोः' । कुलायः पक्षिगृहम् । संपातिर्जटायुषो ज्येष्ठभ्राता । सहचरो द्वितीयः । 'महारण्यमरण्यानी' इत्यमरः । अतिविषममत्यन्तकठिनम् । प्रतिपित्सामहे प्रतिपत्तुं ज्ञातुमिच्छामः । 'पद गतौ' । सन् । 'सनि मीमा–' इतीस् । 'पूर्ववत्सनः' इति तङ् । श्रद्धाभिलाषः । कनिष्ठो लक्ष्मणः । ततो रामात् । बिभ्यत्रस्यत् । वीप्सायां द्विरुक्तिः । 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । तत इति 'भीत्रार्थानां

---

१. 'संभावयिष्यामि'. २. 'पादावभिवन्द्य'. ३. 'प्रतिपत्स्यामहे'. ४. 'त्वरस्व त्वरस्व'. ५. 'हरिणच्छद्मना'.

विभ्यद्भिर्भ्यस्त्प्रविशति ततः पर्णशालां च भिक्षु-
र्धिक्कष्टं भोः प्रथयति निजामाकृतिं रावणोऽयम् ॥ ७ ॥

अहह ।

आर्यपुत्रार्यपुत्रेति रुदन्तीं कुररीमिव ।
रथमारोप्य वैदेहीमेष पापः क्व यास्यति ॥ ८ ॥

(साटोपं[3] परिक्रामन् ।) अरेरे रावण,

वधूटीमिक्ष्वाकोर्निजकरतलस्पर्शमलिना-
मिमां कुर्वाणस्य स्फुरति हृदि शोभैव भवतः ।
कुले येषां किं तु त्वमसि गणितास्तेऽपि गुरवो
न सप्त ब्रह्माणः कथमिव पुलस्त्यप्रभृतयः ॥ ९ ॥

(पुनराकाशे ।) अलीकाट्टहासधूमधूसरितदशवक्त्रवल्मीक, किमात्थ रे राक्ष-
सापसद, किमात्थ ।

'जगद्विलोभिसीताख्यमामिषं हरतो मम ।
अयं किल जरद्गृध्रः करादाच्छिद्य नेष्यति' ॥ १० ॥ इति[3] ।

आः पाप, कथमेवमभिदधासि[4] । तिष्ठ तिष्ठ ।

भुजविटपमदेन व्यर्थमन्धंभविष्णु-
र्धिगपसरसि चौरंकारमाक्रुश्यमानः[5] ।

भयहेतुः' इत्यपादानता । धिक्कष्टं भोरित्यव्ययसमुदायः खेदे । 'धिक्कष्टं भोश्चापि खेदे' इति भरतः । निजामाकृतिं दशमुखादिस्वरूपाम् । प्रथयति प्रकाशयति । 'आर्यपुत्रेति संबोध्यः पतिः पत्नीजनेन तु' इति भरतः । कुररी 'हापुती' इति प्रसिद्धा चटकविशेषस्त्री । 'वधूटी वर्धटी जनी' इत्यमरः । मलिनां दूषिताम् । तव हृदि शोभैव स्फुरति । अपि तु शोभा न युक्ता । सप्त ब्रह्माणः सप्तर्षयः । येषामिति निर्धारणे षष्ठी । तस्य पुलस्त्यस्यापत्यत्वात् अलीकं मिथ्या । अट्टहासो महाहासः । अपसदोऽधमः । आमिषं भोग्यवस्तु । उत्कृष्टरूपं मांसं वा । 'उत्कृष्टे पलले भोगे भोग्यवस्तुनि चामिषम्' इति विश्वः । किल निश्चये वाक्यभूषायां वा । आच्छिद्य गृहीत्वा । **भुजेति** । भुजा एव विटपाः शाखास्तेषां मदेन गर्वेण व्यर्थं निष्फलमेवान्धंभविष्णुरन्धीभवन्संस्त्वं यदपसरस्यपयासि तद्धिक् । अनन्ध एवान्धो भवति । 'कर्तरि भुवः–' इति खिष्णुच् ।

१. 'धिग्धिक्कष्टम्'. २. 'इति साटोपम्'. ३. 'इति' इति पुस्तकान्तरे नास्ति. ४. 'कथमभिदधासि'. ५. 'आकृष्यमाणः'.

त्वदुरसि विदधातु स्वामपस्कारकेलिं
कुटिलकरजकोटिक्रूरकर्मा जटायुः ॥ ११ ॥
(इति निष्क्रान्तौ ।)

विष्कम्भकः ।

(ततः प्रविशति लक्ष्मणः ।)

लक्ष्मणः—अहो दुर्निवारदारुणक्रोधशोकलज्जागहनो विषमोऽयं दशाविवर्तः । यस्मिन्नितिकर्तव्यताभिधानमप्यस्माकमनौपयिकम् । तथाहि

तत्तादृग्दशकण्ठवञ्चनरुषा धूमायमानो गिरं
नार्धोक्तप्रविलीनवर्णविधुरामार्यः समाप्नोति मे ।
चापे तातजटायुजीवितकथापर्यन्तधूमायित-
क्रोधोत्पीडनिपीतशोकजडिमा दृष्टिस्तु विश्राम्यति ॥ १२ ॥

(नेपथ्याभिमुखः ।) इत इत आर्य मारीचमथन, दृश्यन्ताममूरवाचीं ककुभमभि वर्धमाना विन्ध्यवनवीथिभूमयः ।

---

कीदृशः । चौरंकारं चौरवत्कृत्वाकुश्यमानः । चोरिकामुच्चार्य वाक्कुश्यमानः । 'कर्मण्याक्रोशे कृञः खमुञ्' । नखैर्विदारणमपस्कारः । 'अपाच्चतुष्पात्–' इत्यादिना सुट् । करजो नखः कोटिरग्रम् । क्रूरं कठिनम् । दारुणो महान् । गहनो गभीरः । विवर्तः परिणामः । इतिकर्तव्यतेदं कृत्वेदं कर्तव्यमिति ज्ञानम् । अनौपयिकमयुक्तम् । 'युक्तमौपयिकं लभ्यम्' इत्यमरः । 'उपायाद्ध्रस्वश्च' इति ठक् ह्रस्वत्वं च । तत्तादृगिति । तत्तादृक्सीतापहरणरूपं वञ्चनं भर्त्सनम् । रुषा क्रोधेन । धूमायमानो धूममुद्वमन् । वह्निरिव । 'फेनाच्च' इति चकारात्क्यङ् । आर्यो मे मम कृते गिरं वाणीं न समाप्नोतीति संबन्धः । रोषवशादर्धोक्त एव प्रविलीनो ध्वस्तो यो वर्णस्तेन विधुरां खण्डिताम् । चापे पुनर्दृष्टिर्विश्राम्यति । अर्थाद्रामस्य । तातोऽनुकम्प्यः । 'तातोऽनुकम्प्ये जनके' इति धरणिः । पर्यन्तोऽवसानम् । अनेन जटायुवधः सूचितः । धूमायितेति क्रोधस्याग्निना साधर्म्यात् । उत्पीडोऽतिशयः निपीतः शुष्कीकृतः शोकस्य जडिमा शीतलत्वं यया सा । मारीचमथन इत्यनेन मारीचवध उक्तः । अवाचीं ककुभं दक्षिणां दिशम् । अभि अभिमुखम् । 'अभिप्रती आभिमुख्ये' इति कर्मप्रवचनीयसंज्ञा । 'दक्षिणस्यामवाच्येव' इति शब्दभेदः । 'दिशस्तु ककुभः काष्ठाः' इत्यमरः । वीथिः पङ्क्तिः ।

---

१. 'प्रविश्य'. २. 'समाप्नोत्ययम्.' ३. 'मुखम्'. ४. 'विन्ध्याचल–'.

(प्रविश्य[1] ।)

**रामः**—(आकाशे लक्ष्यं बद्धा ।)

कुले वा शौर्ये वा भुजसमुदये वा तपसि वा
बभूवुर्न प्राञ्चस्त्वमिव भवितारो न चरमे ।
अहो दिङ्मोहस्ते[2] समजनि चिरादेष[3] न खलु
प्रवीराणां पन्था दशवदन येनासि चलितः ॥ १३ ॥

(विमृश्य । सखेदस्मितम् ।) हंहो पौलस्त्य,

सिद्धश्रोत्रपरम्परापरिगतैरेभिः प्रपौत्रस्य ते
वृत्तैरद्य पुलस्त्यवर्जमभितः स्मेरेषु देवर्षिषु ।
विष्वग्वृत्तिरसंगता नमयितुं दुर्वारलज्जाभर-
म्लानश्रीस्तु चतुर्मुखी भगवतो धातुः कथं वर्तते ॥ १४ ॥

(क्षणमनुध्याय ।) हा प्रिये विदेहराजपुत्रि । (इति संवरणं नाटयति ।)

**लक्ष्मणः**—(उपसृत्य ।) आर्य, कोऽयमभिषङ्गो नाम भवादृशानप्यास्पदीकरोति ।

पतिते[4] व्यसने दैवाद्दारुणे[5] दारुणात्मनि[6] ।
संवर्मयति वज्रेण धैर्यं हि महतां मनः ॥ १५ ॥

---

समुदयः सङ्ग्राम उच्छ्रायो वा । प्राञ्चः पूर्वे । चरमे पश्चाद्भवाः । 'प्रथमचरम-' इति वा सर्वनामसंज्ञा । भवितारो भविष्यन्ति । लुट् । दिङ्मोहो दिग्भ्रमः । समजनि जातः । कर्तरि चिण् । खलु एवार्थे । सुभटानामेष पन्था नैवेत्यर्थः । येन पथा । हंहो संबोधने । वृत्तैश्चरित्रैः सीतापहारस्वरूपैः । अभितः सर्वतः । पुलस्त्यवर्जं पुलस्त्यापत्यत्वाद्रावणस्य । स्मेरेषु किंचिद्धासवत्सु सत्सु । विश्वग्वृत्तिश्चतुःपार्श्वर्तिनी । अत एव नमयितुमसंगता । अन्योन्याकर्षणात् । कथं वर्तते । अपि तु केनापि प्रकारेण स्थातुं न शक्ता भवति । लज्जया पुरुषेण मुखं नम्रीकृत्य स्थीयते इति स्वभावः । चतुर्मुखस्य तदपि न संभवतीति भावः । अभिषङ्ग आसङ्गो दुःखं पराभवो वा । 'अभिषङ्गो मतो दुःखे आसङ्गेऽपि पराभवे' इति विश्वः । आस्पदं स्थानम् । व्यसनेऽनिष्टफले । दारुणे भीषणे । दारुणात्मनि महास्वरूपे जने । 'दारुणो भीषणे गुरौ' इति शाश्वतः । धैर्यं धीरता पाण्डित्यं वा कर्तृ । साधूनां मनः कर्म । वज्रेण संवर्मयति वर्मणा संनह्यते ।

---

१. 'ततः प्रविशति रामः'. २. 'धिङ्मोहः'. ३. 'कथयति'; 'कथमिह'. ४. 'पतति व्यसने'; 'पतितव्यसने'. ५. 'दारुणात्'. ६. 'दारुणात्मनः'.

**रामः**—(दीर्घं निःश्वस्य ।) वत्स,

सहजधैर्यवशंवदवृत्तयो हृदि रुषश्च शुचश्च नियन्त्रिताः ।
इह तु किं करवै यदपत्रपा किमपि मामवमत्य विजृम्भते ॥ १६ ॥

**लक्ष्मणः**—(पुरोऽवलोक्य ।) आर्य, अयमग्रे तातजटायुषो वीरलोकसाधनसिद्धक्षेत्रमरण्यानीसंनिवेशः । पश्य ।

भग्नोऽयं कथमस्ति रावणरथस्तातेन वज्राङ्कुर-
क्रूरापस्किरमाणभङ्गुरनखत्रोटित्रुटद्बन्धनः ।

**रामः**—(सकरुणम् ।)

हा सीरध्वजराजपुत्रि स तदा दृष्टस्त्वया धन्यया
पक्षीन्द्रो दशकण्ठकुञ्जरशिरःसंचारिपञ्चाननः ॥ १७ ॥

(इति लक्ष्मणमवष्टभ्य ध्यानं नाटयति ।)

**लक्ष्मणः**—(स्वगतम् ।) महादोषः खल्वयमतिप्रसज्यमानो मानसः शोकाख्यो विकारः । तदन्यतः प्रेरयामि । (प्रकाशम् ।) आर्य, पश्य पश्य ।

विन्ध्यगिरिराजकन्यान्तःपुरमेतास्तरङ्गमालिन्यः ।
वेतस्वतीभिरद्भिस्तौर्यत्रिकगुणनिकां दधते ॥ १८ ॥

---

'सत्यापपाश–' इति णिच् । **सहजेत्यादि** । स्वाभाविकधैर्येण वशंवदा आयत्ता वृत्तयो व्यापारा यासां ताः शुचः शोकाः, रुषः क्रोधाश्च हृदि चित्ते नियन्त्रिता नियमिताः । इह पुनः किं करवै करवाणि । आत्मनेपदे 'एत ऐ' । यत् अपत्रपा अन्यतो लज्जा किमप्यनिर्वचनीयं यथा स्यादेवं मां विजित्य विजृम्भते स्फुटीभवति । रोषाः शोकाश्च साहजिकधैर्यायत्तव्यापारा भवन्तीति ते नियमिताः, अपत्रपा तु न धैर्यनिवारणीयेति किं करिष्यामीति भावः । वशंवदेति 'प्रियवशे वदः खच्' । 'अरुर्द्विषदजन्तस्य–' इति मुम् । 'लज्जा सापत्रपान्यतः' इत्यमरः । 'मन्युशोकौ तु शुक्स्त्रियाम्' इति च । 'रुट्क्रुधौ स्त्रियाम्' इत्यपि । वीरस्य युद्धे मरणाद्यो लोको भुवनं तस्य साधनं हेतुः । **भग्नोऽयमिति** । तातेन जटायुषा वज्राग्रवत्क्रूरे भयंकरे अपस्किरमाणे विदारयन्त्यौ तत एव भङ्गुरे स्वतः कुटिले ये नखत्रोटी ताभ्यां त्रुटद्बन्धनं यत्र सः । अपस्किरमाणेति 'किरतेर्हर्षजीविकाकुलायकरणेषु' इति तङ् । पूर्ववत्सुट् । त्रोटिश्चञ्चुः । 'चञ्चुस्त्रोटिरुभे स्त्रियौ' इत्यमरः । पञ्चाननः सिंहः । ध्यानं नाटयति । मूर्छतीत्यर्थः ।

---

१. 'दीर्घमुष्णं च'. २. 'अयमेवाग्रे'. ३. 'सिद्धिक्षेत्रमरण्यसंनिवेशः'. ४. 'अपस्क्रियमाण–'. ५. 'महान्दोषो हि'. ६. 'मानसः' इति पुस्तकान्तरे नास्ति. ७. 'प्रतिसारयामि'. ८. 'वहुवेतसाभिः'.

**रामः**—(उन्मील्य चक्षुषी दीर्घमुष्णं च निःश्वस्य ।) वत्स, दर्शनीयमेतत् ।

कुमुदवनविशायजाग्रदम्भोरुहकृतयामिकविभ्रमा रमन्ते ।
मदकलकरिकर्णतालनृत्यन्मुखरमयूरमनोरमास्तटिन्यः ॥ १९ ॥

(इति परिक्रामतः ।)

**लक्ष्मणः**—आर्य, अयमितो गिरिर्माल्यवान् ।

इह महिषविषाणव्यस्तपाषाणपीठ-
स्खलनसुलभरोहिद्गर्भिणीभ्रूणहत्याः ।
कुहरविहरमाणप्रौढभल्लूकहिक्का-
चयचकितकिरातत्रस्तशस्त्रा वनान्ताः ॥ २० ॥

**रामः**—(चिरं दृष्ट्वा सकरुणास्रम् ।)

प्रतिपरिसरं भूयानर्घः शिखण्डभृतां यथा-
मिलितमलिभिः संभुज्यन्ते कदम्बविभूतयः ।

---

अतिप्रसज्यमानो बलात्कारेण प्रवर्तमानः । रसान्तरं कर्तुमाह—**विन्ध्येति** । एतास्त-रङ्गमालिन्यो नद्योऽद्भिर्जलैस्तौर्यत्रिकगुणनिकां गीतवाद्यनृत्याभ्यासं कुर्वते । अद्भिः कीदृशीभिः । वेतस्वतीभिः । वेतसो वानीरवृक्षस्तद्युक्ताभिः । 'कुमुदनडवेतसेभ्यो ड्मतुप्' । नद्यः कीदृश्यः । विन्ध्याद्रिराजस्य कन्यान्तःपुरं कन्यावरोधः । अन्तःपुरपदेनान्तःपुरस्थाः स्त्रियो लक्षणयोच्यन्ते । 'स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्' इत्यमरः । 'अभ्यासे गुणनी योग्या' इति च । 'तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम्' इति च । अद्भिरिति 'अपो भि' इति तकारः । दर्शनीयताप्रयोजकं रूपमाह—**कुमुदेति** । तटिन्यो नद्यो रमन्ते रतिं जनयन्ति । कीदृश्यः । कुमुदवनेन सह विशायेन पर्यायेण जाग्रता अम्भोरुहेण कृतो यामिकस्य प्राहरिकस्य विभ्रमो विलासो यासु ताः । विशाय इति 'व्युपयोः शेतेः पर्याये' इति घञ् । मदकला मत्ता ये करिणो हस्तिनस्तेषां कर्णतालेन कर्णशब्देन नृत्यन्तो मुखराः शब्दायमाना ये मयूरास्तैर्मनोहराः । 'भवेन्मदकलो मत्ते' इत्यमरः । अपरमपि रसान्तरमाह—**आर्येति** । इतोऽत्र । **इह महिषेति** । विषाणं शृङ्गम् । रोहितो हरिणविशेषाः । भ्रूणो गर्भः । हत्या विनाशः । विहरमाणोऽटन् । कर्त्रभिप्राये तङ् । हिक्का शब्दभेदः । वनान्ता वनदेशाः । रमन्ते इति क्रियाध्याहारोऽनुषङ्गो वा । 'अन्तः स्याद्देशनाशयोः' इति धरणिः । स्वरूपवाचित्वे क्लीवता स्यात् । यद्वा वनान्ता वनसमीपभूमयः । 'अन्तं स्वरूपे देशे ना न स्त्री शेषेऽन्तिकेष्वपि' इति मेदिनीकरः । पर्यन्तभूः परिसरः । प्रतिर्वीप्सायाम् । तेन परिसरं परिसरं प्रतीत्यर्थः । 'प्रतिपरिसरे' इति पाठे 'तृतीयासप्तम्योर्बहुलम्' इत्यन्निषेधः । अर्घो महोत्सवः पूजा-

अभिनवघनव्यूढोरस्कः प्रवर्षति माल्यवा-
न्विषधरवधूगर्भाधानप्रियंकरणीरपः ॥ २१ ॥

वत्स लक्ष्मण, धारय माम् । न शक्नोमि स्तम्भयितुमात्मानम् ।

इयमविरलश्वासा शुष्यन्मुखी भिंदुरस्वरा[1]
तनुरवयवैः श्रान्तस्रस्तैरुपैति[2] विवर्णताम् ।
स्फुरति जडता वाष्पायेते दृशौ गलति[3] स्मृति-
र्मयि रसतया शोको भावश्चिरेण विपच्यते ॥ २२ ॥

इति लक्ष्मणेन धार्यमाणो निमीलिताक्ष एव ।) हा प्रिये दण्डकारण्यविहार-सब्रह्मचारिणि । (इति[4] पुनः संवृणुते ।)

---

विधिर्वा । 'अर्घो महोत्सवे पूजाविधौ मूल्येऽपि दृश्यते' इति विश्वः । शिखण्डभृतां मयूराणाम् । यथामिलितं कालोपस्थितवस्त्वनतिक्रमेण । 'यथा सादृश्ये' इत्यव्ययीभावः । कदम्बो नीपवृक्षः । विभूतिः पुष्पादिसंपत्तिः । नवमेघेन व्यूढं विन्यस्तं संहतं वा उरो मध्यं यस्य सः । व्यूढः संहतविन्यस्तपृथुलेष्वभिधेयवत्' इति मेदिनीकरः । विषधरः सर्पः । अप्रियं प्रियं क्रियते याभिस्ताः प्रियकरणीः । 'आढ्यसुभग–' इति ख्युन् । अपो जलानि । स्तम्भयितुं स्थिरीकर्तुम् । आत्मानं देहम् । ननु कुतो हेतोरात्मानं स्तम्भयितुं न शक्यत इत्यत आह—इयमिति । इयं तनुः शरीरमवयवैः करचरणादिभिः करणभूतैर्विवर्णतामुपैति । कीदृशैः । श्रान्ताः परिश्रान्ता अत एव स्रस्ता इतस्ततः पतनशीलाः । अवलत्वात् । तैरविरलो निरन्तरः श्वासो यस्यां तादृशी । अत एव शुष्यन्मुखं यस्यां तादृशी । भिदुरस्वरा भिन्नस्वरा । घर्घरस्वरेति यावत् । कुतस्तनुर्वैवर्ण्यमुपैतीत्यत आह—मयि मद्विषये शोकः स्थायिभावश्चिरेण रसतया करुणरूपेण विपच्यते परिणतो भवति । भाव एव शोकादिः करुणादिरसतां याति । तथा चोक्तं रसप्रकाशे—'प्रेमरूपो रसो ज्ञेयः शृङ्गारादिप्रभेदवान् । काव्यार्थं भावयत्येष भाव इत्यभिधीयते ॥ आलम्बनविभावेभ्यः स्वेभ्यः स्वेभ्यः समुन्मिपन् । रसो रत्यादिरूपेण भाव इत्यभिधीयते ॥ रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ भावा एवाभिसंपन्नाः प्रयान्ति रसतामभी । यथा द्रव्याणि भिन्नानि मधुरादिरसात्मताम् ॥' कुतः शोकः परिणतो भवतीत्यत आह—जडता जाड्यं स्फुरति । दृशौ चक्षुषी वाष्पायेते अश्रूण्युद्वमतः । 'वाष्पोष्मभ्यामुद्वमने' इति क्यङ् । ['वा क्यषः' इति तङ् ।]स्मृतिश्च गलति । तथा च शोकस्यैवाभिनयोऽयम् । तथा च रसप्रकाशे—'जाड्यं शरीरे नयने वाष्पोद्रेकः स्मृतिक्षयः । शोके सति भवेदे-

---

१. 'मधुरस्वरा'. २. 'श्रान्तश्रान्तैः'. ३. 'गलिता'. ४. 'इति' पुस्तकान्तरे नास्ति.

**लक्ष्मणः**—(सखेदमात्मगतम् ।) केन पुनरेष रसो रसान्तरेण तिरस्क्रियते।

(नेपथ्ये ।)

आः पाप कबन्धहतक, अयं न भवसि ।

**रामः**—(आकर्ण्य । ससंभ्रमम् ।) वत्स लक्ष्मण, दुरात्मना दनुकबन्धेन कलहायमानो वयस्यस्ते गुह इव श्रूयते । बहुच्छलानि रक्षांसि । तत्त्वरितमभ्युपपद्यस्व ।

**लक्ष्मणः**—तथा । (इति निष्क्रान्तः ।)

**रामः**—(पार्श्वतोऽवलोक्य । सकरुणम् ।) देवि वामशीले सीर[1]ध्वजराजनन्दिनि, इयं ते वि[2]श्वविस्रम्भमर्मवेदिनी निचुलनिकुञ्जलेखा । इह हि

स्ववपुषि नखलक्ष्म स्वेन कृत्वा भवत्या
कृतमिति चतुराणां दर्शयिष्ये सखीनाम् ।
इति रहसि मया ते भीषितायाः स्मरामि
स्मरपरिमलमुद्राभङ्गसर्वंसहायाः ॥ २३ ॥

(इति धनुरवष्टभ्य लक्ष्मणवृत्तान्तदत्तचेतास्तथैवास्ते ।)

(ततः प्रविशति लक्ष्मणो गुहश्च ।)

**गुहः**—[3]जयतु जयतु देवः ।

विनेता वर्णानामयमभयदुर्गं दिविषदां
कनिष्ठः काकुत्स्थो जयति जगदाश्चर्यचरितः ।

---

वम्' इति । हे सब्रह्मचारिणि सहाध्यायिनि । कबन्धो नामासुरभेदः । अयं न भवसि इदानीमेव न भविष्यसि । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । कलहायमानो युद्धं कुर्वन् । 'शब्दवैर–' इति क्यङ् । उपपद्यस्व त्रायस्व । गुह इव श्रूयत इत्यनेन भविष्यद्गुहप्रवेशः सूचितः । विश्वविस्रम्भमर्मवेदिनी समस्तविश्वासतत्त्वज्ञा । निचुलो हिज्जलः । लेखा राजिः । चतुराणां विदग्धानाम् । दर्शयिष्ये 'अभिवादिदृशोरात्मनेपदस्योपसंख्यानम्' । इत्यनेन प्रकारेण रहस्येकान्ते ते स्मरामि त्वां स्मरामि । 'अधीगर्थ–' इति कर्मणि षष्ठी । भीषितायास्त्रासितायाः । 'भियो हेतुभये षुक्' । स्मरः कंदर्पस्तस्य परिमलो मर्दस्तस्य मुद्रा निश्चयस्तेन भङ्गः पराभवस्तस्य सर्वंसहायाः । 'पूःसर्वयोर्दारिसहोः' इति खच् । विनेता रक्षको विनयकर्ता वा । वर्णानां ब्रा-

---

१. 'सीरध्वजनन्दिनि'. २. 'नर्मविस्रम्भमर्मभेदिनी'. ३. 'जयति जयति'.

यदस्त्रैः पाप्मानं रजनिचरजन्मग्रहसृजं
विजित्य स्वर्लोकानविकलमुपातिष्ठत दनुः ॥ २४ ॥

रामः—साधु वृत्तम् । शिवाः सन्तु तस्य देवयानाः पन्थानः । वत्स गुह, वियति विवर्तमानः कश्चिदचल इव लक्षितः किमसौ तेनैव योजनबाहुना प्रहरणीकृतः ।

गुहः—देव,

दुन्दुभिं नाम दैत्येन्द्रं निष्पिपेष कपीश्वरः ।
तस्य कङ्कालकूटोऽयं कुमारेण विलोडितः ॥ २५ ॥

तन्निमित्तजन्मा संप्रति वालिनो[1] महानभियोगः संभाव्यते ।

लक्ष्मणः—ततः किम् ।

रामः—वत्स, मा मैवम् । माननीयः खल्वसौ पुराणवीरो महेन्द्रसूनुः । (गुहं प्रति ।) कुतः पुनरागच्छतो वत्सस्य योजनबाहुरन्तरायः संवृत्तः ।

गुहः—देव, व्योमयानेन सत्वरमपक्रामति रावणे सीतादेव्याः—

रामः—(साशङ्कमात्मगतम् ।) किं पुनरस्याः[2] ।

घ्नणादीनां विनेता । 'दृप्तानाम्' इति पाठे दर्पशालिनां जयकर्ता । दिविषदां देवानामभयदुर्गं न भयं यस्मादेतादृशदुर्गम् । यद्वा अभयार्थं दुर्गं दुर्गस्थानम् । लक्ष्मणविशेषणम् । अजहल्लिङ्गतयान्वयः । यद्यपि कनिष्ठः काकुत्स्थः शत्रुघ्नस्तथापि संनिहितत्वात्प्रकृते लक्ष्मणस्यैवान्वयः । यदस्त्रैर्लक्ष्मणास्त्रैः । दनुर्दैत्यविशेषः । रजनिचरो दानवो राक्षसो वा । एकक्रियाकारितया साम्यम् । तस्य जन्मने ग्रह आसक्तिस्तत्सृजं तज्जनकम् । यद्वा दानवजन्मरूपो ग्रहो दुष्टग्रहस्तज्जनकं पाप्मानं पापं विजित्य स्वांल्लोकानुपातिष्ठत संगतवान् । संगतिकरणे तङ् । एष खलु गन्धर्वो लक्ष्मणाद्विनाशं प्राप्य स्वर्गमागमिष्यतीति शापान्तः । तेन स्वर्गं गत इति भावः । वृत्तं निष्पन्नम् । देवैर्गम्यते यैस्ते देवयानाः । करणे ल्युट् । विवर्तमानो भ्राम्यन् । असौ अचलः । योजनबाहुना कबन्धेन । 'विदुर्योजनबाहुं तं कबन्धमुदरे मुखम्' इति पुराणम् । प्रहरणमस्त्रम् । निष्पिपेष चूर्णयामास । कपीश्वरो वाली । 'स्याच्छरीरास्थि कङ्कालः' इत्यमरः । कुमारेण लक्ष्मणेन । विलोडितो धनुष्कोट्या विक्षिप्तः । अभियोगो युद्धोद्यमः, रोषो वा । मा मैवम् । वाच्यमिति शेषः । अत्यन्तनिषेधार्थं द्विरुक्तिः । वत्सस्य तव । गुहस्येत्यर्थः । अन्तरायो विघ्नः । 'अन्तरा वृत्तः' इति पाठे पथि मध्यवर्ती भूत इत्यर्थः । व्योमयानेन विमानेन । 'व्योमयानं विमानोऽस्त्री' इत्यमरः । यद्वा आकाशगमनेन । हनूमानिति 'अन्येषामपि

१. 'पुनर्वालिनो'.　२. '(साशङ्कम् ।) किं तस्याः'; 'किमस्याः'.

**गुहः**—यदुत्तरीयमुत्प्लुत्य हनूमानग्रहीत्, तदेतद्देव[1], गुणानुरागिणा कुमारसुग्रीवेण सभाजयितुमुपस्थितवतो मम हस्ते देवस्य प्राभृतीकृतम् । (इति रामस्य हस्ते सीताया उत्तरीयमर्पयति ।)

**रामः**—(गृहीत्वा हृदये निधाय । सास्रम् ।) हा देवि विदेहराजनन्दिनि, कथमुत्तरीयशेषा दृश्यसे । (इति निमीलिताक्षो लक्ष्मणमवष्टभ्नाति[2] ।)

**लक्ष्मणः**—(निःश्वस्य ।) सखे निषादराज, कुशलं सुग्रीवस्य ।

**गुहः**— अद्य त्वयि वार्तामनुयुञ्जाने ।

**रामः**—(स्वगतम् ।)

जानन्नेव दशाननोऽपहरते नः प्रेयसीमस्ति[3] वा
चन्द्रापीडमुपासितुं स हि शिरोदाम स्वयं कृत्तवान् ।
त्रासो रजनीचरस्य न पुनः कण्ठाटवीकर्तना-
द्धिग्बाणैर्मम चन्द्रहासहतकक्षुण्णोऽयमध्वा वृतः ॥ २६ ॥

**लक्ष्मणः**—आर्य, कथमस्मासु[4] वनौकसोऽपि सौजन्यमनुरुध्यन्ते ॥

**रामः**—किमुच्यते । सुग्रीवः सनाभिरयमस्माकम् । अस्य हि प्रभवो भगवानैक्ष्वाकस्य[5] राजर्षिवंशस्य प्रसविता सहस्रदीधितिः । (हृदयस्थमुत्तरीयं दृष्ट्वा ।) वत्स गुह, स्पृहयामि सुग्रीवहनूमतोर्दर्शनाय । तदृष्यमूकगामिनं मार्गमावेदय[6] ।

---

दृश्यते' इति दीर्घः । सभाजयितुं प्रीणयितुम् । प्राभृतमुपढौकनम् । 'पासन' इति प्रसिद्धम् । 'प्राभृतं तु प्रदेशनम्' इत्यमरः । अनुयुञ्जाने पृच्छति । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । **जानन्नेवेति** । नोऽस्माकं प्रेयसीं सीतां जानन्नेव । यद्वा जानन्नेव । रक्षोनाशहेतूनस्मानिति भावः । अपहरते चोरयति, नयति वा । अस्ति वेति लोकोक्तिः । इदं पुनर्वर्तत इत्यर्थः । हि यतः स रावणश्चन्द्रापीडं महादेवमुपासितुं स्वयं शिरोदाम कृत्तवान् । तत्तस्मात्पुनः कण्ठाटवीकर्तनादपि रावणस्य न वा त्रासः । चन्द्रहासो रावणखड्गः । स एव हतको निन्द्यः । तेन क्षुण्णः प्रहतोऽयमध्वा मार्गः शिरश्छेदरूपो वृतोऽन्विष्टः, प्रार्थितो वा । मम बाणैः । अत्र धिक् । गर्हेत्यर्थः । वनौकसो वानराः । अनुरुध्यन्ते कामयन्ते । 'अनोरुध कामे' दिवादिः । किमुच्यते । अपि तु नास्ति वागवसरः । यतोऽस्माकमयं सनाभिः स्वजनः । 'सपिण्डास्तु सनाभयः' इत्यमरः । प्रभवत्यस्मादिति प्रभव उत्पत्तिस्थानम् । प्रसविता जनकः । दर्शनायेति 'स्पृहेरीप्सितः' इति

---

१. 'तदेतद्देव'. २. 'अवलम्बते'. ३. 'अस्तु'. ४. 'किमस्मासु'. ५. 'भगवान्' इति पुस्तकान्तरे नास्ति. ६. 'आदेशय'.

**गुहः**—(सहर्षमात्मगतम् ।) कथमचिरादेव फलवती जाम्बवतो[1] मन्त्रशक्तिः । (प्रकाशम् ।) इत इतो मतङ्गाश्रमवर्त्मना देवः ।

(इति सर्वे परिक्रामन्ति ।)

**गुहः**—देव, पश्य पश्य ।

विदधति मुदमक्ष्णोर्नूतनानूपनीप-
प्रहसनसहचर्यानित्यनृत्यन्मयूराः ।
फलपुलकितजम्बूकुञ्जकूजत्कपोत-
प्रियशबरपुरंध्रीबन्धवो विन्ध्यलेखाः[2] ॥ २७ ॥

**रामः**—(सर्वतो निरूप्य । सखेदम् ।)

समन्तादुन्मीलद्बहललहरीलङ्घनकला-
लघुप्रेङ्खत्पम्पानिलविदलदेलासुरभयः ।
अविद्यावैदेहीशतलिपिकरीणां मम धिया-
ममी हस्तालम्बं विपिनविनिवेशा विदधते ॥ २८ ॥

**लक्ष्मणः**—आर्य, इतस्तावत् ।

भयभ्रष्टप्रेयोविरहनिरहंकारहरिणी-
मुखालोकोन्मीलद्गुरुकरुणरुग्णां सहचरीम् ।

---

संप्रदानता । ऋष्यमूकः पर्वतभेदः । मन्त्रशक्तिर्मन्त्रणासामर्थ्यम् । सीताविरहसंतप्तं राममन्यमनीकर्तुमाह—**विदधतीति** । विन्ध्यस्य लेखाः शृङ्गपङ्क्तयो वनपङ्क्तयो वा अक्ष्णोश्चक्षुषोर्मुदं हर्षं विदधतीति योज्यम् । कीदृश्यः । फलैः पुलकित इव पुलकितो यो जम्बूवृक्षस्तस्य कुञ्जे कूजन्तः शब्दायमाना ये कपोतास्तेषु प्रिया लालसा याः शबरपुरंध्र्यस्तासां बन्धवो मित्राणीत्यर्थः । अनुगता आपो यत्र सोऽनूपो जलप्रायो देशः । 'ऊदनोर्देशे' इत्यपोऽकारस्य ऊत्वम् । नीपः कदम्बवृक्षः । प्रहसनमिव प्रहसनं पुष्पविकासः । सहचर्या साहचर्यम् । 'जलप्रायमनूपं स्यात्' इत्यमरः । **समन्तादिति** । अमी विपिनविनिवेशा वनप्रदेशा मम धियां हस्तालम्बमुपचयं हस्ताकर्षणं व्यवसायं वा विदधत इत्यन्वयः । कीदृशीनाम् । अविद्यावैदेहीशतलिपिकरीणां मिथ्यासीताशतस्य लिखनकर्त्रीणाम् । सीताविनिविष्टचित्तत्वात्सर्वत्र सीतैवास्तीति भ्रम इति भावः । समन्तात्सर्वत्रोन्मीलन्ती प्रसरन्ती या बहला निबिडा लहरी कल्लोलस्तल्लङ्घनकलायां लघवो ये प्रेङ्खत्पम्पानिलाश्चलत्सरोविशेषवायवस्तैर्विदलन्त्यो या एलास्ताभिः सुरभय इत्यर्थः । **भयेत्यादि** । भयेन त्रासेन भ्रष्टः पलायितो यः प्रेयान्वल्लभस्तस्य विरहेण निरहंकारा

---

१. 'जाम्बवती'. २. 'विन्ध्यपादाः'.

विलोक्य म्लेच्छन्तीमलमलमिति प्राक्प्रणिहितं
शरव्याल्लुब्धानां हृदयमपराद्धं न तु शराः ॥ २९ ॥

**रामः**—(सास्रम् ।) हा देवि जानकि,

मारीचमृगयाव्यग्रे मयि प्राप्ते च रावणे ।
आसामिव कुरङ्गीणां तवोत्पश्यामि लोचने ॥ ३० ॥

**लक्ष्मणः**—(स्वगतम् ।) कः पुनरुपायो येन विनोद्येते हृदयमार्यस्य ।

(नेपथ्ये ।)

भो भो वनौकसः, कथयन्तु भवन्तः । केनास्मत्कीर्तिकामिनीकेलिचङ्क्रमणक्रीडापर्वतो विवर्तितोऽयं दनुराजकङ्कालकूटः ।

**गुहः**—(दृष्ट्वा । सभयसंभ्रमम् ।) देव, पश्य पश्य । कनकमयसहस्रपत्रपुण्डरीकवैकक्षकप्रभापटलेन दुन्दुभिकरङ्कव्यतिकरजन्मना च रोषरागेण त्रिगुणपिशङ्गीं तनुमादधानः प्लवगराजोऽयमित एवाभिवर्तते ।

---

शोच्या या हरिणी तस्या मुखावलोकनेनोन्मीलन्नुदयं गच्छन्यो गुरुरतिशयितः करुणो रसस्तेन रुग्णां दुःखिताम् । अलमलं मैवं मैवमिति चारुभाषया भाषमाणाम् । यद्वा व्यक्तमभिदधतीं सहचरीं प्रियां प्रेक्ष्य लुब्धानां व्याधानां शरव्याल्लक्ष्यात्प्राक्प्रणिहितं पूर्वप्रहितं हृदयमपराद्धं च्युतलक्ष्यमभूत् । न तु शरा अपराद्धाः । शरव्य एव पतिता इत्यर्थः । हरिणीहनननिषेधकारिण्याः प्रियाया वचनं श्रुत्वा प्रथमं त्यक्तशरत्वाद्धरिणीहनने व्याधानां धिग्बुद्धिरभूदिति भावः । केचित्तु 'मृगवधे प्रथमं मनोमात्रं प्रहितं प्रेयसीवचसा तन्निवृत्तम् । इति तस्यापराद्धत्वं च्युतलक्ष्यत्वम् । शरप्रस्थापनं कर्तव्यमेवासीदिति न तस्यापराद्धत्वमभूत्' इति वर्णयन्ति । 'अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः' इत्यमरः । म्लेच्छन्तीमिति 'म्लेछ व्यक्तायां वाचि' इत्यस्य रूपम् । 'म्लेच्छनं चारुभाषायाम्' इति विश्वः । मृगया आखेटकम् । व्यग्रे आकुले । उत्पश्यामि तर्कयामि । नेपथ्ये भो भो इत्यादि वालिवचनम् । चङ्क्रमणं कुटिलगमनम् । विवर्तितो विलोडितः । कङ्कालकूटः कूटाकारं मांसशून्यसकलशरीरास्थि । 'कराट' इति प्रसिद्धम् । 'स्याच्छरीरास्थ्नि कङ्कालः' इत्यमरः । कनकमयेति । कनकमयानि सहस्रं पत्राणि यस्मिन्पुण्डरीके तस्य वैकक्षकं तिर्यगुरसि न्यस्तपुष्पमाला । पटलं समूहः । 'वैकक्षकं तु तत् । यत्तिर्यक्क्षिप्तमुरसि' इत्यमरः । करङ्कमस्थि । 'करङ्को मस्तकास्थिनि' इति मेदिनीकरः । व्यतिकरो विलोडनम् । रागो लौहित्यम् । कनकमयपुण्डरीकमालाप्रभया,

---

१. 'प्रणिहिताः'. २. 'विनोदयते'. ३. 'कामिनीचङ्क्रमणकेलिपर्वत'. ४. 'प्रभामण्डलेन'.

पौलस्त्यावयवौघसंकटभुजामूलक्षणोन्मूलित-
 द्वैराज्याममरावतीं कृतवते वीराय [1]यस्मै हरिः ।
नित्यालोकनकौतुकव्यसनिनीः [2]शङ्के सहस्रं दृशः
 पिण्डीकृत्य दलच्छलेन कनकाम्भोजस्रजं दत्तवान् ॥ ३१ ॥

[3]क्षणं च देवस्य महावीरसंवादगोष्ठीयमृष्यमूकयात्रामन्तरयिष्यति । [4]तद-हमग्रतो गत्वा दिष्ट्या वर्धयामि सूर्यतनयम् ।

**रामः**—एवमस्तु ।

**गुहः**—वाचिकं पुनरेतावत्कुमारसुग्रीवस्य यत् 'मित्रपर्यायान्तरितं देवस्य दास्यमिच्छामि' इति ।

**रामः**—(अपवार्य ।) वत्स लक्ष्मण, एवमाह वयस्यस्ते गुहः । किं च [5]मन्त्रोत्साहसंपन्नानामपि प्रभुशक्तिमपेक्षन्ते सिद्धयः । तदहं वालिस्थाने सुग्रीव[6]मभिषिच्य तत्कोषदण्डाभ्यां समग्रशक्तिर्वैरपारं गन्तुमिच्छामि ।

**लक्ष्मणः**—(सस्मितम् ।) यद्येवमुपयुज्यमानमिन्द्रसूनुमुपेक्ष्य सुग्रीवेणोपयोक्ष्यमाणेन संधिरिति वक्रः खल्वयं पन्थाः ।

---

रोपरागेण, स्वभावेन च त्रैगुण्यमित्यर्थः। **पौलस्त्येति**। पौलस्त्यो रावणस्तस्यावयवौघो हस्तादिसमूहस्तेन संकटं व्याप्तं यद्भुजामूलं कक्षा तेन क्षणमुन्मूलितं द्वैराज्यं यस्यास्ताम् । प्रत्यहं वाली रावणं कक्षायां निक्षिप्य पृथ्वीप्रदक्षिणं कृत्वा सप्तसमद्रेषु संध्यामकृतेति पुराणम्। यदा रावणं कक्षानिक्षिप्तं करोति तदामरावती एकराजवती भवति । अन्यदा रावणेनैव द्वैराज्यं तत्रेति भावः । यस्मै वालिने । हरिरिन्द्रः । शङ्के तर्कयामि । मम सुतेन तेन मम द्वैराज्यं क्षणं खण्डितमिति दशश्चक्षूंषि दलच्छलेन पत्रव्याजेन पिण्डीकृत्य वर्तुलीकृत्य कनकाम्भोजस्रजं दत्तवानिति । दिष्ट्या वर्धयामि उत्सवं तस्य करोमि । 'दिष्ट्यापूर्वो वर्धतिरुत्सवे' इति भरतः । 'संदेशवाग्वाचिकं स्यात्' इत्यमरः । मित्रपर्यायः सुहृदभिधानं तेनान्तरितं व्यवहितम् । मित्राभिधानं दासत्वमित्यर्थः। मन्त्रः षाड्गुण्यम् । शक्तयः प्रभावोत्साहमन्त्रजाः । अभिषिच्यारोप्य । कोषो धनम् । दण्डो राज्यम् । उपयुज्यमानमुपयुक्तीभवन्तम् । इन्द्रसूनुं वालिनम् । उपयोक्ष्यमाणेनोपयुक्तीभविष्यता । वक्रोऽनृजुः । उपयुक्तत्यागात् । सुग्रीवेण समं प्रीतिकरणे कारणमाह—

---

१. 'तस्मै'. २. 'मन्ये'. ३. 'क्षणं च वीरसंवाद–'. ४. 'तदयम्'. ५. 'मन्त्रोत्साहशक्ति–'. ६. 'आधाय'.

**रामः**—(सस्मितम् ।) वत्स, साध्वेव¹ ब्रवीषि । किं तु ।

दृप्यत्पौलस्त्यकण्डूभिदुरभुजभरोष्मायमाणः कपीन्द्रो
नायं नः संदधीत क्वचिदपि हि विधौ नैव साहाय्यकामः ।
सोऽहं सुग्रीवमेतद्दमनदृढतरं² मित्रमिच्छामि पश्चा-
त्पारस्त्रैणेयपुत्रव्ययशिथिलशुचं शक्रमाराधयामि³ ॥ ३२ ॥

**लक्ष्मणः**—साधुदर्शिनी⁴ बुद्धिरार्यस्य । किं च विधूतशापेन दनुनापि देवभूयां गतिमभिलम्भितेन⁵ संदिष्टमार्यस्य यथा 'अस्य निषादपतेर्वचसि देवेनावधातव्यम्' इति ।

**रामः**—तद्गुहोऽपि प्रतिदूत्यमर्हति ।

**लक्ष्मणः**—(गुहं प्रति ।) वयस्य, एवमस्मद्गिरा सुग्रीवो वक्तव्यः—

'पितायं रेतोधास्तव तरणिरस्मत्कुलगुरु-
र्मनुर्वैमात्रेयस्तदपि सहजं मित्रमसि नः ।
अथापि ज्ञातेयं शिथिलयसि कापेयचपलः⁶
शरास्तन्मे वालिक्षतजरसलोलाः प्रतिभुवः' ॥ ३३ ॥

---

**दृप्यदिति** । भिदुरः स्वयं भेदनशीलः । ऊष्मायमाणस्तेज उद्वमन् । 'वाष्पोष्मभ्यामुद्वमने' इति क्यङ् । अयं कपीन्द्रो वाली नोऽस्मान्न संदधीत न संधियुक्तान्कुर्यात् । हि यतः । विधौ कार्ये । साहाय्यं सहायत्वम् । प्रकृतमुपसंहरति—सोऽहमित्यादि । दमनं मारणम् । तर्हीन्द्रपुत्रस्य वालिनो वधे इन्द्रस्य शोकः स्यादित्यत आह—पश्चादित्यादि । पश्चाच्छक्रमाराधयाम्याराधयिष्यामि । वर्तमानसामीप्ये लट् । परस्त्रिया अपत्यं पारस्त्रैणेयः । 'कल्याण्यादीनामिनङ् च वा' इति ढक् । ढस्येयः । व्ययो नाशः शिथिलशुचमल्पशोकम् । तथा च परस्त्रीसंभवपुत्रनाशादिन्द्रस्यापि नातिक्रोधो भविष्यतीति भावः । 'पारस्त्रैणेयस्तु परस्त्रियाः' इत्यमरः । विधूतस्त्यक्तः । दनुर्दनुजः कबन्धः । देवभूयं देवत्वम् । 'भुवो भावे' इति क्यप् । 'स्याद्देवभूयं देवत्वम्' इत्यमरः । अभिलम्भितः । प्रापितः । दूत्यं दूतकर्म । पुरोहितादित्वाद्यत् । 'दूत्यं तद्भावकर्मणी' इत्यमरः । **पितेत्यादि** । अयं तरणिः सूर्यस्तव पिता । कीदृशः । रेतोधाः शुक्रार्पकः । 'आतो मनिन्–' इत्यादिना विच् । सूर्यस्य त्वमौरसः पुत्रः । यद्वा रेतस्तेजः । तद्दधाति रेतोधास्तेजोनिधिः । 'रेतः शुक्रे च तेजसि' इति विश्वः । अस्मत्कुलगुरुर्मनुस्तव वैमात्रेयः सपत्नभ्राता । तस्मादस्माकमपि सहजं कुलजं मित्रं त्वमसि । तथापि कापेयचपलः

---

१. 'साध्वेवं'. २. 'दृढतमं'. ३. 'आराधयावः'; 'आराधयामः'. ४. 'साधुदर्शिनीय'. ५. 'गतिं लम्भितेन'. ६. 'तरलः'.

**रामः**—(विहस्य ।) वत्स गुह, एष खलु पौलस्त्यगतेनामर्षेण धूमायमानो यया कयाचिद्वाचा सौमित्रिरभिदधातु नाम । सततसमिध्यमानजानकीविरहवैश्वानरेण रामचेतसा पुनरग्निसाक्षिकमेव सुग्रीवो मित्रमभ्युपगतः ।

**गुहः**—(सहर्षम् ।) परमनुगृहीतोऽसौ देवेन विकर्तनतनयः । (सपरिहासस्मितं च ।)

सुग्रीवे यदि पक्षपातमधुरं देव त्वदीयं मनः
किं नस्तेन विदांकरोतु भगवानम्भोजिनीवल्लभः ।
नव्येनात्मजराज्यलाभरभसोद्भूतेन यस्तेजसा
पूर्वस्मादधिकेन दुःसहतरो लोकेषु वर्तिष्यते ॥ ३४ ॥

**लक्ष्मणः**—(विहस्य ।) कथं तपनतनयस्य राज्यमङ्गीकारिता वयं वयस्येन ।

**रामः**—(सस्मितम् ।) वत्स गुह, न तावत्प्रकाशमेवं प्रतिशुश्रूषति मे हृदयम् ।

**गुहः**—(सप्रश्रयस्मितम् ।) स्वामिन्, इयमेव महतां शैली ।

सन्तो मनसि कृत्यैव प्रवृत्ताः कृत्यवस्तुनि ।
कस्य प्रतिश्रृणोति स्म कमलेभ्यः श्रियं रविः ॥ ३५ ॥

---

कपिभावचञ्चलः सन्यदि ज्ञातेयं ज्ञातिभावं शिथिलयसि त्यजसि तदा वालिक्षतजरसचपला मे शराः प्रतिभुवो लग्नकाः । तव चाञ्चल्ये सति यैः शरैर्वाली मारणीयस्तैरेव त्वामपि हनिष्यामीति भावः । ज्ञातेयं कापेयमिति 'कपिज्ञात्योर्ढक्' इति भावे ढक् । 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः । ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः ॥' इत्यमरः । क्षतजं रक्तम् । समिध्यमानः स्वयं प्रज्वलन् । 'ञिइन्धी दीप्तौ' । कर्मकर्तरि लट् । अग्निसाक्षिकमिति । अग्निः साक्षी यत्र । पक्षपातोऽनुग्रहः । विदांकरोतु जानातु । अम्भोजिनीवल्लभो भगवान्सूर्यो दुःसहतरं यथा स्यादेवं लोकेषु वर्तिष्यत इत्यन्वयः । नव्येन स्तव्येन । प्रतिशुश्रूषत्यङ्गीकारमिच्छति । 'ज्ञाश्रुस्मृदृशां सनः' इति प्राप्तस्य तङः 'प्रत्याङ्भ्यां श्रुवः' इति प्रतिषेधः । 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः' इत्यमरः । शैली व्यवहारः । मनसिकृत्य हृदये कृत्वा । 'अनत्याधान उरसिमनसी' इति गतिसंज्ञायां समासे ल्यप् । अत्रार्थान्तरं न्यस्यति—कस्येति । कस्येत्यनन्तरं पुरत इति शेषः । यद्वा कस्य कृते । प्रतिश्रृणोति स्माङ्गीकृतवान् । तथा च रविणा कमलेभ्यः श्रीर्मनसैव

---

१. 'वयस्य'. २. 'असौ' इति पुस्तकान्तरे नास्ति. ३. 'वो महतां'. ४. 'कृत्वैव'.

(नेपथ्ये ।)

भो भो वनौकसः, कथयन्तु भवन्तः । दुन्दुभिकरङ्कविक्षेपसंभाव्यमानगम्भीरावष्टम्भनिर्भरेण केनास्माकमियं चिरस्य भुजकाण्डकण्डूतिरपनेष्यते ।

**गुहः**—(स्वगतम् ।)

मन्ये दर्पामयाविभ्यां नित्यं दोर्भ्याममर्षणः ।
जाम्बवत्प्रेरणादीप्तः[1] प्राप्तोऽयं प्लवगेश्वरः ॥ ३६ ॥

तदहमपि वीरयात्रादर्शनसुखं मुहूर्तमनुभवामि ।

(प्रविश्य ।)

**वाली**—(पुरोऽवलोक्य[2] ।) अये, प्रसन्नोज्ज्वलाकृती कावेतौ । नियतमाभ्यामेकेन दानवनाथकङ्कालोत्क्षेपनिमित्तेन भवितव्यम् । (स्मृतिमभिनीय । सवितर्कम् ।) आः, संदिष्टमस्मासु प्रियसुहृदा लङ्केश्वरेण । यथा—

'प्रक्लृप्तकान्तारकुमारभक्तिर्दौर्भागिनेयो जनकेन मुक्तः ।
मनुष्यसामन्तसुतो निषङ्गी सहानुजस्तिष्ठति दण्डकायाम् ॥ ३७ ॥

तौ चास्माकं तत्र विहारिषु निशाचरेषु पाटच्चरीं वृत्तिमातिष्ठमानौ भवद्भिः प्रतिकर्तव्यौ' इति । तत्किमयमयं च तौ[3] स्याताम् ।

**रामः**—वत्स लक्ष्मण, शृणु[4] । किमयं ब्रवीति महावीरः ।

**लक्ष्मणः**—(किंचिदुपसृत्य ।) इत[5] आवाम् । इत इतो भवान् ।

**वाली**—भोः[6], कावेतौ युवाम् ।

---

प्रतिश्रुतेति भावः । कमलेभ्य इति 'प्रत्याङ्भ्यां श्रुवः—' इति संप्रदानता । नेपथ्ये वाली वदति । अवष्टम्भो गर्वः । चिरस्येति निपातश्चिरार्थे । भुजकाण्डो भुजदण्डः । प्रकाण्डो वा । प्रशस्तभुज इत्यर्थः । दर्पेणैवामयावी रोगी । 'आमयस्य च दीर्घः' इति विनिः, दीर्घत्वं च । आकृतिः शरीरम् । नियतमाभ्यामेकेनेति 'पञ्चमी विभक्ते' इति निर्धारणे पञ्चमी । **प्रक्लृप्तेति** । प्रक्लृप्ता कृता कान्तारे वने कुमारे सुग्रीवे भक्तिः सेवा येन सः । दौर्भागिनेयो दुर्भगापुत्रः । कल्याण्यादित्वादिनङ् । ढक् । जनकेन पित्रा मुक्तस्त्यक्तः । मनुष्येषु सामन्तो राजा तत्पुत्रः । निषङ्गी तूणवान् । विहारिषु क्रीडत्सु, भ्रमत्सु वा । पटच्चरश्चोरस्तस्येयं पाटच्चरी तां वृत्तिं जीविकामातिष्ठमानौ स्वीकुर्वाणौ । 'आङः

---

१. 'प्रेरणात्'. २. 'अवलोक्य च'. ३. 'अनयोः'. ४. 'शृणु' इति पुस्तकान्तरे नास्ति. ५. 'इत ततः'. ६. 'भो भोः'.

**लक्ष्मणः**—महाभाग, राघवौ क्षत्रियावावाम्।

**वाली**—आयुष्मन्, आकारविशेषा एव गमयन्ति[1] जातिविशेषान्। तद्विशेषं ब्रूहि।

**लक्ष्मणः**—ननूक्तमेव राघवावावाम्।

**वाली**—(साभ्यसूयमिव।) आः,

वपुरपि विवृणोति क्षत्रतां को विशेषो
रघुषु यदभिधत्से राघवावित्यभीक्ष्णम्।
परिकलयितुमिष्टं नाम सांस्कारिकं वा-
महह कथमपत्यप्रत्ययान्निश्चिनोमि॥ ३८॥

**लक्ष्मणः**—(सधैर्यसंरम्भम्[2]।) भोः, आवां तौ रामलक्ष्मणौ।

**वाली**—(सविमर्शमात्मगतम्।) कथं 'तौ' इति सर्वनामपदेन प्रसिद्धावित्याह। तत्किमनयोरेवा[3]न्यतरः पिनाकधन्वनो दमयिता। सोऽपि रामभद्रो रामः स्यात्। भवतु। एवं तावत्। (प्रकाशं विहस्य।)

एको वेषपरिग्रहः परिकरः साधारणः कर्मणा-
माकृत्योर्मधुरत्वमेव सदृशं तुल्यैव गम्भीरता।
तद्द्रष्टुं चिरमुत्सुकोऽस्मि कतरो वां रामभद्रः पुनः
सर्वक्षत्रवधव्रती भृगुपतिर्येनावकीर्णीकृतः॥ ३९॥

**लक्ष्मणः**—(सविनयमिव।) आर्य सांक्रन्दने[4], लक्ष्मणस्तावदहम्।

**वाली**—अयमप्यपरो[5] दाशरथिः कौशिकान्तेवासी रामः।

---

प्रतिज्ञाने' इति तङ्। प्रतिकर्तव्यौ निवारणीयौ। गमयन्ति बोधयन्ति। को विशेषः। भेदो नेत्यर्थः। अभीक्ष्णं पुनः पुनः। सांस्कारिकं संस्कारो नामकरणादि तद्भवं नाम परिकलयितुं ज्ञातुमिष्टम्। अहह खेदे। अपत्यप्रत्ययादपत्यार्थविहितानादिप्रत्ययात्कथं तन्निश्चिनोमि। दमयिता भञ्जा। **एक इत्यादि**। एकः समानः। कर्मणां धनुर्धारणादीनां साधारणस्तुल्यः परिकरः समारम्भः। उद्योग इति यावत्। यद्वा परिकरः प्रगाढगात्रबन्धः। 'स्यात्परिकरः समारम्भे प्रगाढे गात्रबन्धने' इति मेदिनीकरः। वां युवयोर्मध्ये। निर्धारणे षष्ठी। भृगुपतिः परशुरामः। 'अवकीर्णी क्षतव्रतः' इत्यमरः। संक्रन्दन इन्द्रस्तस्यापत्यं सांक्रन्दनिः। 'अत इञ्'। तस्य संबोधनम्। अयमप्यपर-

---

१. 'अवगमयन्ति'. २. 'संभ्रमम्'. ३. 'एव' इति पुस्तकान्तरे नास्ति. ४. 'सांक्रन्दनेय'. ५. 'अथायमपरः'.

**लक्ष्मणः**—अथ किम् ।

**वाली**—(सहर्षोल्लासम् । किंचिदुच्चैः ।) भो रामभद्र,

एष त्रैवर्ण्यमात्रव्यवसितजगतो भार्गवस्यास्त्रगर्भा-
दाकृष्टक्षत्रजातिस्त्वमसि पथि गिरामद्य नः सुप्रभातम् ।
कक्षोष्मस्वेदसद्यःशमितदशमुखास्फोटकण्डूविकारो
वीरश्राद्धो[1] भुजस्त्वां परिचरतु चिरं चक्षुषी नन्दतां च ॥ ४० ॥

**रामः**—(दृष्ट्वा सहर्षम् ।) स एष महाबाहुः संक्रन्दनसूनुः ।

येन वीरेण गुप्तायां किष्किन्धायामियं मही ।
रावणाभिभवक्लान्ता शश्वदुच्छ्वासमश्नुते ॥ ४१ ॥

(इति परिक्रामति ।)

**लक्ष्मणः**—महाभाग, अयमार्यः । इत इतो भवान् ।

**वाली**—(उपसृत्य ।) रामभद्र,

सुरासुराणामसुभिर्दीव्यतां सभिको मुनिः ।
अद्य मे नारदस्तुष्टो येनासि भुजगोचरः ॥ ४२ ॥

**रामः**—महावीर, किमुच्यते । मूर्धाभिषिक्तोऽसि समरशौण्डानाम्[3] । तथा हि ।

---

इत्यत्रापिः प्रश्ने, वितर्के वा । अन्तेवासी शिष्यः । ब्राह्मणविट्शूद्रास्त्रिवर्णी तस्या भावस्त्रैवर्ण्यम् । तन्मात्रं व्यवसितं कृतं जगद्येन । सकलक्षत्रियविनाशात् । तादृशस्य । गर्भो मध्यम् । नोऽस्माकं गिरां पथि अद्य सुप्रभातमिदानीं कुशलम् । भवद्विषयिणी मम वाणी कुशलिनीति भावः । ऊष्मणः स्वेद ऊष्मस्वेदो घर्मजलम् । आस्फोटो युद्धम् । श्राद्धः श्रद्धायुक्तः । 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' । वीरे श्राद्धो वीरश्राद्धः । त्वां परिचरतु । त्वयासह युद्धमाचरत्वित्यर्थः । नन्दतां हर्षं भजेताम् । **येनेत्यादि** । क्लान्ता क्लिष्टा । शश्वदत्यर्थम् । उच्छ्वासमुचतामश्नुते प्राप्नोति । महाभागेति । 'भागो भाग्यैकदेशयोः' इति विश्वः । सङ्ग्रामाय भूमिमारचयति—**सुरासुराणामिति** । येन हेतुना त्वं भुजगोचरोऽसि, अतो मे नारदो मुनिविशेषस्तुष्टः । तस्य कलहप्रियत्वात् । कीदृशः । असुभिः प्राणैर्दीव्यतां क्रीडतां सुरासुराणां सभिको द्यूतकारकः । 'सहिआर' इति ख्यातः । वालिनं सङ्ग्रामाभिमुखं कर्तुं तत्प्रशंसामाह—महावीरेति । मूर्धाभिषिक्तो राजा । समरे शौण्डानां ख्यातानाम् । 'शौण्डो मत्तेऽपि विख्याते' इति मेदिनीकरः । अधुना प्रशंसा-

---

१. 'वीरश्रद्धः'. २. 'किंचित्'. ३. 'शौण्डोऽसि'.

देवः स त्वामसूत द्विषदुपमृदितस्वर्वधूवेणिबन्ध-
　　प्रेक्षाधारालवैरप्रसृमरसमरोद्दामरौजा विडौजाः ।
यो विद्धोत्खातबाणव्रणनिवहनिभं निर्भरोद्भङ्गुरभ्रू-
　　भीमः श्रीमद्भिरङ्गैरुदवहत रुषा रज्यदक्ष्णां सहस्रम् ॥ ४३ ॥

अपि च ।

वन्दीकृत्य जगद्विजित्वरभुजस्तम्भौघदुःसंचरं
　　रक्षोराजमपि त्वया विदधता संध्यासमाधिव्रतम् ।
प्रत्यक्षीकृतकार्तवीर्यचरितामुन्मुच्य रेवां समं
　　सर्वाभिर्महिषीभिरम्बुनिधयो विश्वेऽपि विस्मापिताः ॥ ४४ ॥

**वाली**—(विहस्य ।)

चिराय रात्रिंचरवीरचक्रमाराङ्कवैज्ञानिक पश्यतस्त्वाम् ।
सुधासधर्माणमिमां च वाचं न शृण्वतस्तृप्यति मानसं मे ॥ ४५ ॥

---

मुखेन निन्दामाह—**देव इत्यादि** । विडौजा इन्द्रो देवस्त्वामसूत । कीदृशः । द्विषद्भिः शत्रुभिरुपमृदितो यः स्वर्वधूवेणिबन्धस्तस्य प्रेक्षया दर्शनेन धारालवमविरलं यद्वैरं तेन प्रसृमरं प्रसारि समरे सङ्ग्रामे उद्दामरं निरर्गलमोजस्तेजो यस्य सः य इन्द्रः । रुषा क्रोधेन । रज्यद्रक्तीभवत् । 'रञ्ज रागे' दिवादिः । अक्ष्णां सहस्रमुदवहत धारयति स्म । कीदृशम् । प्रथमं विद्धा अनन्तरमुत्खाता उत्पाटिता ये बाणास्तेषां क्षतसमूहतुल्यमित्यर्थः । निर्भरमत्यर्थेनोद्भङ्गुरा कुटिला या भ्रूस्तया भीमः । **वन्दीकृत्येति** । रेवां नदीविशेषाम् । उन्मुच्य त्यक्त्वा । त्वया वालिना । सर्वाभिर्महिषीभिर्महानदीभिः समम् । तत्र संध्यावन्दनविधानात् । विश्वेऽपि सर्वेऽप्यम्बुनिधयः समुद्रा विस्मापिता विस्मयं प्रापिताः । 'कृताभिषेका महिषी' इत्यमरः । प्रकृते च समुद्रस्य नद्य एव महिष्यः । रेवां कीदृशीम् । प्रत्यक्षीकृतं दृष्टं कार्तवीर्यस्य सहस्रार्जुनस्य चरितं रावणबन्धनरूपं यया ताम् । रावणबन्धनं रेवायां वृत्तम् । तथा च रेवया कार्तवीर्यपराक्रमो दृष्टः । अतस्तस्या नाश्चर्यमभूदिति भावः । त्वया कीदृशेन । रक्षोराजं रावणमपि वन्दीकृत्य संध्यासमाधिव्रतं संध्योपासनं विदधता कुर्वता । विजित्वरो जयशीलः । पूर्ववत्क्वरप् । ओघः समूहः । दुःसंचरं दुर्धर्षम् । दुश्चेष्टमिति यावत् । विस्मापिता इति 'नित्यं स्मयतेः' इत्यात्वम् । सङ्ग्रामाय राममभिमुखीकर्तुमाह—**चिरायेति** । चक्रं समूहः । मारणं मारः । तस्याङ्कश्चिह्नं यत्र स माराङ्को युद्धं संप्रहारो वा । तत्र वैज्ञानिक कुशल हे । तव सुधासधर्माण-

किं तु।

येनाच्छिद्य समस्तपार्थिवकुलप्राणान्तकं कार्मुकं
रामः संप्रति लम्भितो भृगुभुवामुत्सर्गसिद्धां स्रुचम्।
द्रष्टुं वीर चिराय धाम भवतस्तद्भूर्भुवःस्वस्त्रयी-
हृन्मर्मव्रणरोपणौषधमिमौ बाहू बहूत्ताम्यतः॥ ४६॥

**रामः**—(सस्मितम्।)

नन्वेतदधिमौर्वीकं युद्धसर्वस्वदक्षिणम्।
सज्जमस्त्येव मे रक्षोलक्ष्मीमूलहरं धनुः॥ ४७॥

तन्महाभागोऽपि शस्त्रमादत्ताम्।

**वाली**—(विहस्य।) साधु भो महाक्षत्रिय, यथाधर्ममभिदधासि। किं तु।

नयो हि साङ्ग्रामिक एष दोष्मतां यदात्मजातिप्रतिबद्धमायुधम्।
अयःकुशीभिः कपयो न शस्त्रिणस्तलं च मुष्टिश्च नखाश्च सन्ति नः॥४८॥

**लक्ष्मणः**—आर्य, साधूक्तं महाभागेन। नित्योपनतस्वाङ्गशस्त्रैव तैरश्ची जातिः।

---

ममृततुल्यां वाचं शृण्वतो मम मानसं न तृप्यति। तर्हि केन तृप्यतीत्यत आह—**किं त्वित्यादि**। हे वीर, भवतस्तद्धाम तेजो द्रष्टुमिमौ मे बाहू बहु यथा स्यादेवमुत्ताम्यतो ग्लानीभवतः। वीरेति साक्षेपं संबोधनम्। तत्कतरत्। येन धाम्ना सकलराजकुलप्राणान्तकं कार्मुकमाच्छिद्याकृष्य रामः परशुरामो भृगुभुवामुत्सर्गसिद्धां साहजिकीं स्रुचं होमपात्रं लम्भितः प्रापितः। तपस्वितां नीत इत्यर्थः। भुवस्त्यागादिति भावः। 'उत्सर्गशुद्धाम्' इति पाठे उत्सर्गस्त्यागस्तेन शुद्धाम्। दानात्प्रभृति परशुरामेण स्वभूमित्यागात्, स्रुचो ग्रहणाच्च। भूर्भुवःस्वस्त्रयी त्रिलोकी रोपणं व्रणापनयनम्। सापेक्षमाह—**नन्वेतदिति**। अधिमौर्वीकं दत्तगुणम्। युद्धसर्वस्वदक्षिणं युद्धं सर्वस्वदक्षिणा यस्य तत्। अन्योऽपि तुष्टो यस्य भवति तस्य सर्वस्वं दक्षिणां दत्ते। इदमपि युद्धमेव ददातीति भावः। यद्वा युद्धमेव सर्वस्वदक्षिणो यागो यत्र तत्। मूलं कारागारं तद्धरतीति मूलहरम्। यद्वा मूलं रावण एव कारणं तद्धरम्। आदत्तां गृह्णातु। 'आङो दोऽनास्य विहरणे' इति तङ्। सङ्ग्रामाय प्रभवति साङ्ग्रामिकः। 'प्रभवति' इति ठक्। दोष्मतां बाहुबलशालिनाम्। प्रतिबद्धं संबद्धम्। 'प्रतिरूपम्' इति पाठे तुल्यमित्यर्थः। अयःकुशी लोहफालं काण्डादि। यद्वा लोहविकारः। 'कुशी फाले कुशी रज्ज्वां विकारमयसः

---

१. 'शोपणौषध—'. २. 'सज्यम्'. ३. 'किं पुनः'.

**रामः**—(विहस्य । धनुरास्फालयन् ।) अहह ।

स्वर्विघ्नप्रसरेण रावणिरसौ यद्दुर्यशोभागिनं
चक्रे गौतमशापयन्त्रितभुजस्थामानमाखण्डलम्[1] ।
कक्षागर्त[2]कुलीरतां गमयता वीर त्वया रावणं
तत्संमृष्टमहो विशल्यकरणी जागर्ति सत्पुत्रता ॥ ४९ ॥

सोऽपि त्वमस्माकमधुना दैवेन शरव्यीकृतोऽसि[3] ।

**वाली**—(सरोषम् ।) आः काकुत्स्थ,

अस्मद्दोर्मूलकूलंकषविषमभुजग्रन्थिभङ्गप्रसङ्ग-
कौशलक्लेशदत्तत्रिभुवनविजयख्यातिसर्वस्वदायः ।
यः कश्चिद्विक्रमोऽयं स खलु करचुलिक्षत्रसाधारणत्वा-
दन्तर्मन्दायमानो विजितभृगुपतिं त्वामजित्वा दुनोति ॥५०॥

तदेहि । विमर्दक्षमां भुवमवतरावः ।

(इति निष्क्रान्तौ )

**गुहः**—(स्वगतम् ।) दिष्ट्या फलितमस्माकं[4] मनोरथेन ।

**लक्ष्मणः**—(नेपथ्याभिमुखमवलोक्य ।) इदमन्यतो वानरद्वयमार्यस्य पार्ष्णिग्राहमिव संभ्रमादनुप्लवते[5] । तदहमपि धनुरारोपयामि ।

---

कुशी' इति विश्वः । तलं चपेटः । तथा च स्वाङ्गेन शस्त्रीति भावः । अहहेत्यद्भुते । **स्वरित्यादि** । असौ रावणिरिन्द्रजित् आखण्डलमिन्द्रं स्वर्गे विघ्नप्रसरेण यद्दुर्यशोभागिनं चक्रे तज्जयं कृतवान् । 'शस्त्रौघप्रसरेण' इति पाठे शस्त्रसमूहप्रसारेणेत्यर्थः । स्थाम बलम् । तव भुजबलं सङ्ग्रामे मा भूयादिति गौतमपत्नीपरिग्रहपर इन्द्रो गौतमेनाभिशप्तः-इति पुराणम् । हे वीर, त्वया तत्संमृष्टं लुप्तम् । प्रोञ्छितमित्यर्थः । त्वया कीदृशेन । रावणं कक्षागर्तस्य कक्षाविवरस्य कुलीरतां कर्कटत्वं गमयता । विशल्यं क्रियते यया सा विशल्यकरणी दुःखोपशामिका । सत्पुत्रता जागर्ति । तथा चेन्द्रजिता इन्द्रो जितः, त्वया चेन्द्रपुत्रेण वालिना इन्द्रजित्पिता रावणो जित इति पितृवैरनिर्यातनमेव सत्पुत्रता । दोर्मूलमेव कूलं तत्कषतीति । 'सर्वकूलाभ्रकरीषेषु कषः' इति खच् । खित्वान्मुम् । विषमो महान् । प्रसङ्गो विधानम् । ख्यातिः प्रसिद्धिः, कीर्तिर्वा । दायो दानम् । करचुलिः सहस्रार्जुनस्यादिपुरुषः । दुनोति परितप्यते (परितापयति) । पार्ष्णिग्राहं पार्ष्णिग्राहकम् । संभ्रमस्त्वरा । रामत्राणप्रतीकाराशया संभ्रम इति भावः ।

---

१. 'निजस्थामानम्'. २. 'कक्षागर्भ–'. ३. 'शरव्यम्'. ४. 'अस्मन्मनोरथेन'. ५. 'अनुवर्तते'.

**गुहः**—(दृष्ट्वा । सहर्षम् ।) [1]कुमार कुमार, अलमावेगेन । नन्वयं सुग्रीवो [2]रामभद्रगुणानुरागेण वालिमत्सरेण च द्विगुणितोत्साहः समरसीमानमापतति ।

**लक्ष्मणः**—दिष्ट्या स एष वैकर्तनिः । अथापरः कः ।

**गुहः**—अयमपि किष्किन्धेश्वरस्कन्धावारैकवीरो भगवतः प्रभञ्जनस्य पारस्त्रैणेयः पुत्रो हनूमान् ।

**लक्ष्मणः**—(सहर्षम् ।) कथमयमसावाञ्जनेयः । अयं हि

ब्रह्मशापपरिक्लिष्टस्ववीर्यज्ञानयन्त्रितः ।
अन्यैरपि भुवं वीरैः कीर्यमाणामुपेक्षते ॥ ५१ ॥

नियतमनेन सख्या हृदयशल्यमस्माकमुद्धरिष्यते । इदं तु वर्तमानमेकतु-ला[3]युद्धमार्यस्य । जयलक्ष्मी[4]परिग्रहयौतके यशसि वयमयं [5]वा सुग्रीवो वा न केचिदंशाधिकारिणः ।

**गुहः**—(ससंभ्रमम् ।) कुमार, पश्य पश्य ।

सप्त तालानयं भित्त्वा वालिप्रहरणीकृतान् ।
हत्वा च वालिनं बाणो रामतूणीर[6]मागतः ॥ ५२ ॥

अहह ।

प्राणैः समं कनकपुष्करकण्ठमाला-
सूत्रेण दाशरथये विहितातिथेयः ।

---

अनुप्लवतेऽनुगच्छति । विकर्तनः सूर्यस्तत्पुत्रो वैकर्तनिः सुग्रीवः । स्कन्धावारः सेना । प्रभञ्जनस्य वायोः । पारस्त्रैणेयः परस्त्रीपुत्रः । अञ्जनापुत्रः । 'स्त्रीभ्यो ढक्' । स्ववीर्यस्य निजबलस्य ज्ञाने यन्त्रितो विस्मारितः । पुरा किल ब्रह्मा हनूमतोऽतिशयपराक्रमं वीक्ष्यानेन पराक्रमेण क्रोधान्धतयानेन त्रैलोक्यं चेन्नाशनीयं तर्हि सर्वमिदमाकुलं स्यादिति हृदि निधाय भवतः पराक्रमज्ञानं स्वयं मा भूदिति हनूमन्तमभिशशाप—इति पुराणम् । कीर्यमाणां व्याप्ताम् । सख्या मित्रेण, द्वितीयेन वा । 'सखा मित्रसहाययोः' इति विश्वः । एकतुलायुद्धं द्वाभ्यामेव सङ्ग्रामः । परिग्रहो विवाहः तत्र यौतकत्वेन यश एव लब्धम् । अंशो भागः । 'मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत्' इति वाक्येन वैवाहिकधने भागानर्हत्वादिति भावः । प्रहरणमस्त्रम् । **प्राणैरिति** । स कपिचक्रवर्ती वानरराजो वाली वीरशयने रणाङ्गणे शेते । मृत इत्यर्थः प्रकरणात् । प्राणैः समं सुवर्णपद्मपुष्पकण्ठ-

---

१. 'कुमार' इति पुस्तकान्तरे एकवारमेव. २. 'रामदेवगुणानुरोधेन'. ३. 'द्यूत–'. ४. 'पाणिपरिग्रह'. ५. 'वा' इति पुस्तकान्तरे नास्ति. ६. 'आगमत्'.

दिक्कूलमुद्वहयशःसरिदादिशैलः
शेते स वीरशयने कपिचक्रवर्ती ॥ ५३ ॥

**लक्ष्मणः**—(सखेदम् ।) हा देव संक्रन्दन, क्व पुनरीदृशं महावीरप्रकाण्डमात्मजं सहस्रेणापि लोचनैरालोकयिष्यसि ।

(नेपथ्ये दुन्दुभिध्वनिर्मङ्गलगीतिश्च ।)

**गुहः**—(सहर्षम् ।) कथमयमार्यजाम्बवदभिमन्त्रितैः शातकुम्भकलशैर्नीलः कुमारसुग्रीवमभिषिञ्चति । स्वयं चास्य देवो दाशरथिः कार्तस्वरपुण्डरीकमालया कण्ठमलंकरोति ।

**लक्ष्मणः**—प्रियतरं नः ।

(नेपथ्ये ।)

भो भो वानराच्छभल्लगोलाङ्गूलयूथपतयः, सर्वानेष वो महाराजः सुग्रीवः समाज्ञापयति—'सज्जयन्तु भवन्तः सर्वाणि यौवराज्योपकरणानि । अयमहं सीतादेव्याः प्रवृत्तिमन्वेष्टुं प्रहित्य हनूमन्तमूर्ध्वमौहूर्तिके लग्ने कुमारमङ्गदमभिषेक्ष्यामि' इति ।

**लक्ष्मणः**—

उत्सवः सोऽयमस्माकं सर्वथा हृदयंगमः ।
किं तु वाली विलीनोऽयं व्यथयिष्यति वासवम् ॥ ५४ ॥

---

दामतन्तुना दाशरथये रामाय विहितमातिथेयं येन सः । दिगेव कूलं दिक्कूलम् । तदुद्वहते । 'उदि कूले रुजिवहोः' इति खश् । दिक्कूलमुद्वहा तादृशी यश एव सरिन्नदी तस्या आदिशैलः प्रभवपर्वतः । पर्वतादेव नदीनामुत्पत्तिः । अत्र च पर्वतसदृशाद्वालिनो यशःसरिदुत्पत्तिरित्यर्थः । प्रकाण्डमिव प्रकाण्डम् । 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः' इत्यमरः । क्व पुनरालोकयिष्यसि । तस्य स्वर्गगमनात् । दुन्दुभिर्भेरीति प्रसिद्धं वाद्यम् । 'भेर्यामानकदुन्दुभी' इत्यमरः । शातकुम्भकलशैः सुवर्णघटैः । कार्तस्वरं सुवर्णम् । अच्छभल्लगोलाङ्गूलप्रभृतयो वानरविशेषाः । प्रवृत्तिं वार्ताम् । ऊर्ध्वं मुहूर्तादूर्ध्वमुहूर्तम् । 'सुप्सुपा—' इति योगविभागात्समासः । तत्र भवमूर्ध्वमौहूर्तिकम् । अध्यात्मादित्वाट्ठञ् । 'उत्तरपदस्य' इति वृद्धिः । सोऽयमङ्गदाभिषेकरूप उत्सवः । हृदयं-

---

१. 'अवलोकयिष्यति'. २. 'शातकुम्भकुम्भसलिलैः'. ३. 'कण्ठकाण्डम्'. ४. 'प्रियात्प्रियतरम्'; 'प्रियम्'. ५. 'गोलाङ्गूलप्रभृतयो यूथपतयः'. ६. 'सज्जयन्तु सन्नयन्तु'. ७. 'और्ध्वमौहूर्तिके काले'. ८. 'इति' इति पुस्तकान्तरे नास्ति.

(अन्तरिक्षे पुष्पवृष्ट्यनन्तरम् ।) जय जय जगत्पते रामभद्र,

लक्ष्म्या वालिनिवर्हणप्रशमितद्वैराज्यवैराग्यया
किष्किन्धायतनैकदैवतमयं तारापतिर्दीप्यते ।
नप्तारं युवराजमङ्गदमपि श्रुत्वातिहर्षादभू-
दस्राम्भःपृषतौघमौक्तिकमयो गुम्फः सहस्रेक्षणः ॥ ५५ ॥

**लक्ष्मणः**—प्रियात्प्रियतरं नः । वयस्य गुह, तदेहि । आवामपि महोत्सवसंविभागिनौ भवावः ।

(इति निष्क्रान्तौ ।)

इति सुग्रीवाभिषेको नाम पञ्चमोऽङ्कः ।

---

गमोऽभिलषितः । विलीनो मृतः अन्तरिक्षे जय जयेत्यादि देववाणी । **लक्ष्म्येति** । वालिनिवर्हणेन वालिविनाशेन प्रशमितं द्वैराज्यवैराग्यं यस्यास्तादृशा लक्ष्म्या तारापतिः सुग्रीवो दीप्यते । वालिनापहृतायास्ताराया लाभात्संप्रति सुग्रीवस्य तारापतिपदेनोपन्यासः । किंष्किन्धायतनस्यैकमद्वितीयम् । वालिनोऽभावात् । यद्वा एकं श्रेष्ठं दैवतं देव इति तारापतिविशेषणम् । सहस्रेक्षणोऽपीन्द्रोऽपि नप्तारं पौत्रमङ्गदं युवराजं श्रुत्वातिहर्षादस्राम्भःपृषतौघमौक्तिकमयो गुम्फोऽभूत् । अस्राम्भोऽश्रुजलं तस्य पृषतो विन्दुः । 'पृषन्ति विन्दुपृषताः' इत्यमरः । तस्यौघः समूहः स एव मौक्तिकं तन्मयो गुम्फो गुम्फनं कङ्कणं वा । 'गुम्फस्तु गुम्फने वाह्वोरलंकारेऽपि कथ्यते' इति मेदिनीकरः । निष्क्रान्तौ लक्ष्मणगुहौ ॥

इति समस्तप्रक्रियाविराजमानरिपुराजकंसनारायणभवभक्तिपरायणश्रीहरिनारायणपदसमलंकृतमहाराजाधिराजश्रीमद्भैरवसिंहदेवप्रोत्साहितवैजोलीग्रामवास्तव्यखौआलवंशप्रभवरुचिपतिमहोपाध्यायविरचितायामनर्घराघवटीकायां पञ्चमोऽङ्कः ।

---

१. 'उपशमित–'.

षष्ठोऽङ्कः ।

(ततः प्रविशति माल्यवान् ।)

**माल्यवान्**—(सर्वतोऽवलोक्य सखेदम् ।) अहह कष्टम् ।

दग्धाः प्रदीप्तपावकपरिचयपिण्डस्थहेमवेश्मानः ।
क्षणमुत्पुच्छयमाने हनुमति लङ्कापुरोद्देशाः ॥ १ ॥

अपि च ।

निजकिरणौघप्रमुषितनिम्नोन्नतरूपकर्मभेदेषु ।
मणिभवनेषु कृशानुज्वालाः फलतोऽनुमीयन्ते ॥ २ ॥

(विमृश्य ।) अहो दुर्निवारता भवितव्यतायाः ।

दोःसंदोहवशंवदत्रिभुवनश्रीगर्वसर्वंकषः
कैलासोद्धरणप्रचण्डचरितो वीरः कुबेरानुजः ।
यत्रायं स्वयमस्ति सेयममरावत्यापि वन्द्या पुरी
नीता मर्कटकेन कामपि दशां धिग्दैवमावश्यकम् ॥ ३ ॥

---

संप्रति रावणविनाशसूचकं लङ्कादाहाशोकवनिकाभङ्गादिरूपमुत्पातं प्रकटयितुं माल्यवतः प्रवेशमाह—**ततः प्रविशतीति** । न चात्र 'नासूचितं विशेत्पात्रम्' इति भरतविरोधः । चतुर्थाङ्के माल्यवता 'तदेहि । राजकुलमेव गच्छावः' इति निजप्रवेशस्य सूचितत्वात् । अन्तरा तु परशुरामकलहादीत्यन्यदेतत् । **दग्धा इति** । परिचयः संबन्धः । पिण्डस्थं पिण्डीभूतम् । उत्पुच्छयमाने पुच्छमुत्क्षिपति सति । 'पुच्छभाण्डचीवराण्णिङ्' । लङ्कापुरस्योद्देशा वासस्थानानि । **निजेति** । प्रमुषितोऽपहस्तितः । मणितेजःसमूहसंबन्धान्मणिभवनानि निम्नोन्नतानि न दृश्यन्त इति भावः । फलतो दाहादिकार्यात् । कार्येणैव कारणमनुमीयत इत्यर्थः । भवितव्यतेत्यत्र 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति तल्प्रत्ययः । अत एव 'सर्वंकषा भगवती भवितव्यतैव' इति भवभूतिरप्याह । भवितव्यताया दुर्निवारत्वं स्फुटयति—**दोःसंदोहेति** । संदोहः समूहः । वशंवदो वश्यः । 'प्रियवशे वदः खच्' । श्रीः संपत्, उत्कर्षो वा । सर्वंकष इति । 'सर्वकूलाभ्रकरीषेषु कषः' इति खच् । उद्धरणमुत्तोलनम् । कुबेरानुजो रावणः । अमरावत्या देवनगर्या । 'नगरी त्वमरावती' इत्यमरः । इह 'कृत्यानां कर्तरि वा' इति षष्ठीविकल्पात्तृतीया । मर्कटकेन कुत्सितवानरेण हनुमता । कुत्सार्थे कन्, निन्दायां वा । कामपि शोचनीयाम् । आवश्यकमवश्यंभावि दैवं धिगस्तु । अवश्यंभाव आवश्यकम् । 'ओरावश्यके' इति निपातनाद्वुञ् । 'अव्ययानां भमात्रे टिलोपो वक्तव्यः' इति टिलोपः । लङ्कादाहमप्या-

न[1] किंचिदेतद्वा रावणदुर्नयेन। (सखेदमाकाशे।) आः पौलस्त्य,

> विद्याश्चतुर्दश चतुर्षु निजाननेषु
> संबाधदुःस्थितवतीरवलोक्य वेधाः।
> ताभ्यो[2]ऽपराणि नियतं दश ते मुखानि
> स्वस्य प्रणप्तुरकरोत्स कथं जडोऽसि॥ ४॥

(क्षणं च ध्यात्वा स[3]व्यथम्।) क[4]थमेवं विशीर्यतीव नः कुलमिदम्।

> खरादीनवधीद्रामो वत्समक्षं च मारुतिः।
> स्वयं निष्क्रामयामास दशास्यश्च विभीषणम्॥ ५॥

अलं वा दु[5]र्विहितमतीतमुपालभ्य। संप्र[6]ति सिन्धोरुदीचि तीरे निवेशितस्कन्धावारो दाशरथिः किमा[7]रम्भ इति कथं प्रतीमः। (पुरो दृष्ट्वा।) कथं राघवचरितानि चरितुं प्रहितयोः शुकसारणयोः सारणः।

(प्रविश्य।)

**सारणः**—जयतु जयतु कनिष्ठमातामहः।

**माल्यवान्**—(अभिनन्द्य समीपमुपवेश्य च।) वत्स सारण, कच्चिदमुनैव पदेन सुग्रीवकटकादागतोऽसि।

**सारणः**—अथ किम्।

---

लोक्य निरुद्विग्नं रावणं लक्षीकृत्याह—**विद्या इति**। चतुर्दश विद्याश्चतुर्षु निजाननेषु स्वकीयमुखेषु संबाधेन संकटेन दुःस्थितवतीर्दुःखेनावस्थिता दृष्ट्वा ताभ्यो विद्याभ्यः। तादर्थ्ये चतुर्थी। प्रणप्तुः प्रपौत्रस्य तवापराणि दश मुखान्यकरोत्स त्वं कथं जडोऽसि मूर्खोऽसि। तथा चात्र प्रतिक्रिया कर्तुमुचितेति भावः। 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्मशास्त्रं पुराणं च विद्या एताश्चतुर्दश॥' अङ्गानि वेदाङ्गानि षट्। 'शिक्षा कल्पो व्याकरणं निरुक्तं ज्यौतिषं तथा। छन्दसां विचितिश्चैव षडङ्गो वेद इष्यते॥' इति पुराणम्। विशीर्यत्यवसन्नं भवति। नोऽस्माकम्। अवधीद्धतवान्। हन्तेः 'लुङि च' इति वधादेशः। अक्षं रावणसुतम्। निष्क्रामयामास निःसारितवान्। दुर्विहितं दुश्चेष्टितम्। उदीच्युत्तरस्मिन्। स्कन्धावारः कटकम्। आरम्भ उद्यमः। चरितुं ज्ञातुम्। 'चर गतौ'। 'सर्वे गत्यर्था ज्ञानार्थाः' इति न्यायात्। सारणः। अस्तीति शेषः। दृश्यत इति वा। समीपं संनिहितम्। अमुनैव पदेनेति लोकोक्तिः। इदानीमेवेत्यर्थः।

---

१. 'न किंचिदेतद्रावणस्य दुर्नयेन'; 'न किंचिदेव तावद्रावणस्य दुर्नयेन'. २. 'आभ्यः'. ३. 'सव्यथम्' इति पुस्तकान्तरे नास्ति. ४. 'सकलमेव शीर्यतीव नः कुलम्'. ५. 'दुर्दैवम्'. ६. 'संप्रति' इति पुस्तकान्तरे नास्ति. ७. 'किमारभते'.

**माल्यवान्**—तद्यथानुभवमभिधीयतां तावत्[1] ।

**सारणः**—सारसंख्ये वनौकसामसन्मुखेनैव शतशः प्रतीते मातामहेनालमुक्त्वा[2] । अधुना तु सेतुग्रथनाय मिलितेषु वानरसैनिकेषु वानरमूर्तिधरोऽप्यहं[3] महाराजविभीषणेन—(इत्यर्धोक्ते सभयम् ।) आर्य, चिरसंवासेन रामराजधानीप्रवादो मामनुबध्नाति ।

**माल्यवान्**—(साकूतम् ।) किमभिषिक्तः कनिष्ठवत्सो राघवेण ।

**सारणः**—अथ किम् ।

**माल्यवान्**—(क्षणमिव स्तब्धं[5] स्थित्वा निःश्वस्य ।) वत्स, निःशङ्कमभिधेहि ।

**सारणः**—कुमारविभीषणेन ज्ञात्वा संयम्य चाहं रामस्य दर्शितः ।

**माल्यवान्**—(साशङ्कम् ।) ततस्ततः ।

**सारणः**—ततश्च राघवेण निजसचिवनिर्विशेषमुपगृह्य[6] पुरस्कृत्य च प्रहितोऽस्मि ।

**माल्यवान्**—(सहर्षम् ।) किमुच्यते, यावद्द्रव्यभावी गुणो[7] हि विजिगीषूणामुदात्तता । विशेषेण पुनरयं[8] रामभद्रः । यतः[9] ।

अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो
　विपक्षादम्भोजादुपगतवतो वा मधुलिहः ।

---

'पदं स्याद्धर्मपादयोः' इति शाश्वतः । सारो बलम् । संख्या एकत्वादिगणना । ग्रथनं बन्धनम् । सैनिकेषु सेनासमवेतेषु, सेनारक्षकेषु वा । सभयमिति । विभीषणे महाराजपदप्रक्षेपादिति भावः । स्तब्धमिति क्रियाविशेषणम् । उपगृह्य ज्ञात्वा । यावदिति । यावद्द्रव्यं तिष्ठति तावत्तिष्ठति द्रव्यनाशे नश्यति गुण इत्यर्थः । यावद्द्रव्यं भवितुं शीलमस्य यावद्द्रव्यभावी । ताच्छील्ये णिनिः । गुण इह वीर्यशौर्यादिः । यद्वा यावद्द्रव्यं यावत्परिमाणं द्रव्यं तत्परिमाण एव गुणो वीर्यशौर्यादिः । द्रव्यं च महदिति गुणोऽपि महानिति भावः । विजिगीषूणां जेतुमिच्छूनाम् । 'न विकारं विकारस्य हेतौ यदवगाहते । तदुदात्तं गुणः' इति दण्डी । तद्भाव उदात्ततागुण इत्यन्वयः । औदार्यं गुण इत्यर्थः । विशेषेण पुनरयं रामभद्र उदारत्वेन प्रसिद्ध इत्यर्थः । रामभद्रपुरस्कारस्त्वयि युक्त एवेत्यत्र दृष्टान्तमाह—**अभेदेनेति** । कुमुदं कर्तृ, उदरेऽभ्यन्तरे स्थितवतो वा विपक्षादतुल्यादम्भोजाद्वा सकाशादुपगतवतो मधुलिहो भ्रमरानभेदेन तुल्यत्वेनोपास्ते संयुनक्ति । कथमि-

---

१. 'तावत्' इति पुस्तकान्तरे नास्ति. २. 'अलमुक्त्वा' इति पुस्तकान्तरे नास्ति. ३. 'वानर' इति पुस्तकान्तरे नास्ति. ४. 'मायावानरमूर्तिधरोऽपि महाराज—'. ५. 'स्तब्धवत्'. ६. 'उपसंगृह्य'. ७. 'हि गुणो'. ८. 'असौ'. ९. 'किं च'.

अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचय-
प्रबन्धः साधूनामयमनभिसंधानमधुरः ॥ ६ ॥

अथ शुकः किमासीत्।

**सारणः**—अहमपि न जानामि।

**माल्यवान्**—(विमृश्य।) वत्सविभीषणस्य रामोपश्लेषेण स्वकुल्यं व्यसनमिति प्रमुग्धोऽस्मि।

**सारणः**—आर्य, तथा धर्मवृत्तिरार्यसंतानश्च कुमारः कथं ज्यायांसं भ्रातरमवधूय प्रतिपक्षवर्ती संवृत्तः।

**माल्यवान्**—वत्स, दशग्रीवं पृच्छ। (निःश्वस्य।) अथवा दैवम्।

**सारणः**—आर्य, यदि श्रवणार्होऽस्मि तदा निवेदय।

**माल्यवान्**—वत्स, केसरिकलत्रसंभवेन प्रभञ्जनसूनुना विलुण्ठितामशोकवनिकामवलोक्य राजा तवायं विभीषणमवोचत्। यथा—'वत्स, पश्य मनुष्यपोतद्वयावष्टब्धेन दुरात्मना कपिकीटेन कथं विजृम्भितम्' इति।

**सारणः**—ततस्ततः।

**माल्यवान्**—ततो विभीषणः प्रणम्य व्यजिज्ञपत्—'देव,

जातिं मानय मानुषीमभिमुखो दृष्टस्त्वया हैहयः
स्मृत्वा वालिभुजौ न सांप्रतमवज्ञातुं च ते वानराः।

---

त्यत आह—साधूनां स्वस्यात्मीयस्य परस्यान्यस्य च परिचर्या पूजा तत्परिचये ज्ञाने समूहे वा प्रवन्धोऽनुबन्धोऽपर्याप्तोऽनिवारितो भवति। मधुरो मनोज्ञः। किमासीत्। किंभूत इत्यर्थः। किंशब्दो निपातः। कीदृक्। बद्धोऽबद्धो वासीदिति भावः। उपश्लेषः समाश्रयणम्, उपष्टम्भो वा। ज्यायांसं ज्येष्ठम्। 'वृद्धस्य ज्यः' इति ज्यः। 'ज्यादादीयसः' इत्यात्वम्। अवधूय त्यक्त्वा। केसरी वालिशिष्टो वानरः। तस्य कलत्रं वधूस्तत्संभवेन प्रभञ्जनो वातस्तस्य सूनुना पुत्रेण हनुमता विलुण्ठिता भग्ना अशोकेन वृक्षभेदेनोपलक्षिता वनिकाल्पवनम्। यद्वा अशोकनिमित्तं वनिकेति शाकपार्थिवादिः। अवष्टब्धेनावलम्बितेन कीटेनेव कीटेन। विजृम्भितं चेष्टितम्। विक्रान्तं वा। व्यजिज्ञपद्विज्ञापयति स्म। वक्ष्यमाणमिति शेषः। **जातिमिति**। हे पौलस्त्य रावण, त्वामहमेतदभ्यर्थये प्रार्थयामि। एतत्किम्। सीतामर्पय। रामायेति शेषः। काराकुटुम्बीकृतान्बन्ध-

---

१. 'धर्मप्रवृत्तिः'. २. 'प्रतिपक्षवृत्तिः संपन्नः'; 'विपक्षवर्ती संप्रति संवृत्तः'. ३. 'यदि वा'. ४. 'राजा ते दशास्यो'; राजा वतायम्'. ५. अवष्टम्भेन. ६. 'वानरान्'.

तत्पौलस्त्य महाग्निहोत्रिणमहं त्वामेतदभ्यर्थये
सीतामर्पय मुञ्च च क्रतुभुजः काराकुटुम्बीकृतान् ॥ ७ ॥

**सारणः**—(सबहुमानाश्चर्यम्।) अहह, 'वालिभुजौ' इति ब्रुवता मातामहेन किं[1]मपि स्मारितोऽस्मि। आर्य,

किमाचक्षे सेतुक्षितिधरशिरःश्रेणिकषणैः
प्रकोष्ठे नीरोम्णः कपिभटभुजस्तम्भनिवहान्।
सुमेरोर्मात्सर्यादनतिचिरसंरूढमृदुभिः
शिरोभिर्विन्ध्यो यद्भरमपि न सोढुं परिवृढः ॥ ८ ॥

(साशङ्कम्।) ततस्ततः।

**माल्यवान्**—ततश्च रोषान्धता[2]मिस्रे मज्जता राक्षसराजेन तथा चेष्टितं यथा विपक्षमप्याश्रितः।

---

नागारमित्रीकृतान्क्रतुभुजो देवान्मुञ्च त्यज। कीदृशं त्वाम्। महाग्निहोत्रिणम्। अनेन परस्त्रीवैमुख्यं प्रकटितम्। ननु मानुषेण ममाभिभवः कर्तुं न पार्यत एवेति रावणवचनमाशङ्क्याह—मानुषीं जातिं मानय पूजय। यतस्त्वया हैहयः सहस्रार्जुनोऽभिमुखो दृष्टः। तथा च मानुषेनैव सहस्रार्जुनेन सङ्ग्रामे त्वमभिभूतोऽसि, अतो मानुषविषये गर्वो न विधेय इति भावः। वालिभुजौ च स्मृत्वा ते तव वानरा अवज्ञातुं नसांप्रतम्। न युक्ता इत्यर्थः। इह सांप्रतपदेन युक्तार्थेन कर्मणोऽभिधानाद्वानरा इत्यत्र न द्वितीया। यथा—'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इति। वानरेण त्वं कक्षायां क्षिप्तोऽसि, अतो वानरेष्वपि नावज्ञा युक्तेति भावः। 'कारा स्याद्बन्धनालये' इत्यमरः। 'युक्ते द्वे सांप्रतं स्थाने' इत्यपि। स्मारितोऽस्मि। वानरबाहुबलमिति शेषः। **किमाचक्षे इति**। हे आर्य, कपिभटानां वानरयोधानां भुजस्तम्भसमूहान्किमाचक्षे किं ब्रवीमि। अपि तु वक्तुं न शक्नोमीति भावः। कीदृशान्। सेत्वर्थं क्षितिधरशिरःश्रेणिकषणैः पर्वतमस्तकपङ्क्तिघर्षणैः। प्रकोष्ठे कफोणाधःप्रदेशे। नीरोम्णो लोमशून्यान्। यद्भरं बाहुसमूहभरं विन्ध्योऽपि शिरोभिः सोढुं न परिवृढो न समर्थः। सुमेरोर्मात्सर्यादुच्चैस्त्वस्यासदनात्। अनतिचिरमतिशीघ्रं संरूढैः प्रवृद्धैः। अत एव मृदुभिः। अत एव भरं सोढुं न शक्तोऽभवदित्यर्थः। सुमेरुजिगीषया विन्ध्यो वर्धितः—इति कथा। रोषान्धतामिस्रे रोषरूपगाढान्धकारे। 'रोषान्धतमसे' इति पाठेऽप्ययमेवार्थः। 'ध्वान्ते गाढेऽन्धतमसम्' इत्यमरः। भवतैव सह। मानतोऽभिमानाल्लोको निवर्तिष्यते। मानं न करिष्यतीत्यर्थः। वैधर्म्यं वैपरीत्यम्। नाश इति यावत्। तत्र दृष्टान्तेन निदर्शनेन।

---

१. 'किमपि' इति पुस्तकान्तरे नास्ति. २. 'तमसि'.

**सारणः**—(सखेदमाकाशे ।) हा देव पुलस्त्यनन्दन, कथं भवतव वैधर्म्यदृष्टान्तेन मानतो[1] मूलोच्छेदनिमित्तान्निवर्तिष्यते लोकः । (साभ्यर्थनं च ।)

अरिषड्वर्ग एवायमस्यास्तात पदानि षट् ।
तेषामेकमपि च्छिन्दन्खञ्जय भ्रमरीं[2] श्रियम् ॥ ९ ॥

(मन्त्रिणं प्रति ।) आर्य, यत्सत्यं राघवेण व्यूढां वानरवरूथिनीमुत्प्रेक्ष्य शङ्के—विभीषण एव[3] यद्यस्माकं कुलतन्तुरवशिष्यते ।

**माल्यवान्**—(निःश्वस्य ।) वत्स[4], द्वयोरपि कटकयोस्तत्त्वज्ञोऽसि । तत्किमिदानीमुचितम् ।

**सारणः**—आर्य, नन्वेवं ब्रवीमि—राजपुत्रोऽङ्गदोऽसौ बालो[5] नवबुद्धिरामपात्रमिव[6] यद्यदाधीयते तत्तदाचुचूषति ।

**माल्यवान्**—ततः किम् ।

**सारणः**—ततश्च भवतः पितृवैरिणौ रामसुग्रीवौ व्यापाद्य किष्किन्धायां भवन्तमभिषिच्य वालिसौहृदस्यात्मानमनृण[7]मिच्छाम इति गूढ[8]-

---

यद्वा विरुद्धो धर्मो विगतो वा धर्मो विधर्मः । ततः स्वार्थिकः ष्यञ् । वैधर्म्यं धर्माभावस्तेन दृष्टोऽन्तो नाशो यस्य तेन । निवृत्तौ हेतुमाह—मानतः । कीदृशात् । मूलं रावणस्तस्योच्छेदो नाशस्तद्धेतोः । तथा च माने सति रावणो नष्टः । तन्मानं न युक्तमिति लोको निवृत्तिं करिष्यतीति भावः । अधुनोपदेशमाह—**अरीति** । हे तात मान्य रावण । श्रियं भ्रमरीमिति व्यस्तरूपकम् । श्रियं भ्रमरीं लक्ष्मीं भ्रमरवधूं खञ्जय खञ्जां कुरु । यद्वा भ्रमरीं भ्रमणशीलाम् । अस्याः श्रीभ्रमर्या अरिः षड्वर्गोऽरिषड्वर्गः कामक्रोधलोभमोहमदमानरूपः स एव षट् पदानि तेषां पदानां मध्ये एकमपि पदं छिन्दन्द्वैधीकुर्वन्सन् । तथा च कामादीनामेकत्यागादपि सीतापरित्यागः । तेन च श्रीः खञ्जा स्थिरा भवति । अन्यथा कामादिसत्त्वात्तव लक्ष्मीः स्थिरा न भविष्यति, अपि तु राममेवाश्रयिष्यतीति भावः । व्यूढां विन्यस्ताम् । 'व्यूढं तु बलविन्यासे' इति विश्वः । वरूथिनी सेना । उत्प्रेक्ष्य उच्चैर्दृष्ट्वा । तन्तुरिव तन्तुः सूत्रम् । आममपक्वं पात्रं शरावादि । आधीयते आरोप्यते । आचुचूषति पिबति । 'चूष पाने' । सौहृदं सुहृद्भावः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिर्न भवति । तत्रार्थवतो हृच्छब्दस्य ग्रहणात् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातसमुदायस्यार्थवत्त्वात् । एकदेशे चात

---

१. 'अनुमानतः' २. 'भ्रामरीम्'. ३. 'एवास्य'. ४. 'वत्स' इति पुस्तकान्तरे नास्ति. ५. 'बालोऽसौ'. ६. 'आममिव पात्रम्'. ७. 'अनृणमात्मानम्'; 'आनृण्यमात्मनः'. ८. 'निरूढ'.

प्रणिधिमुखेन दशकंधरादेशमभिधाय सुग्रीवशिविरादपवाह्यते तस्मिन्नपक्रान्ते तु स्वगृहमहिभयोपजापजर्जरमवेक्षमाणो वानरपतिः शिथिलितरामप्रयोजनः स्यात्।

**माल्यवान्**—(सस्मितम्।) वत्स, साधु समर्थयसे। किं[2] पुनः स्वयमङ्गदो गर्भरूपोऽभिनवोज्ज्वलयौवराज्यसुखोपलालितो दुरपवाह एव। ये चास्य मातापितृबन्धवस्ते सुग्रीवस्यापि संबन्धिनः कथमेनमुत्तिष्ठमानमनुजानीयुः।

**सारणः**—यथा दृष्टमार्येण। किं च कालापेक्षी दण्डनीतिप्रयोगः। तथा कथमपि महोत्साहैः कपिभिः सेतुकर्मणि प्रवृत्तं यथैतावता कालेन संतीर्णमहार्णवो रामः सुवेलशैलोपत्यकामध्यास्ते।

**माल्यवान्**—(सविमर्शाद्भुतम्।) अहह।

असौ मनुष्यमात्रेण लङ्घितो यदि सागरः।
प्रतापो दशकण्ठस्य भुवनैरपि लङ्घितः॥ १०॥

---

चात्वात्। अनृणमृणात्प्रत्युपकाराद्विनिर्मुक्तम्। गूढो गुप्तो वानरादिवेषः। प्रणिधिश्चरः। 'प्रणिधिः प्रार्थने चरे' इति विश्वः। 'आज्ञा निदेश आदेशः' इत्यमरः। शिविरात्कटकादपवाह्यते आनीयते। तस्मिन्नङ्गदे। स्वपक्षप्रभवं भयमहिभयम्। उपजापो भेदः। जर्जरमाकुलम्। शिथिलितं शिथिलीकृतम्। 'तत्करोति' इति णिजन्तात्क्तः। 'महीभुजामहिभयं स्वपक्षप्रभवं भयम्' इत्यमरः। 'समौ भेदोपजापौ' इति च। समर्थयसे मन्यसे किं पुनः किं तु। गर्भरूपो बालकः। उपलालितो वर्धितः। अपवाहं घञन्तं निष्पाद्य पश्चाद्दुःशब्देन समासः। अन्यथा दुरपवह इति स्यात्। यद्वा 'वाह प्रयत्ने' इत्यतः खलः प्रयोगः। मातापित्रिति। 'आनङृतो द्वन्द्वे' इत्यानङादेशः। मातृबान्धवा मातुलादयः। पितृबान्धवाः पितृव्यादयः। उत्तिष्ठमानमुद्यमं कुर्वाणम्। 'उदोऽनूर्ध्वकर्मणि' इति तङ्। अनुजानीयुरनुमन्यन्ते। 'दमो दण्ड इति प्रोक्तस्तात्स्थ्याद्दण्डो महीपतिः' इति नीतिशास्त्रम्। तस्य राज्ञो नितिर्दण्डनीतिः। नयनं नीतिस्तस्याः प्रयोग आरम्भः। यद्वा दण्डनीतिः शास्तिप्रधाना नीतिः। उत्साहः पराक्रमः। प्रवृत्तं प्रवृत्तिः कृता। भावे क्तः। तेनानभिहिते कर्तरि तृतीया। सुवेलो गिरिभेदः। उपत्यका पर्वतासन्नभूमिः। 'उपत्यकाद्रेरासन्ना भूमिः' इत्यमरः। भुवनैर्भुवनस्थैः। ता-

---

१. 'च' २. 'किं तु स्वयम्'; 'किं पुनरङ्गदः'. ३. 'अपि सुग्रीवस्यैव'. ४. 'यथा तु महोत्साहैः'. ५. 'समुत्तीर्ण'. ६. 'सुवेलोपत्यका—'.

(सखेदं च।)

पौलस्त्यस्य सुरासुरेन्द्रशिरसां निर्माल्यमङ्घ्रिद्वयं
कुर्वाणेन रघूद्वहेन घटिते सेतौ निधावम्भसाम्।
अद्योन्मुद्रयति स्वहस्तविधृतं राजीवमिद्धो रविः
प्रत्यावृत्तरसस्य चामृतभुजामिन्दोः स्वदन्ते कलाः॥ ११॥

(विमृ[1]श्य।) वत्स सारण, वालिवधविशुद्धपार्ष्णेरनेकवानरानीकनायकेन साक्षादुपकृतेन सख्या सुग्रीवेण महापक्षस्य हनुमच्चरितज्ञातास्मदीयवृत्तेरयमेव सुविहितसकलाभियास्यत्कर्मणस्तस्याभियोगसमयः।

**सारणः**—[2]आर्य, अयमेवात्मद्रव्यप्रकृतिसंपन्नो नयस्याधिष्ठानं विविजिगीषुरिति प्रथमोदाहरणं दाशरथिः।

**माल्यवान्**—(स्तम्भं नाटयित्वा।)

यत्तस्मिन्निहतेऽपि वालिनि वयं क्षुद्रास्तथैवास्महे
[3]तद्युक्तं भुजयोर्वलादपि वलं दुर्गस्य दुर्निग्रहम्।

स्थ्यात्प्रयोगः। मञ्चाः क्रोशन्तीतिवत्। सर्वैरपीत्यर्थः। **पौलस्त्येति**। अद्य इद्धो दीप्तो रविः सूर्यः स्वहस्तविधृतंराजीवं पद्ममुन्मुद्रयति प्रवोधयति। अन्यदा रावणत्रासात्स्वहस्तस्थमपि पद्मं सूर्यो न प्रकाशयति, किं पुनः सरःस्थितमिति भावः। अमृतभुजां देवानां चेन्दोश्चन्द्रस्य कलाः स्वदन्ते रोचन्ते। इह प्रीयमाणार्थस्याविवक्षितत्वान्न चतुर्थी। प्रत्यावृत्तो व्याघुट्यायातो रसः स्वादो यत्र। यद्वा प्रत्यावृत्तो रसोऽनुरागो यत्र। अर्थाद्देवानाम्। अन्यदा रावणत्रासाद्देवाश्चन्द्रकला न पिवन्ति, इदानीं तु पिवन्तीति भावः। क सति। रघूद्वहेन रामेणाम्भसां निधौ समुद्रे सेतौ घटिते वद्धे सति। कीदृशेन। पौलस्त्यस्य रावणस्याङ्घ्रिद्वयं पदयुगं सुरासुरेन्द्रशिरसां देवदानवमस्तकानां निर्माल्यं कुर्वाणेन। निर्माल्यमलङ्घनीयत्वात्। इद्ध इति 'ञिइन्धी दीप्तौ'। क्तः। पार्ष्णिः पश्चाद्देशस्थितः। पक्षः सहायः, वलं च। वृत्तिर्व्यापारः। सुविहितं सकलमभियास्यतः शत्रोरभिमुखं गमिष्यतः कर्म येन तस्य। अभियोग आक्रमणम्। आत्मद्रव्याणि च प्रकृतयश्च ताभिः संपन्नः। 'वाहुश्रुत्यं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा। भावशुद्धिर्दया सत्यं नियमश्चात्मसंपदः॥ अमात्यराष्ट्रदुर्गाणि कोषो दण्डश्च पञ्चमः। एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः॥ एताः पञ्च तथा मित्रं सप्तमः पृथिवीपतिः। सप्तप्रकृतिकं राज्यमित्युवाच वृहस्पतिः॥' इति नीतिशास्त्रम्। अधिष्ठानमाश्रयः। अजहल्लिङ्गताऽत्र। **यत्तस्मिन्निति**। तस्मिन्नतिवलशालिनि वालिनि

१. 'विमृश्य च'. २. 'आर्य, एवमेतत्'. ३. 'तद्वयक्तम्'.

मर्त्येनापि जगद्विलक्षणगुणग्रामेण रामेण तु
द्वे गव्यूतिशते हि नाम कियती तीर्णोऽयमर्णोनिधिः ॥ १२ ॥
(दीर्घमुष्णं च निःश्वस्य । आकाशे ।)

तर्षार्तिव्यतिलेलिहानरसनारम्यैर्मुखैरष्टभिः
क्रन्दन्ती क्रमशः पपौ दशमुखी वत्सस्य यस्याः स्तनौ ।
वत्से नैकषि विश्ववीरजननी सीमन्तमुक्तामणिः
सा तादृग्भवती कथं गुणवतः पुत्रस्य किं द्रक्ष्यति ॥ १३ ॥

**सारणः**—शान्तं शान्तम् । प्रतिहतममङ्गलम् । अनर्थशङ्कीनि बन्धुहृदयानि भवन्ति । किं च आर्य,

भुजनिवहविहङ्गिकावलम्बी निबिडगुणौघधृतोऽपि राज्यभारः ।
स्वयमपि दशकंधरे धुरीणे स्खलति यदि स्खलनं तदास्य रूपम् ॥ १४ ॥

---

हतेऽपि सति यद्वयं क्षुद्रा अल्पज्ञास्तथैव पूर्ववदेव आस्महे स्थिताः स्मस्तद्भुजयोर्बलादपि दुर्गस्य बलं दुर्निग्रहं दुःखेन निगृह्यते यत्तादृशं भवतीति कृत्वा । वालिनि हतेऽपि वयं मध्यस्थितसमुद्ररूपदुर्गत्वाज्जीवाम इति भावः । अधुना समुद्ररूपदुर्गस्यापि नास्माकं त्राणं शक्यमिति पर्यवसन्नमर्थमाह—मर्त्येनापि । मर्त्येन मनुष्येण विलक्षणः श्रेष्ठः । ग्रामः समूहः । 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः । द्वे इति । शतयोजनविस्तारत्वात्समुद्रस्य । हिरवधारणे । तीर्ण एव । नाम संभावनायाम् । कियति किंपरिमाणे । अल्पे इत्यर्थः । 'हिहेतावववधारणे' इत्यमरः । 'अम्भोर्णस्तोयपानीयम्' इति च । रामाद्रावणविनाशं निश्चित्य रावणमातरमुद्दिश्याह—**तर्षार्तीति** । हे वत्से नैकषि निकषात्मजे । 'क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तते' इति स्त्रीभ्यो ढकं बाधित्वाण् । सा भवती तादृक्प्रसिद्धा गुणवतः पुत्रस्य रावणस्य कथं केन प्रकारेण । विनाशमिति हृदयम् । अमङ्गलत्वाद्विनाशपदं नोपात्तम् । द्रक्ष्यसि । सा का । यस्याः स्तनौ कर्मभूतौ अष्टभिर्मुखैः क्रन्दन्ती वत्सस्य रावणस्य दशमुखी पपौ पीतवती । कीदृशैः तर्षः पिपासा अर्तिः पीडा तया व्यतिलेलिहानाः पुनःपुनरास्वादयन्त्यो या रसनास्ताभी रम्यैः । द्वाभ्यां स्तनद्वयं पीतमपराण्यष्टमुखानि क्रमेण क्रन्दन्तीति भावः । व्यतिलेलिहान इति लिहेर्यङ्लुगन्तात् 'कर्तरि कर्मव्यतिहारे' इति तङ् । **भुजनिवह इति** । भुजसमूह एव विहङ्गिका भारयष्टिः । 'वहंगी' इति प्रसिद्धा । गुणाः शौर्यादयः, शिक्यं च । धुरीणे भारवाहे । 'खः सर्वधुरात्' इत्यत्र ख इति योगविभागात्खः । 'धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः' इत्यमरः । अस्य राज्यभारस्य । रूपं स्वभावः । एककंधराद्भारः स्खलतीत्यु-

---

१. 'विजित्वर–'. २. 'कैकसि'. ३. 'यान्तं पापम्'. ४. 'स्खलितम्'.

**माल्यवान्**—(अश्रूणि स्तम्भयन् ।) वत्स,

विद्वानपावृत्तमिव स्वभाग्यं न तावदात्मानमहं ब्रवीमि ।
महामुनेर्विश्रवसस्तपोभिर्निवापबीजं यदि नः कुलं स्यात् ॥ १५ ॥

(प्रविश्य पटाक्षेपेण संभ्रान्तः शुकः ।)

**शुकः**—

प्रहस्तधूम्राक्षमहोदरादीन्व्यापाद्य सेनाधिपतीनमात्यान् ।
स एष लङ्कामुपरुध्य रामः शाखामृगैरर्णवमातनोति ॥ १६ ॥

**माल्यवान्**—(सविषादम् ।) पुरस्तादेव दृष्टमिदमस्माभिः । देशकालव्यवहितस्यापि प्रमेयग्रामस्य यथामुखीनमादर्शतलं हि स्थविरबुद्धिः । (विमृश्य । आकाशे ।) साधु रामभद्र, साधु । विजिगीषोरदीर्घसूत्रता हि कार्यसिद्धेरवश्यंभावः ।

**सारणः**—सखे शुक, अथ किंविधानो यातुधानेश्वरः ।

**शुकः**—(सखेदस्मितम् ।) सखे, किं तस्य विधानम् ।

श्रुत्वा दाशरथी सुवेलकटके साटोपमर्धे धनु-
ष्टंकारैः परिपूरयन्ति ककुभः प्रोञ्छन्ति कौक्षेयकान् ।

---

चितम् । दशकंधरादपि यदि भारः स्खलति तदास्य भारस्य स्खलनमेव स्वभाव इति भावः । विद्वाञ्जानन् । 'विदेः शतुर्वसुः' । अपावृत्तमपगतम् । पुलस्त्यपुत्रो विश्रवाः । विश्रवा रावणपिता । निवापो मृतस्य जलाञ्जल्यादिदानम् । 'निवापः पितृदानं स्यात्' इत्यमरः । बीजं कारणम् । यदि स्यात् । तदा स्यादित्यर्थः । पटी जवनिका । प्रहस्तादयो योधाः । व्यापाद्य विनाश्य । उपरुद्ध्य वेष्टयित्वा । शाखामृगो वानरः । अर्णवमिवार्णवम् । ननु भावि कार्यं पुरस्तादेव कुतो दृष्टमित्यत आह—**देशकालेति** । हि यतः । स्थविरबुद्धिर्वृद्धमतिः । देशकालव्यवहितस्यापि प्रमेयसमूहस्य यथामुखीनं मुखस्य सदृशं दृश्यते यत्र तादृशमादर्शतलं भवतीत्यर्थः । मुखस्य सदृशं यथामुखम् । 'यथामुखसंमुखस्य दर्शनः खः' । आदर्शो दर्पणः । तलशब्दस्याजहल्लिङ्गत्वात्तलम् । बुद्धिरिति सामानाधिकरण्यम् । अदीर्घसूत्रताचिरक्रियता । 'दीर्घसूत्रश्चिरक्रियः' इत्यमरः' । किं विधानं यस्य सः । किं प्रश्ने, निन्दायां वा । यातुधानो राक्षसस्तस्येश्वरो रावणः । किं तस्य विधानम् । अपि तु न किमपि । **श्रुत्वेति** । सुवेलो गिरिस्तस्य कटके नितम्बे दाशरथी रामलक्ष्मणौ कर्मभूतौ श्रुत्वा लङ्कापतेरर्धे करा दश हस्ता धनुष्टंकारैर्धनुःशब्दैः

---

१. 'स्वभाग्यात्'. २. 'संमुखीनम्'. ३. 'प्रविदारयन्ति'.

अभ्यस्यन्ति तथैव चित्रफलके लङ्कापतेस्तत्पुन-
वैदेहीकुचपत्रवल्लिरचनाचातुर्यमर्धे कराः ॥ १७ ॥

**माल्यवान्**—(निःश्वस्य ।) हा वत्स रावण, कथमद्यापि सैव[1] हृदयपरिस्पन्दमुद्रा । (शुकं प्रति ।) वत्स, अथ गोपुरगौल्मिकबलाध्यक्षेण वत्सेन नरान्तकेन किं प्रतिपन्नम् !

**शुकः**—(निःश्वस्य ।) मातामह[2], कृतैव कुमारेण द्वारमर्यादा । परमङ्गदेन सोऽपि[3] । (इत्यर्धोक्ते सास्रमधोमुखस्तिष्ठति ।)

**माल्यवान्**—हा वत्स दशग्रीवनन्दन, कथमिदं तव[4] द्रष्टुमेतावन्तं कालमस्माकमायुः ।

(नेपथ्ये ।)

भो भो महापार्श्वप्रभृतयः सैनिकाः,
व्यावर्तध्वमुपाध्वमुद्धुरशरज्वालामुखीं मातरं
देवीमस्त्रमयीं प्लवंगपशवः पश्यन्ति पृष्ठानि वः ।
चेतः शक्रजितोऽपि लक्ष्मणवधे बद्धोत्सवं मध्यमः
पौलस्त्यः स्वयमायुधं विधृतवानद्यापि रामाद्भयम् ॥ १८ ॥

---

ककुभो दिशः परिपूरयन्ति । कौक्षेयकं खड्गं प्रोञ्छन्ति मार्जन्ति । तथैवार्धे कराश्चित्रफलके चित्ररचनाधारे वैदेह्याः कुचे या पत्रवल्लिः पत्रावली तस्या रचना लिखनं तत्र वैदग्ध्यं कौशलमभ्यस्यन्ति । अर्धे इति 'प्रथमचरम–' इत्यादिना जसि वा सर्वनामसंज्ञायां शीभावे रूपम् । 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इति च । सैव हृदयपरिस्पन्दमुद्रा स एव सीतास्तनपत्ररचनायां हृदयावष्टम्भ इत्यर्थः । परिस्पन्दश्चेष्टा, अवष्टम्भो वा । मुद्रा निश्चयः । गोपुरं पुरद्वारम् । 'गोपुरं तु पुरद्वारि' इत्यमरः । गुल्मः सेना, घट्टं वा । तत्र नियुक्तो गौल्मिकः । 'तत्र नियुक्तः' इति ठक् । 'गुल्मः सेनाघट्टभिदोः सैन्यरक्षणरुग्भिदोः' इति मेदिनीकरः । अध्यक्षशब्दः प्रत्येकमभिसंबध्यते । नरान्तको रावणपुत्रः । प्रतिपन्नं कृतम् । मर्यादा निरोधः । अङ्गदेन वालिपुत्रेण । **व्यावर्तध्वमित्यादि** । ये सैनिकाः, व्यावर्तध्वम् । किमिति पलायध्वम्, निवर्तध्वमित्यर्थः । यतो हेतोः प्लवंगपशवः कुत्सितवानरा वो युष्माकं पृष्ठानि पश्यन्ति, अतोऽस्त्रमयीं देवीमुपाध्वम् सेवध्वम् । आस उप-

---

१. 'सैव ते हृदयपरिपन्थिनीपरिस्पन्दमुद्रा'. २. 'मातामह' इति पुस्तकान्तरे नास्ति. ३. 'सोऽपीत्थम्'. ४. 'तव' इति पुस्तकान्तरे नास्ति.

**सारणः**—(श्रुत्वा सहर्षम्।) आर्य, जातं जातमवलम्बनम्। यदयं प्रतिवुध्य कुमारकुम्भकर्णः पुरस्कृत्य च मेघनादमभ्यमित्रीणः संवृत्तः।

**माल्यवान्**—(निःश्वस्य।) स्वस्ति विजयेतां रामलक्ष्मणौ कुम्भकर्णमेघनादौ।

**शुकः**—(सविषादमात्मगतम्।) शान्तं शान्तम्। कथमविशिष्टकर्तृकर्मभावमुभयत्र द्विवचनं प्रयुक्तमार्येण।

**माल्यवान्**—(सखेदम्।) वत्सौ शुकसारणौ, अद्य खल्वियं राक्षसलक्ष्मीः सर्वथा कुम्भकर्णमवलम्ब्य वर्तते। इदं तु न विद्मः।

अग्रजं वा दशग्रीवमनुजं वा विभीषणम्।
अन्वयव्यतिरेकाभ्यां वीरः कमभिषेक्ष्यति॥ १९॥

(नेपथ्ये।)

मा भैष्टं कमठेन्द्रपन्नगपती कश्चिन्न वैशेषिको
भूमेरद्य भरः पतिः पलभुजामाज्ञापयत्येष वाम्।

---

वेशने' उपपूर्वः। लोटि मध्यमपुरुषवहुवचने 'धि च' इति सलोपः। कीदृशाम्। उद्धुरा उद्योगिनो ये शरास्तेषां ज्वाला तेजस्तदेव मुखं यस्यास्ताम्। अन्यापि ज्वालामुखी देवता भवतीति ध्वनिः। अद्यापि रामाद्भयमस्ति। अपि तु नास्ति भयमिति। इन्द्रजितोऽपि मेघनादस्यापि चित्तं लक्ष्मणवधे वद्ध उत्सवो येन तादृशं जातम्। मध्यमः पौलस्त्यः कुम्भकर्ण आयुधं शस्त्रं धृतवान्। अतो रामाद्भयं न विधेयमिति भावः। रामादिति 'भीत्रार्थानां भयहेतुः' इत्यपादानता। पुरस्कृत्याग्रतः कृत्वा। अभ्यमित्रीणो रणे शत्रोरभिमुखगामी। 'अभ्यमित्राच्छ च' इति चकारात्खः। विजयेतां रामलक्ष्मणावित्यत्र रामलक्ष्मणौ कर्मभूतौ। कर्तृपरत्वभ्रान्त्या सविषादमाह—शान्तमिति। उभयत्रेति। रामलक्ष्मणावित्यत्र कुम्भकर्णमेघनादावित्यत्र चेत्यर्थः। अन्वयव्यतिरेकाभ्यां जयपराजयाभ्यामित्यर्थः। अन्वयेनाग्रजं ज्येष्ठम्, व्यतिरेकेणानुजं कनिष्ठम्। रावणादीनां मरणादिति भावः। वीरः कुम्भकर्णः। **मा भैष्टमित्यादि।** पलं मांसं भुञ्जते पलभुजो राक्षसास्तेषां पतिः स्वामी रावणः, हे कमठेन्द्रपन्नगपती कूर्मराजसर्पराजौ, वा युवामित्याज्ञापयति—भूमेर्वैशेषिको विशेषभवः। अध्यात्मादित्वाट्ठञ्। कश्चिन्न भरः अतो मा भैष्टं मा भयं कुरुतम्। कुम्भकर्णस्यातिगुरुशरीरपातेन भूमेरधिको भरः स्यात्। तथा च तद्धारकत्वादावामपि भरभागिनौ भवाव इति भयं मा

---

१. 'जातम्' इत्येकवारमेव पुस्तकान्तरे. २. 'मेघनादौ च'. ३. 'राजलक्ष्मीः'. ४. 'अवलम्ब्यते'.

**शुकः**—(सहर्षम् ।) नूनमस्मदीयैर्विशेषेण किमपि विक्रान्तम् ।

(माल्यवानवधत्ते ।)

(पुनर्नेपथ्ये ।)

दोःशैलौ हरता पृथक्पृथगथो मूर्धानमुत्क्षिप्नुना
रामेणापि लघूकृतं पतति यत्तत्कौम्भकर्णं वपुः ॥ २० ॥

**माल्यवान्**—हा वत्स । (इति मूर्च्छितः पतति ।)

**उभौ**—(सास्रम् ।) आर्य, समाश्वसिहि समाश्वसिहि ।

**माल्यवान्**—(आश्वस्य ।) वत्सौ, जीवतो रामभद्रस्य मैथिलीहरणादेतदस्माभिरान्तरेण चक्षुषा विषयीकृतमेव । किमिदानीं समाश्वसितव्यमस्ति ।

**शुकः**—धिक्कष्टम् । 'कौम्भकर्णं वपुः पतति' एतदपि देवेनाज्ञापयितव्यम् ।

**माल्यवान्**—वत्स, अद्यापि रावणस्याज्ञा । नूनमन्योन्येषां वैहासिकाः कपयो दशकण्ठमुल्लुण्ठयन्ति ।

**सारणः**—आः क्षुद्राः, ।

यद्यस्ति वीर्यमस्त्येव तत्कर्म कथयिष्यति ।
मेघनादमजित्वैव धिक्प्रहासविभीषिकाम् ॥ २१ ॥

---

कुरुतमित्यर्थः । सहर्षमिति । रामबलस्याहितभ्रमादिति भावः । अवधत्त इति । कुतो भूमेर्भर इति ज्ञातुमिति भावः । नन्वतिगुरुकुम्भकर्णशरीरपातेन कुतो न भरो भूमेरत आह—दोः शैलाविति । यद्यस्माद्धेतोः कौम्भकर्णं कुम्भकर्णसंबन्धि वपुः शरीरं तद्रामेणैव लघूकृतं सत्पतति । कीदृशेन । पृथक्पृथग्यथा भवति तथा दोःशैलौ बाहुपर्वतौ हरता छिन्दता । अथो अनन्तरं मूर्धानं मस्तकमुत्क्षिप्नुना ऊर्ध्वं प्रेरणशीलेन । अतो न कश्चिद्भर इति भावः । 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुः । अन्तरेण मानसेन चक्षुषेव चक्षुषा ज्ञानेन विषयीकृतं ज्ञातम् । 'विषयो ज्ञानमुच्यते' इति विश्वः । वैहासिका हास्यकराः । उल्लुण्ठयन्त्युपहसन्ति । प्रहास उपहासस्तद्रूपा विभीषिका । धिग्योगे

---

१. 'वत्स शुक'. २. 'समाश्वसितम्'. ३. 'आज्ञापितव्यम्'; 'अज्ञायि'. ४. 'रावणाज्ञा'. ५. 'उल्लुठन्ति'; 'उल्लुठयन्ति'. ६. 'अजित्वापि'; 'अजित्वा तु'.

(नेपथ्ये ।)

भो भो यूथपतयः, विलुम्पन्तु भवन्तो लङ्कागोपुरप्राकारतोरणानि ।

संनद्धेन्द्रायुधमविरलारम्भिगीर्वाणवाण-
श्रेणीवर्षं तदवजगृहे येन दुष्टग्रहेण ।

**माल्यवान्**—(सोद्वेगम् ।) आः, किमनेन श्रावयितव्योऽस्मि । (इति कर्णौ पिदधाति ।)

(पुनर्नेपथ्ये ।)

दृष्ट्वा कांचित्प्रहरणमयीं वीरयज्वानमिष्टिं
दिष्ट्या सोऽयं समुपशमितः शक्रजिल्लक्ष्मणेन ॥ २२ ॥

**माल्यवान्**—सत्योऽयम् 'अतिदुःखो[1] निर्दुःखः' इति लोकप्रवादः । यदस्मिन्नपि समूलघातमभिघ्नति व्यतिकरे[2] तथैव श्वसिमः[3] ।

**शुकः**—(ऊर्ध्वमवलोक्य ।) यथा समन्तादम्बरचर[4]विमानवीथयः ककुभां मुखानि पर्यवष्टभ्नन्ति[5], तथा शङ्के दुर्वारदारुणक्रोधवडवानलनिपीयमानशोकसमुद्रो दाशरथिविजयाय संनह्यते देवः ।

**सारणः**—(सविषादमात्मगतम् ।) कष्टम्[6] । कथं दाशरथिविजयायेत्यविशिष्टोपपत्तिककर्तृकर्मकारकार्थविषयं वयस्यवचनम् ।

**माल्यवान्**—(उत्थाय ।) तदस्माभिरपि जरसा दूषितस्यात्मनः प्रक्षालनाय प्राप्तं शस्त्रधारातीर्थम् । (इति[7] सशुकसारणो निष्क्रान्तः ।)

**विष्कम्भकः ।**

---

द्वितीया । इन्द्रजिद्विनाशं श्रुत्वा रामसेनापतिराह—**भो भो इत्यादि** । विलुम्पन्त्वपनयन्तु । 'तोरणोऽस्त्री वहिर्द्वारम्' इत्यमरः । वर्षं वर्षणम् । अवजगृहे वृष्टिनिरोधः कृतः दुष्टग्रहेणेति ग्रह आसङ्गः । पिदधात्याच्छादयति । वीरो यज्वा याज्ञिको यत्र तामिष्टिं यज्ञम् । समुपशमितो मारितः । अन्येनापि दुष्टग्रहेण शनैश्चरादिनेन्द्रधनुःसहितं वर्षणमवगृह्यते । तच्च कारीरीयज्ञादिना शाम्यत इति ध्वनिः । अतिशयितं दुःखं यस्य सोऽतिदुःखः । समूलघातं समूलं हत्वेत्यर्थः । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल् । व्यतिकरे दैवविपाके । श्वसिमो जीवामः । अम्बरचरा देवाः । वीथयः पङ्क्तयः । पर्यवष्टभ्नन्ति व्याप्नुवन्ति । दारुणो महान् । दूषितस्य मलिनीकृतस्य । तीर्थं

---

१. 'अतिदुःखोऽतिदुःखः'. २. 'व्यतिरेके'. ३. 'विश्वसिमः' ४. 'अम्बरान्तरचर्यो'. ५. 'पर्यवस्तभ्नन्ति'; 'पर्यवस्कन्दन्ति'. ६. 'कष्टं कष्टं दाशरथि–'; 'कथं दाशरथि–'. ७. 'इति निष्क्रान्ताः'.

(ततः प्रविशति विद्याधरद्वयमाकाशयानेन।)[1]

**एकः**—अहो वहोः कालादनया गगनवीथ्या निरातङ्कमिव संचरावहे। (अधोऽवलोक्य।)[2]

देवेन्द्रोपनिवेद्यनन्दनवनस्रक्तोरणश्लाघिनी
　लङ्केयं दशकण्ठविक्रमसखी यस्यां समन्तादिमाः।
युद्धालोकनकौतुकोन्मुखवधूसंकीर्णकर्णीरथा
　रथ्याः किं कथयामि यान्ति यदमी न व्योम्नि वैमानिकाः॥२३॥

(सखेदाद्भुतम्।) सखे हेमाङ्गद,

एताः पश्य पलादपत्तनभुवः सौत्रामणीनां दृशा-
　मस्राम्भोभिरदेवमातृकगृहारामाभिरामश्रियः।[3]
एतासु प्रतिघातिविक्रमकथोपालम्भवैतण्डिकैः[4]
　क्लृप्तेन्द्रध्वजिनीजयानुकृतिभिर्डिम्भैरपि क्रीडितम्॥२४॥

---

पुण्यभूमिः। वीथ्यङ्गनं, वर्त्म वा। 'वीथी पथ्यङ्गनेऽपि च' इति विश्वः। संचरावहे 'समस्तृतीयायुक्तात्' इति तङ्। निरातङ्कमिति क्रियाविशेषणम्। **देवेन्द्रेति**। इयं लङ्कास्तीति शेषः। कीदृशी। देवेन्द्रेणोपनिवेद्या उपभोग्या या नन्दनवनस्रङ् नन्दनवनसंबन्धिनी माला तस्यास्तोरणेन वन्दनमालिकया श्लाधिन्यादरणीया। दशकण्ठविक्रमसखी रावणपराक्रमसङ्गिनी। यस्यां लङ्कायामिमा रथ्या नगरमध्यगतप्रकीर्णमार्गाः किं कथयामि। अपि तु कथयितुं न शक्नोमीत्यर्थः। कीदृशीः। युद्धालोकनकौतुकोन्मुखा या वध्वो राक्षसस्त्रियस्तासां संकीर्णा निरन्तराः कर्णीरथाः स्त्रीरथाः यत्र तादृशीः। वैमानिका देवा व्योम्नि यत्र यान्ति। रावणयुद्धालोकनभयात्तदपि किं कथयामीत्यनुषङ्गः। क्वचित् 'मान्ति' इति पाठः। तच्च स्फुटं तत्राप्यनुषङ्गः। 'कर्णीरथः प्रवहनम्' इत्यमरः। विमानेन चरति वैमानिकः। 'चरति' इति ठक्। सखेदमिति। इन्द्रवन्द्यापि लङ्का कपिना दग्धेति भावः। **एता इति**। एताः पलादपत्तनभुवो राक्षसनगरभूमीः पश्य। कीदृशीः। सुत्रामा इन्द्रस्तत्संबन्धिनीनां दृशां चक्षुषामस्राम्भोभिरश्रुजलैरदेवमातृका नद्यम्बुपालिता ये गृहारामा गृहवनानि तैरभिरामाः श्रियो यत्र तादृशीः। यद्वा गृहाण्यारामा उपवनं च तैर्मनोहरश्रियः। 'गृहारामास्तु निष्कुटाः' इत्यमरः। 'आरामः स्यादुपवनम्' इति च। एतासु भूमिषु डिम्भैरपि बालकैरपि क्रीडितम्। क्लृप्ता निराकृता या इन्द्रस्य ध्वजिनी सेना तस्या जयानुकृतिभिर्जयानुकारैः। अनुकृतिस्तुल्यता। वेपग्र-

---

१. 'आकाशयानेन विद्याधरद्वयम्'. २. 'अधस्तादवलोक्य'. ३. 'बाष्पाम्भोभिः'. ४. 'प्रतिपक्ष—'.

**द्वितीयः**—सखे रत्नचूड, किमुच्यते।

रक्षांसीति पुरापि संश्रृणुमहे वीरस्तु कस्तादृशो
जागर्ति स जगत्त्रयीविपदलंकर्मीणदोर्विक्रमः।
शश्वद्द्वारभुवि प्रशस्तिरचनावर्णायमानेक्षण-
श्रेणीसंभृतगोत्रभिन्मयजयस्तम्भो यथा रावणः॥ २५॥

**रत्नचूडः**—सखे हेमाङ्गद, पश्य पश्य। पौलस्त्यपत्तनप्रतोलीषु दीयमाने संनाहपटहे

दिग्दन्तावलदन्तमौक्तिकमयद्वास्तोरणस्रग्विणो
गीर्वाणाधिपतिप्रतीष्टनिगडोन्मृष्टान्यवन्दीशुचः।

---

हणमिति यावत्। डिम्भैः कीदृशैः। प्रतिघाती विपक्षस्तस्य विक्रमः पराक्रमस्तस्य कथायामुपालम्भ आक्रोशस्तत्र वैतण्डिकैर्दूषणमात्रदायिभिः। 'कथादिभ्यष्ठक्' इति ठक्। तिस्रः खलु कथा भवन्ति—वादो जल्पो वितण्डा चेति। तत्र वादो नाम प्रवक्तृकः शिष्यादिविषयः। विजिगीषुकथा जल्पः। वितण्डा तु [प्रति]पक्षस्थापनहीना। वितण्ड्यते आहन्यतेऽनया प्रतिपक्षस्थापनमित्युपपत्त्या परपक्षोपघातेन पारिशेष्यात्स्वपक्षसिद्धिरस्याः प्रयोजनं प्रतीयते। अपरमप्रस्तुतत्वान्न विवेचितमिति। **रक्षांसीति**। रक्षांसि सन्तीति पुरापि संश्रृणुमहे पूर्वमेवास्माभिः श्रुतम्। 'पुरि लुङ् चास्मे' इति चकाराद्भूते लट्। यद्यपि संयोगादिसूत्रे अकर्मकादित्यनुवृत्ताविह तङ् न प्राप्नोति, तथापि कर्मव्यतीहार एवात्र तङ्। अन्योन्यं शृणुम इत्यर्थात्। यद्वा अकर्मकादिति तत्रानुवर्तत इति प्रायिकम्। तु पुनः यः पुरुषो जगत्त्रयीविपदामलंकर्मीणः समर्थो बाहुपराक्रमो यस्य तादृशः को जागर्ति। अपि तु यथा रावणस्तथा न कोऽपीत्यर्थः। प्रशस्तिरचना प्रशंसालिखनं तत्र वर्णायमाना अक्षरायमाणा या ईक्षणश्रेणी नेत्रपङ्क्तिस्तया संभृत उपचितो गोत्रभिदिन्द्रस्तन्मयस्तत्स्वरूपो जयस्तम्भो यस्य सः। अन्यस्मिन्नपि जयस्तम्भे प्रशस्तिलिखित्वा ध्रियत इति ध्वनिः। रावणेन द्वारभूमाविन्द्रशरीरजयस्तम्भे तदीयेक्षणसहस्राण्येव प्रशस्तिरचना लिखित्वा धृतेति भावः। पत्तनं पुरम्। प्रतोली रथ्या। संनाहार्थं पटहः संनाहपटहः। संनहननिमित्तढक्केत्यर्थः। दीयमाने ताड्यमाने। धातोरनेकार्थत्वात्। लोकोक्तिरियम्। दन्तावलो हस्ती। 'दन्तशिखात्संज्ञायाम्' इति वलच्। 'वले' इति दीर्घः। द्वाद्वारं तत्र तोरणस्रक्तोरणमाला तद्योगात्प्रशंसायाम्। 'अस्मायामेधास्रजो विनिः'। गीर्वाणाधिपतिरिन्द्रः। प्रतीष्टः सोढः। सोऽपि निगडे बद्ध इत्यर्थः। वन्दीनां शोक उन्मृष्टोऽपनीतः। वीरश्रिया समं पांसुकेलिर्धूलिक्रीडा। मन्दोदरी रावणवधूः। सा त्वसुरकन्येति तत्संबन्धवशेन शौटीरा गर्ववती। 'शौटीरस्तु

वीरश्रीसहपांसुकेलिसुहृदो मन्दोदरीबन्धुता-
शौटीरासुरसुन्दरीसुरभयः क्षुभ्यन्ति रक्षोगृहाः ॥ २६ ॥

हेमाङ्गदः—(विहस्य ।) नूनमिदानीमत्र

दृष्ट्वा राघवमेकराक्षसवनस्वच्छन्ददावानलं
जानक्यां निजवल्लभस्य परमं प्रेमाणमालोक्य च ।
काङ्क्षन्ती मुहुरात्मपक्षविजयं भङ्गं च मुग्धा मुहु-
र्ध्यायन्ती ध्रुवमन्तरालपतिता मन्दोदरी वर्तते ॥ २७ ॥

रत्नचूडः—(सकरुणस्मितम् ।) वयस्य, विबुधराजविजयविक्रमक्रीतचेतसा वृद्धपितामहेन स्वयं परमेष्ठिना प्रतिष्ठितेन्द्रजिन्नामधेयशेषस्य तादृशस्य तनूजस्य शुचा विचेष्टमानामरातिगृहिणीमपि नैवमुपक्रोष्टुमर्हसि । (पुरोऽवलोक्य च ।) हस्तदक्षिणेन कथमयं द्विधा विभज्यते महाजनः । (निरूप्य च सभटाकौतुकम् ।) सखे, पश्य पश्य ।

✓ न्यञ्चन्न्यञ्चद्धरित्रीधृतचरणभरश्चन्द्रहासैकदृष्टि-
र्व्यावल्गद्यौगपद्योत्सुकसकलभुजाक्रान्तदिक्चक्रवालः ।

---

मतो गर्वे' इति शाश्वतः । सुरभिर्मनोहरः, ख्यातो वा । क्षुभ्यन्ति चलीभवन्ति । 'क्षुभ संचलने' । दृष्ट्वेति । दावो वनम् । 'वने च वनवह्नौ च दवो दावः प्रकीर्तितः' इति विश्वः । राक्षसा एव वनम् । एकश्चासौ राक्षसवनस्वच्छन्ददावानलश्चेति कर्मधारयः । तादृशं राघवं रामं दृष्ट्वा निजवल्लभस्य रावणस्य जानक्यां सीतायां परमं श्रेष्ठं प्रेमाणमवलोक्य च आत्मपक्षविजयं भङ्गं च अर्थादात्मपक्षस्यैव काङ्क्षन्तीच्छन्ती मुग्धा अज्ञा एतत्सकलं वाक्यार्थं ध्यायन्ती चिन्तयन्ती ध्रुवं निश्चितमन्तरालपतिता मध्यस्थिता सती मन्दोदरी रावणपत्नी वर्तते । तदयं वाक्यार्थः—रामस्य रक्षोविनाशकारणत्वात्स्वपक्षस्य जयमाकाङ्क्षन्ती रामभङ्गे च रावणस्य सीताविषयकं प्रेमाणमालोक्यावश्यं मां परित्यज्य रावणः सीतावश एव भविष्यतीत्यतो रामस्य जयपराजयाभ्यामपि न ममेष्टमित्युभयपक्षमध्ये निपतिता मन्दोदरी सचिन्तास्तीति । 'प्रेमा ना प्रियता हार्दम्' इत्यमरः । परमेष्ठी ब्रह्मा । प्रतिष्ठितं कृतं यदिन्द्रजिन्नाम तदेव शेषोऽवशेषो यस्य तस्य । मृतस्येत्यर्थः । विचेष्टमानां विगतचेष्टाम् । अरातिगृहिणीं शत्रुभार्यां मन्दोदरीमुपक्रोष्टुं निन्दितुम् । 'अपक्षेप्तुम्', 'उपक्षेप्तुम्' इति च पाठयोरपहसितुमुत्क्षेप्तुमिति वार्थः । अर्हसि । हे हेमाङ्गद इति शेषः । दक्षिणेन प्रदेशेन विभज्यते विभागवान्भवति । कर्मकर्तरि तङ् । न्यञ्चदिति । दशास्यो निर्जिहीते निर्गतो भवति । लङ्कात इति शेषः ।

---

१. 'शौण्डीर–'. २. 'इदानीम्' इति पुस्तकान्तरे नास्ति. ३. 'एव'. ४. 'मुहुः'. ५. 'प्रतिष्ठापित–'. ६. 'कथमत्र'. ७. 'चित्तः'.

क्रोधक्रूराक्षिरक्तोत्पलरचितवियत्तोरणस्रञ्जि बिभ्र-
द्वक्त्राणि प्रत्यनीकप्रसरसरभसो निर्जिहीते दशास्यः ॥ २८ ॥

**हेमाङ्गदः**—(निर्वर्ण्य ।) अहो, दृष्टचरमप्यस्य साङ्ग्रामिकमोजायित-मयातयाममिव भीषयते । सखे रत्नचूड,

मरुत्वद्दम्भोलिक्षणघटितघोरश्वयथुना
निसर्गोदग्रेण प्रसभमुरसा पीतगगनः ।
श्रियं देवद्रीचीं निजभुजवनोद्दामकरिणी-
मयं कुर्वन्वीरः स्मरसि कथमासीद्दशमुखः ॥ २९ ॥

**रत्नचूडः**—सखे, किमुच्यते । महतामप्युपरि किमप्ययं रावणः ।

एनं कल्पतरूद्भवैरसुकरव्याजैः सदा भूषणै-
राराध्नोति सुराधिपः किमपरं दीनो नदीनां पतिः ।

---

कीदृशः । क्रोधेन क्रूराणि भयानकान्यक्षीण्येव रक्तोत्पलानि तै रचिता निर्मिता वियत्याकाशे तोरणस्रजो यैस्तादृशानि मुखानि बिभ्रद्दधत् । पुनः कीदृशः । न्यञ्चन्ती अत्यर्थं निम्ना भवन्ती या धरित्री पृथिवी तस्यां धृतश्चरणभरो येन सः । रावणस्य चत्वारि चरणानीति रामायणम् । चन्द्रहासो रावणखड्गस्तत्रैका दृष्टिर्यस्य सः । व्यावल्गन्त इतस्ततश्चलन्तो यौगपद्येनैकदैवोत्सुका उत्कण्ठिताश्च ये सकला भुजा विंशतिबाहवस्तैराक्रान्तं दिक्चक्रवालं दिङ्मण्डलं येन सः । प्रत्यनीकं शत्रुसैन्यं तत्र प्रसरणं गतागतं तत्र रभसो यस्य सः 'चक्रवालं तु मण्डलम्' इत्यमरः । दृष्टचरं पूर्वदृष्टम् । साङ्ग्रामिकं सङ्ग्रामाय भवति । 'तस्मै प्रभवति संतापादिभ्यः' इति ठक् । ओजायितमोजस्विता । प्रागल्भ्यमिति यावत् । क्यङ् सलोपश्च । अयातयाममिवेति । जीर्णं परिभुक्तं च यातयामम् । तदितरत् । अननुभूतमिवेत्यर्थः । 'यज्जीर्णं परिभुक्तं च यातयामं तदुच्यते' इत्यमरः । भीषयते त्रासयति । 'भीस्म्योर्हेतुभये' इति तङ् । 'भियो हेतुभये षुक्' । **मरुत्वदिति** । अयं रावणो देवद्रीचीं देवगामिनीं श्रियं प्रसभं हठेन निजभुजवनोद्दामकरिणीं कुर्वन्कथमासीदिति स्मरसि । उरसा हृदयेन पीतमाच्छादितं गगनं येन तादृशः । कीदृशेन । निसर्गोदग्रेण स्वभावतो विशालेन । मरुत्वत इन्द्रस्य दम्भोलिना वज्रेण क्षणं घटितो घोरो महाञ्श्वयथुः 'शोथ' इति प्रसिद्धो यत्र तादृशेन । श्वयथुरिति 'टु ओश्वि गतिवृद्ध्योः' । 'ट्वितोऽथुच्' । **एनमिति** । सुराधिप इन्द्रः कल्पतरूद्भवैरत एवासुकरव्याजैः । कल्पतरूणां यथेष्टप्रदत्वात् । भूषणैरलंकरणैः सर्वदा एनं रावणमाराध्नोति सेवते । ननु भवतु नाम स्वाराज्यप्राप्त्यर्थं शक्रस्य तदाराधनं जलरूपः समुद्रोऽपि तमाराध्नोतीत्याह—किमपरं किं च नदीनां पतिः समुद्रो दीनो दुःखितः स्वाक-

दण्डाधिक्यभयात्कथंकथमपि स्कन्धोपनेयान्मणी-
नप्यस्मै परिशोधयत्यपदिशन्निःसंपदः स्वाकरान् ॥ ३० ॥

**हेमाङ्गदः**—(सभयम् ।) कथमयं परापतित एवासमसमरहर्षहेषमाणवनायुजवाजिनिवहवितीर्णकीनाशकासरकर्णज्वरेण प्रजविना रथेन कार्मुकपाणिर्महावीरः ।

**रत्नचूडः**—(सभयाद्भुतम् ।)

कल्पान्तक्रूरसूरोत्करविकटमुखो मानुषद्वन्द्वयुद्ध-
क्रीडाकण्डूयदूर्जस्वलसकलभुजालोकभूयोविलक्षः ।
संभूयोत्तिष्ठमानस्वपरबलमहाशस्त्रसंपातभीमा-
मुर्वीं गीर्वाणगोष्ठीगुरुर्मदनिकषो नैकषेयः पिधत्ते ॥ ३१ ॥

---

रात्निजोत्पत्तिस्थानानि निःसंपदो गतसंपत्तीनपदिशन्कुर्वन्सन्, कथयन्निति वा, अस्मै रावणाय मणीन्परिशोधयति पूरयति । दण्डाधिक्यभयात् । दण्डो दमस्तदाधिक्यत्रासात् । ये मनोज्ञास्ते दत्ता इदानीममनोज्ञानपि परिशोधयितुं दण्डः स्यादिति भावः । कीदृशान्मणीन् । कथंकथमपि महता कष्टेन स्कन्धैर्बाहुमूलैर्वाजिभिर्वोपनेयानुपनतीकर्तुं शक्यान् । अतिस्थूलानित्यर्थः । 'स्कन्धो बाजिभुजामूले समाम्नायसमूहयोः' इति मेदिनीकरः । 'परिच्छिन्नं फलं यत्र स्कन्धस्कन्धेन दीयते । स्कन्धोपनेयं तं प्राहुः संधिं मन्त्रविदो जनाः ॥' इति नीतिः । 'उत्पत्तिस्थानमाकरः' इति धरणिः । आपतितः समागतः । हेषमाणः शब्दविशेषं कुर्वन् । वनायुर्देशविशेषः । तत्र भवा वनायुजा अश्वविशेषाः किनाशो यमः । 'किनाशः कर्षके क्षुद्रे कृतान्तोपांशुघातिनि' इति विश्वः । कासरो महिषः । 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । कर्णज्वरः श्रवणव्याधिः । प्रजविनातिवेगवता । **कल्पान्तेति** । नैकषेयो निकषापुत्रो रावणः । संभूय मिलित्वा । उत्तिष्ठमान आक्रममाणो यः स्वबल आत्मबलः शत्रुबलस्तयोर्महाशस्त्रसंपातेन भयानकामुर्वीं पृथिवीं पिधत्त आच्छादयति । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । कीदृशः । कल्पान्ते प्रलयकाले क्रूरो भयंकरो यः सूरोत्करः सूर्यसमूहस्तद्वद्विकटं विकरालं मुखं यस्य सः । मानुषद्वन्द्वयुद्धक्रीडया कण्डूयन्त ऊर्जस्वला बलवन्तश्च ये सकलभुजास्तेषामालोकनेन भूयोविलक्षोऽत्यन्तविलक्षः । द्वन्द्वयुद्धमेकतुलायुद्धम् । कण्डूयन्त इति 'कण्ड्वादिभ्यो यक्' । उत्तिष्ठमान इति । 'उदोऽनूर्ध्वकर्मणि' इति तङ् । निकषो घर्षणप्रस्तरः । दक्षिणतो दक्षिणस्यां दिशि ।

---

१. 'अपि दिशन्'. २. 'सहर्ष–'. ३. 'महारथः'. ४. 'भटनिकरः'. ५. 'कैकसेयो विधत्ते'.

**हेमाङ्गदः**—(सकौतुकम् ।) सखे, दक्षिणतः पश्य तावत् ।

अगस्त्याज्ञासद्यःशमितविपुलोच्छ्रायविषमा-
नुदस्यन्तः सेतावलगितवतो विन्ध्यशिखरान् ।
शिरःसंख्यासत्याकृतदशमुखालोकरभसा-
दुपेत्यातित्रस्ताश्चपलमपसर्पन्ति कपयः ॥ ३२ ॥

**रत्नचूडः**—(दृष्ट्वा सहासम् ।)

शस्त्रीकृतान्कपिभिरापततो मुंदैव
विक्रम्य चन्दनतरून्दधते पलादाः ।
तत्सङ्गिनस्तु भुजगाः क्षणपाशबन्ध-
दुःखासिकामवयवेषु दिशन्त्यमीषाम् ॥ ३३ ॥

**हेमाङ्गदः**—(विहस्य ।) इतोऽपि तावत्

रक्षःस्वयंवरविडम्बपराङ्मुखीभिः
पुष्पोत्करे सुरवधूभिरनुज्झितेऽपि ।
शस्त्रीकृतेन तरुणा हरिणा हतोऽसौ
नक्तंचरः स्वपिति तत्कुसुमावकीर्णः ॥ ३४ ॥

**रत्नचूडः**—(चिरं विभाव्य ।) सखे, पश्य पश्य ।

स्वतनुरुचिभिर्दीर्घाह्नीं द्यामितः सृजतां निजै-
रथ विदधतः कायाभोगैरकाण्डतमस्विनीम् ।

---

'दक्षिणोत्तराभ्यामतसुच्' । **अगस्त्येति** । कपयो वानराश्चपलं यथा स्यादेवमपसर्पन्त्यपगच्छन्ति । कीदृशाः । उपेत्य समीपं गत्वा शिरःसंख्यया सत्याकृतो ज्ञातो दशमुखस्तस्यालोकरभसादतित्रस्ताः सभया विन्ध्यशिखरानुदस्यन्त उत्क्षिपन्तः । कीदृशान् । अगस्त्याज्ञया सद्यःशमितः सकल उच्छ्राय उन्नतिस्तेन विषमान् । सेतावलगितवतोऽलग्नान् । सत्याकृतेत्यत्र 'सत्यादशपथे' इति डाच् । **शस्त्रीकृतानिति** । कपिभिः शस्त्रीकृताननन्तरमापतत आगच्छतश्चन्दनतरून्मुदैव हर्षेणैव विक्रम्योत्लुत्य पलादा राक्षसा दधते धारयन्ति । तत्सङ्गिनश्चन्दनवृक्षाश्रिता भुजगाः सर्पा अमीषां राक्षसानामवयवेषु करादिषु वेष्टनात्क्षणं पाशबन्धदुःखासिकां दुःखावस्थितिं दिशन्ति कुर्वन्ति, प्रयच्छन्ति वा । विडम्बस्तिरस्कारः । सुरवधूभिर्विद्याधरीभिः । हरिणा वानरेण कर्त्रा तरुणा करणेन हतः । तत्कुसुमेन शस्त्रीकृतवृक्षपुष्पेणावकीर्णश्छन्नः । **स्वतन्विति** ।

---

१. 'मुंदवम्'. २. 'साहसम्'.

दधति नितरामुद्दीप्राणामघश्छिदुरश्रियो
हरिहुतभुजां धूमच्छायाममी रजनीचराः ॥ ३५ ॥

हेमाङ्गदः—( सस्मितम् ।) सखे, पश्य पश्य ।

किमपि कपयः कर्माश्चर्यं महातरुशस्त्रिणो
विदधति यथा दिक्कूलेभ्यस्तथापसरन्त्यमूः ।
ध्रुवमवपतद्रक्षःश्रेणीविमुक्तनभोन्तर-
प्रतिभरणिकानिःस्थामानो दशाननकीर्तयः ॥ ३६ ॥

रत्नचूडः—(ससंभ्रमम् ।) अहह, दारुणमुपस्थितम् ।

रक्षोनिपिष्टकपिमुक्तमहीध्रचूर्ण-
पूर्णान्तराभिरिषुवृष्टिभिरुज्जिहानः ।
रोषाट्टहासदहनप्रसरैस्तडित्वां-
ल्लङ्काधिपः किमपि संतमसं तनोति ॥ ३७ ॥

---

अमी रजनीचरा राक्षसा हरय एव वानरा एव हुतभुजोऽग्नयः । तेषां लोहितमुखत्वात् । तेषां धूमच्छायां दधति धारयन्ति । कृष्णवर्णत्वाद्रक्षसाम् । वानरा भूमिष्ठा राक्षसा उपरिवर्तिनस्तथा दृश्यन्त इति भावः । कीदृशानाम् । नितरामत्यर्थेनोद्दीप्राणामुद्दीप्तिशीलानाम् । रजनीचराः कीदृशाः । छिदुरा भङ्गुरा श्रीर्येषां ते । धूमोऽपि भङ्गुरश्रीक एव भवति । **किमपीति** । कपयो वानराः किमप्यनिर्वचनीयमाश्चर्यमद्भुतं कर्म तथा विदधति यथामूर्दशाननकीर्तयो दिक्कूलेभ्योऽपसरन्ति पलायन्ते । त्रुट्यन्तीति यावत् । ध्रुवमुत्प्रेक्षायाम् । अवपतन्त्या अधःपतन्त्या रक्षःश्रेण्या विमुक्तं त्यक्तं यन्नभोन्तरमाकाशमध्यं तस्य प्रतिभरणिकया प्रतिभरणेन निःस्थामानो बलशून्याः । क्षीणा इत्यर्थः । स्थाम बलम् । शून्यदेशस्य प्रतिभरणं युज्यत एव । तथा च रावणकीर्तयो नभोमध्यस्य रक्षोव्याप्तत्वाद्दिशामन्ते स्थिताः । अनन्तरं नभोमध्यस्थरक्षोविनाशेन पुनर्दिगन्तान्नभोमध्य एव स्थिता इति भावः । अहह खेदे । दारुणं भीषणम् । **रक्ष इति** । लङ्काधिपः किमप्यनिर्वचनीयं संतमसं विश्वव्यापकं भयम्, अथ च गाढान्धकारं तनोति विस्तारयति । रोषाट्टहासाभ्यां येऽग्निप्रसरास्तैस्तडित्वान्दीप्तिमान् । अथ च लङ्काधिपस्तडित्वान्मेघ इति व्यस्तरूपकम् । रक्षसा निपिष्टा ये कपिमुक्तमहीध्रास्तेषां चूर्णेन रजसा पूर्णमन्तरमवकाशो यासां ताभिर्बाणवृष्टिभिरुज्जिहान उद्गच्छन् । प्रभवन्निति यावत् । अन्योऽपि मेघोऽन्धकारं वृष्टिं च तनोतीति भावः । संभूय मिलित्वा । भूयो-

---

१. 'उद्दीप्तानाम्'. २. 'अथ'. ३. 'दशन–'. ४. 'लङ्कापतिः'.

हेमाङ्गदः—(क्षणं निर्वर्ण्य।) अहो, क्षुद्रैरपि संभूय भूयोभिरेको महान्सुकरः कदर्थयितुम्। यतः।

दृप्यद्दिक्पालदन्तावलबहलमदावग्रहोग्राभिरक्ष्णां
ताराभिर्दीप्यमानं दिशि विदिशि दशग्रीवमुद्ग्रीवयन्तः।
एते निःशेषसेतुग्रथनसमधिकैः शस्त्रिणः शैलपादै-
रुद्दामानः कपीन्द्रा रजनिचरपुरीमुत्तरेण प्लवन्ते॥ ३८॥

रत्नचूडः—(सविषादम्।) हन्त महद्विषममिव पश्यामि। यदमी निष्कृपकृपाणपात्यमानप्रतिभटविकटोरःकपाटकण्टकितकपोलभित्तयः[1] संतानपातिनीभिरनीकरुधिरधाराभिरतिप्रवृद्धवीरपाणगोष्ठीमहोत्सवाः[2] समन्तादभिद्रवन्ति यातुधानाः प्लवंगमयूथपतीन्[3]।

हेमाङ्गदः—(सहर्षम्।) सखे, कृतं विषादेन। यदेष

दशमुखशरपीडितापयानोद्यमपरिपुच्छयमानवानराणि।
सरभसमभिसान्त्वयन्बलानि द्विषमभियोधयति प्लवंगराजः॥ ३९॥

---

भिर्बहुतरैः। कदर्थयितुं पीडयितुम्। दृप्यदिति। एते कपीन्द्रा रजनिचरपुरीं लङ्कामुत्तरेण प्लवन्ते गच्छन्ति। शैलानां पर्वतानां पादैः प्रत्यन्तपर्वतैः शस्त्रिणः शस्त्रयुक्ताः। अत एवोद्दामानः प्रबला दिशि विदिशि दशग्रीवमुद्ग्रीवयन्तः। उद्गता चासौ ग्रीवा उद्ग्रीवा तया पश्यन्तः। 'कर्तृकरणाद्धात्वर्थे' इति णिच्। यद्वा उद्ग्रीवं कुर्वन्ति। कीदृशम्। दृप्यन्तो ये दिक्पालदन्तावला दिग्दन्तिनस्तेषां प्रचुरमदानामवग्रहे दृष्टिप्रतिबन्धे उग्राभिरक्ष्णां ताराभिर्गोलकैर्दीप्यमानम्। ग्रथनं निर्माणम्। समधिकमुद्वृत्तम्। उत्तरेणेति अव्ययोऽयम्। 'एनबन्यतरस्यामदूरे पञ्चम्याः' इत्येनप्। रजनिचरपुरीमिति 'एनपा द्वितीया' इति द्वितीया। 'पादाः प्रत्यन्तपर्वताः' इत्यमरः। विषमतुल्यमन्यादृशम्। कृपाणः खड्गः। प्रतिभटः शत्रुयोधः। कण्टकितो रोमाञ्चितः। संतानपातिनीभिरनवच्छेदपतनशीलाभिः अनीकं सैन्यम्। 'युद्धे यत्क्रियते पानं वीरपाणं तदुच्यते' इति हारावली। अभिद्रवन्त्यभिमुखं धावन्ति। कृतं निष्फलम्। 'कृतं क्लीबं तु निष्फले' इत्यमरः। अपयानं पलायनम्। परिपुच्छयमानः पुच्छं पर्यस्यन्। इतस्ततो नयन्नित्यर्थः। 'पुच्छभाण्डचीवराण्णिङ्'। अभिसान्त्वयन्प्रियवचनेनोत्साहयन्। अभियोधयत्यभिमुखं संप्रहारयति। प्लवंगराजः सुग्रीवः। अहहेत्याश्चर्ये। प्लवगाधिपेन वान-

---

1. 'प्रतिभटोरः'; 'प्रतिभटविकटोरः'. 2. 'संतत'. 3. 'प्रधानयूथपतीन्'.

**रत्नचूडः**—(दृष्ट्वा सखेदहासाद्भुतम् ।) अहह,

अस्त्राणि प्लवगाधिपेन विहिताः पौलस्त्यवक्षःस्थली-
संघट्टानलदत्तदावविपदः सीदन्ति भूमीरुहाः ।
उत्पाट्य प्रहितश्च शैलशिखरो लङ्केन्द्रहस्तावली-
निष्पिष्टो निजकुञ्जनिर्झरजलैर्जम्बालपिण्डायते ॥ ४० ॥

**हेमाङ्गदः**—(विहस्य ।) सखे दशकंधरमधिकृत्य न किंचिदेतत् ।

तथैतेनोद्धृत्य स्फटिकशिखरी सोऽपि विदधे
समन्तादामूलत्रुटितवसुधावन्धविधुरः ।
अमुं येनाद्यापि त्रिपुरहरनृत्यव्यतिकरः
पुरस्तादन्येषामपि शिखरिणामुल्ललयति ॥ ४१ ॥

किं च तर्कयामि ।

शस्त्रीकृतस्तरुवरो हरिपुंगवेन लङ्केन्द्रवक्षसि मृणालमृदुः पपात ।
तत्रस्थितैस्तु कुसुमैः कुसुमेषुरेनं सीतावियोगविधुरं दृढमाजघान ॥ ४२ ॥

**रत्नचूडः**—(विहस्य ।) सखे, किमुच्यते महासत्त्ववतामुपरि खल्वसौ रावणः । तथा हि ।

स्वेषूत्कृत्य हुतेषु मूर्धसु जवादग्नेः स्फुटित्वा बहि-
र्व्याकीर्णेष्वलिकेषु दैवलिपिभिर्दृष्टापि रामायणम् ।

रेश्वरेण सुग्रीवेणास्त्राणि विहिता भूमीरुहा वृक्षाः पौलस्त्यवक्षःस्थलीसंघट्टेन जातो योऽनलस्तेन दत्ता दावविपदो वनाग्निविपत्तयो येषु तादृशाः सन्तः सीदन्त्यवसन्ना भवन्ति । निजशब्दोऽत्र शैलवाचकः । जम्बालः कर्दमः । **तथेत्यादि** । एतेन रावणेन सोऽपि स्फटिकशिखरी कैलासस्तथोद्धृत्य समन्तात्सर्वत आमूलं त्रुटितो यो वसुधावन्धस्तेन विधुरो विकलो विदधे यथान्यगिरीणां मध्ये पुरस्तात्प्रथमं हरनर्तनक्रमोऽमुमेव कैलासमुल्ललयति चालयति । यद्वान्यगिरीणां पुरस्तादग्रे हरनृत्यक्रमोऽमुमेव चालयति। आमूलत्रुटितवसुधावन्धविधुरत्वात् । कैलास एवं चलति नान्ये केचन पर्वता इति भावः । हरिपुंगवेन सुग्रीवेण । लङ्केन्द्रो रावणः । तत्रस्थितैर्वृक्षस्थितैः । कुसुमेषुः कामः । एनं रावणम् । विधुरं दुःखितम् । आजघान हन्ति स्म । 'आङो यमहनः' इति न तङ् । अस्वाङ्गकर्मकत्वात् । **स्वेष्विति** । उत्कृत्य छित्त्वा । अग्नेः सका-

१. 'सखेदाद्भुतम्'. २. 'शस्त्राणि'. ३. 'तटी'. ४. 'महासत्वतायां रावणः खल्वयम्'; 'महासत्ववतामुपरि रावणः खल्वसौ'.

चित्तेनास्खलितेन यस्तदधिकं ब्रह्माणमप्रीणय-
त्कस्तस्मै प्रथमाय मानिषु महावीराय वैरायते ॥ ४३ ॥

हेमाङ्गदः—सखे, पश्य पश्य भयानकमद्भुतं च वर्तते ।

विशिखौघविकीर्णगण्डशैले तरुसंचूर्णितशक्तितोमरे च ।
कपिराक्षसराजयोरजस्रं तुमुले भान्ति तलातलिप्रपञ्चाः ॥ ४४ ॥

नूनमिदानीं

श्वासोर्मिप्रतिबन्धतुन्दिलगलप्रच्छिन्नहारावली-
रत्नैरापतयालुभिः कृतफणप्राग्भारभङ्गभ्रमः ।
श्रोत्राभावनिरन्तरालमिलितैः स्तब्धैः शिरोभिर्भुवं
धत्ते वानरवीरविक्रमभराद्भुग्नैर्भुजंगाधिपः ॥ ४५ ॥

(सविषादम् ।) अहह, बाहुयन्त्रेणापीड्य वानरराजं सुग्रीवं किमाह रावणः ।

शाज्जवाद्वेगात्स्फुटित्वा बहिर्व्याकीर्णेषु विस्तृतेष्वलिकेषु ललाटेष्वाधारेषु दैवलिपिभिर्दै-वाक्षरै रामायणं रामेण रावणवधं दृष्ट्वापीत्यन्वयः । अस्खलितेन निर्विकारेण । तदधिकं पूर्वस्मादप्यधिकं यथा स्यादेवम् । अप्रीणयत्प्रीतमकरोत् । प्रथमायाद्यभूताय । मानिष्व-भिमानेषु । वैरायते वैरं करोति । 'शब्दवैर–' इति क्यष् (क्यङ्) । 'वा क्यषः' इति तङ् । तस्मै इति 'क्रुधद्रुह–' इति संप्रदानत्वम् । 'ललाटमलिकं गोधिः' इत्यमरः । 'लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ' इति च । 'रामेण रावणवधो रामायणमिति स्मृतम्' इति त्रिकाण्डशेषः । **विशिखौघेत्यादि** । पद्यपूर्वार्धपदद्वयं कपिराक्षसराज-योरित्यस्य प्रत्येकं यथाक्रमं सप्तम्येकवचनान्तं विशेषणम् । विशिखो बाणः । विकीर्णो विक्षिप्तः । 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः' इत्यमरः । शक्तिरस्त्रभेदः । तोमरः शस्त्रभेदः । तुमुलं संकुलरणः । तलश्चपेटः । तलैश्च तलैश्च प्रहृत्येदं युद्धं प्रवृत्तं तला-तलि । 'तत्र तेनेदमिति सरूपे' इति समासः । 'इच्कर्मव्यतिहारे' इतीच् । 'अन्येषा-मपि दृश्यते' इति दीर्घः । तस्य प्रपञ्चा विस्ताराः । **श्वासोर्मीति** । भुजंगाधिपः सर्पराजो वानरवीरविक्रमभरात्सुग्रीवपराक्रमातिशयाद्भुग्नैर्नम्रैः शिरोभिर्मस्तकैर्भुवं पृ-थिवीं धत्ते । शिरोभिः कीदृशैः । श्रोत्रं कर्णस्तस्य विरहात् । सर्पस्य चक्षुःश्रवस्त्वा-त्कर्णाभावस्ततो निरन्तरालमन्तरालशून्यं मिलितैरत एव स्तब्धैश्च । शेषस्य सहस्रफ-णत्वाद्बहुवचनम् । भुजंगाधिपः कीदृशः । श्वासोर्मिः श्वासपरम्परा तस्याः प्रतिबन्धेन निरोधेन तुन्दिलादुच्छूनाद्गलात्प्रच्छिन्ना त्रुटिता या हारावली तस्या रत्नैः कृतो धृतो वा फणानां यः प्राग्भारो विस्तारः, शिखरं वा, तद्भङ्गस्य भ्रमो येन तादृशः । आप-

१. 'प्रहाराः'. २. 'विक्रमभराभुग्नो'. ३. 'वानरराजम्' इति पुस्तकान्तरे नास्ति. ४. 'दशग्रीवः'.

[1]अस्मद्बाहुवनान्दोलसुलभं फलमाप्नुवन् ।
नियुद्धलाघवक्रान्त शाखामृग सुखी भव ॥ ४६ ॥

रत्नचूडः—(सहर्षम् ।) सखे, करणकौशलमोचितात्मा विपक्षदुर्वचनत्रुट्यमानहृदयो हृदयंगममभिदधाति वानरेन्द्रः ।

विंशत्या युगपत्क्षमैरपि भुजैराकर्षणच्छेदयो-
[2]रच्छिन्नं दशमं शिरः कथयति च्छिन्नानि यानि क्रमात् ।
तान्याराद्धमहेश्वराणि भवतः शीर्षाणि तुल्यं दश-
च्छिन्दानो दशभिर्नखैर्यदि पुनः शाखामृगेन्द्रः सुखी ॥४७॥

अपि च रे रे राक्षस,

दशमुखवधनाट्यसूत्रधारो रघुपतिरस्य च पारिपार्श्वकोऽहम् ।
प्रकरणफलवीजभावकानाममृतभुजां [3]समुपास्महे समाजम् ॥ ४८ ॥

---

तयालुभिः समन्तात्पतनशीलैः । 'स्पृहिगृहि–' इत्यादिना आलुच् । आन्दोल आरोहणम्, कम्पनं वा । 'नियुद्धं बाहुयुद्धे स्यात्' इत्यमरः । करणं शरीरसंकोचादि । विपक्षो रावणः । हृदयंगमं मनोहरम् । **विंशत्येति ।** तव विंशत्या भुजैर्युगपदेकदा क्षमैः समर्थैरप्यच्छिन्नं दशमं शिरः कर्तृ यानि शिरांसि क्रमाच्छिन्नानि कथयति तानि तव दश शीर्षाणि तुल्यमेकदैव दशभिर्नखैश्छिन्दानः शाखामृगेन्द्रः सुग्रीवो यदि सुखी तदा सुखी । तव शिरश्छेदनं विना नाहं सुखीत्यर्थः । इह विंशतिशब्द एकवचनान्त एव तावत्संख्यामाह । भुजशब्दस्तु बहुवचनान्त इति तथैव सामानाधिकरण्यम् । कीदृशानि । आराद्धः सेवितो महेश्वरो यैस्तानि । रे इति नीचसंबोधने । **दशमुखेति ।** दशमुखवध एव नाट्यं नृत्यं तस्य सूचना तद्धारयति । अथ च नाट्ये सूत्रधारो भवत्येव । पारिपार्श्वकः परिपार्श्ववर्ती । अथ च सूत्रधारद्वितीयः । अमृतभुजां देवानां समाजं सभामावां समुपास्महे उपासनाविषयं कुर्वः । कीदृशानाम् । प्रकृष्टं करणमुत्फालस्तस्य फलं मूर्छादि, बीजं दर्पवचनादि, तेषां भावकानामनुभावकानाम् । अथ च नाट्ये प्रकरणं रूपकभेदस्तस्य फलं कार्यं बीजं नाट्यबीजं तद्भावकानां प्रकाशकानाम् । अमृतमिवामृतं सरसं नाट्यं तद्भुजां तदनुभवितॄणाम् । काव्यरसशालिनामिति यावत् । समाजं सूत्रधारपारिपार्श्वकावुपासाते इति ध्वनिः । सूत्रधारलक्षणं प्रागेव लिखितम् । 'सूत्रधारेण सहितः संलापं प्रकरोति यः । सूत्रधारसमो वापि स भवेत्पारिपार्श्वकः ॥' इति भरतः । आत्मशक्त्या कविर्यत्र कथां नायकमेव च । औत्पादिकं प्रकुरुते तद्धि प्रकरणं

---

१. 'अस्मद्बाहु' इत्यादिश्लोकात्पूर्वं पुस्तकान्तरे 'अनुवदति' इत्यधिकमस्ति. २. 'अच्छिन्दन्'. ३. 'समुपास्महे'.

इत्यभिदधानेनैवोत्प्लुत्य निर्दयं शिरसि ताडितो रथध्वजदण्डावलम्बी कथं-चिदाश्वसिति रावणः । (सर्वतोऽवलोक्य सहर्षम् ।) सखे, पश्य पश्य ।

यन्माल्यग्रथनावशेषविकलैः संतानकैर्नाकिनां
भर्त्रे गर्भगमेव दाम निभृतं स्वर्मालिकैर्गुम्फितम् ।
तस्मिन्नद्य दशास्यमूर्धनि नवप्रस्तावनामापदां
पश्यन्तो रभसौघभर्त्सितभियः क्रोशन्ति नः स्यन्दनाः ॥ ४९ ॥

**हेमाङ्गदः**—(सविषादम् ।) अहह, सोऽप्याश्वस्य दशकण्ठेनापि मुष्टिना ताडितो मूर्छितः कपीन्द्रो नीलहनूमद्भ्यामाश्वस्यमानोऽपसार्यते ।

**रत्नचूडः**—सखे, प्रधनस्य हि प्रथमे पर्वणि शतकृत्वो विजयन्ते पराजीयन्ते च वीराः । तत्र को विषादः ।

**हेमाङ्गदः**—(अन्यतोऽवलोक्य ।) सखे, रत्नचूड, दिष्ट्या वर्धसे यदयमनुप्राप्तः

कुशिकसुतसपर्यादृष्टदिव्यास्त्रतन्त्रो
भृगुपतिसहयुध्वा वीरभोगीणबाहुः ।

विदुः ॥' यथा मालतीमाधवम् । **यन्माल्येति** । रभसौघेन हर्षातिशयेन भर्त्सिता तिरस्कृता भीर्भयं येषां तादृशाः सन्तो नोऽस्माकं स्यन्दना रथाः, तात्स्थ्यात्तदारोहा वा, क्रोशन्ति शब्दं कुर्वन्ति । कीदृशाः । तस्मिन्नपि दशास्यमूर्धनि आपदां विपत्तीनां नवप्रस्तावनां नूतनविभावनां पश्यन्तः । यस्य मूर्ध्नि माल्यं माला तद्ग्रथनादवशेषास्त्यक्ताः अत एव विकलाः कीटादिविद्धा ये तैः संतानकैः पुष्पभेदैर्नाकिनां भर्त्रे इन्द्राय गर्भगं केशमध्यगतमेव दाम माला निभृतं गुप्तं यथा स्यादेवं रावणभयात्स्वर्मालिकैर्देवमालाकारैर्गुम्फितं ग्रथितम् । एतादृशस्यापि रावणस्यापदं पश्यतां क्रोशनं युक्तमेव । 'केशमध्ये तु गर्भकम्' इत्यमरः । भर्त्रे इति तादर्थ्ये चतुर्थी । मुष्टिनेति 'मुष्टिर्द्वयोः' इत्यमरात्पुंलिङ्गता । आश्वास्यमानो जलादिनाश्वासं कार्यमाणः । अपसार्यते स्थानान्तरं नीयते । प्रधनं युद्धं तस्य प्रथमपर्व आद्योत्सवः । 'प्रधनं रणनाशयोः' इति विश्वः । शतकृत्वः शतवारान् । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' दिष्ट्येति हर्षाभिव्यञ्जकम् । वर्धसे साभ्युदयोऽसीत्यर्थः । **कुशिकसुतेति** । सपर्या सत्कारः । तन्त्रं शास्त्रम् । भृगुपतिः परशुरामः । तेन सह युद्धा सहयुद्धवान् । 'सहे च' इति क्वनिप् । वीरभोगाय

१. 'इत्यभिधायानेन'. २. 'गर्भकम्'. ३. 'निभृतैः'. ४. 'सोऽपि' इति पुस्तकान्तरे नास्ति. ५. 'हि' इति पुस्तकान्तरे नास्ति. ६. 'महावीराः'.

दिनकरकुलकेतुः कौतुकोत्तानचक्षु-
र्बहुमतरिपुकर्मा कार्मुकी रामभद्रः ॥ ५० ॥

रत्नचूडः—(सहर्षं राममवलोक्य रावणं प्रति ।) राक्षसराज,

वालेनापि विलूनधूर्जटिधनुःस्तम्भेन बाहूष्मभि-
र्येन स्वेदयता मनोहरमृजूचक्रे मुनिर्भार्गवः ।
संप्राप्तो रघुनन्दनः किमपरं तेनाधुना नेष्यते
धन्यो वालिसमानकर्तृकवधश्लाघातिभूमिं भवान् ॥ ५१ ॥

हेमाङ्गदः—(सकौतुकम् ।) सखे, तूष्णीमास्वहे तावत् । शृणुवः किं ब्रवीति रावणः । (कर्णं दत्वा ।) कथमेवमाह । साधु रे क्षत्रियडिम्भ, साधु ।

यत्कन्यामभिलष्यता निमिपतेर्न स्थाणवीयं मया
दोर्लीलातुलितावतारितहरग्राव्णापि रुग्णं धनुः ।
तद्भक्ष्यन्त्यधुना कियन्तमवधिं यावद्भवानित्यमी
देवेन्द्रद्विपदानदुर्दिनभिदो रौद्रार्चिषो मार्गणाः ॥ ५२ ॥

---

योग्यो वीरभोगीणः । 'आत्मन्विश्वजनभोगोत्तरपदात्खः' । 'कुमति च' इति णत्वम् । केतुः पताका चिह्नं वा । 'केतुश्चिह्नपताकयोः' इति विश्वः । उत्तानं विकसितम् । बहुमतं स्तुतं रिपौ कर्म युद्धादिव्यापारो यस्य सः । छलतो रावणं स्तुवन्रामस्तुतिमाह—वालेनापीति । येन रामेण बाहूष्मभिर्बाहुबलैः स्वेदयता स्वेदं कुर्वता मनोहरं यथा स्यादेवं भार्गवो मुनिः ऋजूचक्रे । अवक्रः । सरल इति यावत् । कृतः । अन्यदपि वंशादयनृजु वह्निस्वेदनादृजूक्रियत इति ध्वनिः । वालेनापि न तु समर्थेन विलूनो भग्नो धूर्जटेर्महादेवस्य धनुःस्तम्भो येन तादृशेन । सोऽयं रघुनन्दनः संप्राप्तः । तेन रामेणाधुना संप्रति भवान्रावणो वालिनि वालिविषये समानः कर्ता यस्य स समानकर्तृकवधस्तेन करणेन श्लाघातिभूमिं स्तुतिप्रकर्षं नेष्यते प्रापयिष्यते यतोऽतस्त्वं धन्योऽसीत्यर्थः । तथा च भवदभिभवकर्तारं वालिनं यो हतवान्स त्वामपि हनिष्यतीति तव महती श्लाघेति भावः । यद्वा वालिवधेनैवात्मवधोऽपि त्वया ज्ञातस्तथापि मानवशान्न सीता दत्ता न वा संधिः कृत इति मनस्वितया तवातिश्लाघेति भावः । तूष्णीमास्वहे निर्वचनौ तिष्ठावः । यत्कन्यामिति । निमिर्जनकपूर्वपुरुषः । तत्पतेर्जनकस्य कन्यां सीतामभिलष्यतेच्छता मया यद्धनुर्न रुग्णं न भग्नं तत्र स्थाणवीयमैश्वरं तदिति हेतुः । न त्वशक्तिः । ईश्वरभक्तस्य मम न युक्तस्तद्धनुर्भङ्ग इति भावः । स्वसामर्थ्यं स्मारयति—दोर्लीलया बाहुक्रीडया तुलितोऽनन्तरमवतारितो हरग्रावा कैलासो येन तादृशेनापि । 'ग्रावाणौ शैलपाषाणौ'

---

१. 'रामदेवः'. २. 'रे राक्षसराज'. ३. 'श्लाघ्यातिभूमिम्'. ४. 'आःस्व'.

(सविस्मयम्।) कथमद्यापि तृणीकृतजगत्त्रयः स एवास्य तावानहंकार-ग्रन्थिः।

रत्नचूडः—(सोत्प्रासस्मितम्।) सखे, कथमिदमेव भवन्तं विस्मापयते।
मानाध्मातः स्वां किलोत्कृत्य तावन्मूर्धश्रेणीमेकशेषोत्तमाङ्गः।
स्त्रीमर्धाङ्गे वञ्चयित्वा मुखेन प्रीतः शंभोरेकपादे पपात॥ ५३॥

(ऊर्ध्वमवलोक्य च सवितर्कम्।) भगवतो दिवस्पतेरिव रथो दाशरथिमुपतिष्ठते।

हेमाङ्गदः—(दृष्ट्वा सहर्षम्।) सखे, स एवायं किं न पश्यसि। लोचनमार्गसहस्रचन्द्रकस्तबकितमहेन्द्रकवचहस्तो मातलिः। (क्षणं निर्वर्ण्य विहस्य च।)

विविधमणिमयूखमञ्जरीभिः कृतसुरचापसहस्रसंनिपाते।
अधिसमरमहारयद्विमाने निजमपि कार्मुकमत्र देवराजः॥ ५४॥

(आकाशे कर्णं दत्वा।) किमाह रावणप्रतीहारः—अरेरे पुरुहूतसूत,

---

इत्यमरः। तदधुना कियन्तं कालमवधिं यावत्। अमी मम मार्गणाः। भवानिति द्रक्ष्यन्ति चिराय द्रष्टुं न शक्नुवन्ति। दर्शनावधिस्ते पूर्ण इति भावः। इतिशब्देनाव्ययेनोक्तत्वाद्भवच्छब्दान्न द्वितीया। देवेन्द्रद्विपस्यैरावतस्य यद्दानदुर्दिनं मदजलवृष्टिस्तच्छिदस्तन्नाशकाः। रावणबाणदर्शनादेव ऐरावतस्य मदशोष इति भावः। 'कलम्बमार्गणशराः' इत्यमरः। कथमिदमेव विस्मापयत इति। किं त्वन्यदपीति शेषः। 'नित्यं स्मयतेः' इत्यात्वम्। 'भीस्म्योर्हेतुभये' इति तङ्। अपरविस्मयहेतुमाह—**मानाध्मात इति**। किलेति वार्तायाम्। अयं रावणः स्वां मूर्धश्रेणीं निजां मस्तकपङ्क्तिमुत्कृत्य च्छित्त्वा एकमद्वितीयं शेषमवशेषमुत्तमाङ्गं शिरो यस्य तादृशः सन्नर्धाङ्गे वामार्धे। अर्थान्महादेवस्य। स्त्रीं गौरीं वञ्चयित्वा त्यक्त्वा शंभोरेकपादे पपात। मुखेन प्रीतस्तुष्टः। 'येनाङ्गविकारः' इति तृतीया। मानेनाध्मातः सगर्वः। स्त्रीमिति 'वाम्शसोः' इतीयङो विकल्पात्। दिवस्पतेरिन्द्रस्य। 'विभाषा स्वसृपत्योः' इत्यलुक्। 'षष्ठ्याः पतिपुत्र–' इति सत्वम्। उपतिष्ठते संगतीभवति। संगतिकरणे तङ्। चन्द्रकं रन्ध्रस्तेन स्तबकितो गुच्छीकृतः। कवचः संनाहः। मातलिरिन्द्रसारथिः। 'सूतो मातलिः' इत्यमरः। **विविधेति**। देवराज इन्द्रोऽधिसमरं सङ्ग्रामे निजमपि कार्मुकं धनुरहारयत्प्रास्थापयत्। अत्र हेतुगर्भं विशेषणम्—कृतेति। उत्तमरत्नानां तेजोभिरिन्द्रधनुः क्रियत इति तदेवोक्तम्। संनिपातः समागमः। अधिसमरमिति 'अव्ययं विभक्ति–' इत्यादिना विभक्त्यर्थेऽव्ययीभावः। 'देवयानं विमानोऽस्त्री' इत्यमरः। पुरुहूतसूत इन्द्रसारथे। काण्डः प्रका-

---

१. 'सखे' इति पुस्तकान्तरे नास्ति. २. 'महेन्द्र' ३. 'अरेरे' इत्यस्मात्पूर्वं पुस्तकान्तरे 'अनुवदति' इत्यधिकमस्ति.

दर्पोऽयं भवतः सुरासुरचमूदोःकाण्डकण्डूविष-
ज्वालाजाङ्गलिकेन जङ्गलभुजां पत्यापि न त्याजितः ।
येनैन्द्रे रथवर्मणी रघुशिशोरस्योपनीते त्वया
राजद्विष्टमिदं विधाय स कथं शक्तोऽपि वर्तिष्यते ॥ ५५ ॥

रत्नचूडः—(श्रुतिमभिनीय ।) किमाह रामः—सत्यमिदं[1] भोः । यच्छीलः स्वामी[2] तच्छीलास्तस्य प्रकृतयः । यदेवमपि[3] स्वामिनो मूलोच्छेदिना[4] दुर्नयेन विकत्थन्ते ।

हेमाङ्गदः—(आकाशे कर्णं दत्त्वा ।) किमाह रावणः—अरे तापसवटो,
क्रोधेन ज्वलिता[5] मुहूर्तमनु[6] च स्वैरेव निर्वापिताः
क्लीबैरश्रुमहोर्मिभिर्मखभुजां पत्युः सहस्रं दृशः ।
यैर्दृष्टा भुवनत्रयीविजयिभिः सर्वंकषाः सन्त्यमी
ते संप्रत्यपि मे नयापनययोर्निर्वाहमूलं भुजाः ॥ ५६ ॥

रत्नचूडः—(कर्णं दत्त्वा विहस्य ।) किमाह रामः—
छित्त्वा मूर्ध्नः किमिति स वृतो धूर्जटिर्यद्यमीषां
दोःस्तम्भानां त्रिभुवनजयश्रीरियं वास्तवी ते ।

---

ण्डः । कण्डूस्तेजस्तदेव विषं तस्य ज्वालाया जाङ्गलिकेन विषवैद्येन । जङ्गलं मांसम् । तद्भुञ्जते जङ्गलभुजो राक्षसाः । 'क्विप् च' इति क्विप् । तेषां पत्या रावणेन येन हेतुना ऐन्द्रे इन्द्रसंवन्धिनी रथश्च वर्म च रथवर्मणी । वर्म संनाहः । उपनीते उपढौकिते । राज्ञो द्विष्टं द्वेषः । भावे क्तः । कथं वर्तिष्यते कथं स्थास्यति । रावणादिति शेषः । तस्यापि नाशहेतोरुपस्थितिरिति भावः । जाङ्गलिक इति । 'जाङ्गली विषविद्यायाम्' इति मेदिनीकरः । जाङ्गलीमधीते वेत्ति वा जाङ्गलिकः । अध्यात्मादित्वाट्ठञ् । 'जङ्गलं निर्जलस्थाने त्रिलिङ्गयां पिशितेऽस्त्रियाम्' इति मेदिनीकरः । प्रकृतयः परिजनाः । विकत्थन्ते श्लाघन्ते । आत्मानं प्रशंसन्ति वा । विकत्थनमात्मप्रशंसेति शाब्दिकाः । **क्रोधनेति ।** अनु पश्चान्निर्वापिता निस्तेजीकृताः । क्लीबैर्विक्रमशून्यैः । यैर्भुजैरिन्द्रस्य सहस्रं दृशो दृष्टा इति संवन्धः । अपनयो दुर्नयः । नयानयसमर्था इत्यर्थः । मूलशब्दस्याजहल्लिङ्गतया भुजा इत्यनेन विशेषणविशेष्यभावः । मूलत्वं च सर्वेषां भुजानां साधारण्येनेति सामान्यविवक्षायामेकवचनता मूलमिति । ते संप्रतीति । तथा च तैरेव त्वामपि हनिष्यामीति भावः । **छित्त्वेति** । मूर्ध्नो मस्तकानि छित्त्वा वृतः प्रार्थितः । सोल्लुण्ठ-

---

१. 'सत्यम्' इत्यस्मात्पूर्वं पुस्तकान्तरे 'अनुवदति' इत्यधिकमस्ति. एवमग्रेऽपि. २. 'प्रभुः'. ३. 'तदेवम्.' ४. 'मूलोच्छेदेन'. ५. 'ज्वलता'. ६. 'अपि च.'

मूर्धानो वा न खलु भवतो दुर्लभाः संभवेयु-
र्यद्देवस्य त्वमसि जगतां शिल्पिनोऽपि प्रपौत्रः ॥ ५७ ॥

यत्पुनर्ब्रवीषि—'संप्रत्यपि ते भुजाः सन्ति' इति तदधुनैव ज्ञास्यन्ते ।

**हेमाङ्गदः**—( कर्णं दत्त्वा । ) किमाह रावणः—अरेरे राजन्यडिम्भ, भवतः पुराणपितामहेन बहु तावदनरण्येनैव ज्ञातम् । इदानीं भवानपि ज्ञास्यति ।

**रत्नचूडः**—( कर्णं दत्त्वा विहस्य[1] । ) किमाह रामः—अरेरे[2] राक्षसीपुत्र,

न दूये नः पूर्वं नृपतिमनरण्यं यदवधी-
र्जयो वा मृत्युर्वा युधि भुजभृतां कः परिभवः ।
जितं तु त्वां कारागृहविनिहितं हैहयपतेः
पुलस्त्यो यद्भिक्षामकृत कृपणस्तद्व्यथयति ॥ ५८ ॥

**हेमाङ्गदः**—( कर्णं दत्त्वा । ) किमाह रावणः—आः क्षत्रियबटो वाचाट, कथमपूर्वशिल्पी रजनिचरेन्द्रचरितचन्द्रेऽपि लक्ष्म लिखसि । तदयं न भवसि । ( ससंभ्रममवलोक्य । ) कथमुपक्रान्तमेव शरसहस्रदुर्दिनं मन्दोदरीदयितेन ।

---

माह—मूर्धानो वेत्यादि । न खलुशब्दोऽत्यन्तनिषेधे । नैवेत्यर्थः । जगतां शिल्पिनो ब्रह्मणः प्रपौत्रः प्रणप्ता । महादेवप्रीत्यर्थं [वा] भवता शिरांसि न च्छिद्यन्ते किं तु सुलभान्येवेति कृत्वा छिद्यन्त इति सोल्लुण्ठमुक्तिः । राजन्यडिम्भ क्षत्रियबालक । पुराणस्य पूर्वपुरुषस्य पितामहेन । अतिचिरपूर्वपुरुषत्वात् । अनरण्यनामा राजर्षी रामस्य पूर्वपुरुषः । स च रावणेन जितः । **न दूय इति** । न दूये न परितपामि । 'दूङ् परितापे' दिवादिः । नोऽस्माकं पूर्वं पूर्वपुरुषमनरण्यनामानं यत्त्वमवधीर्हतवानसि । कः परिभवः, अपि तु न कोऽपि । कारागारं बन्धनगृहम् । 'स्यात्कारा बन्धनागारबन्धयोः' इति मेदिनीकरः । यद्वा कारारूपं गृहं कारागृहम् । उक्तिपोषोऽयमलंकारः । हैहयपतेः सहस्रार्जुनस्य भिक्षामकृत भिक्षां प्रार्थितवान् । करोतिः प्रार्थनार्थः । धातोरनेकार्थत्वात् । कृपणो दीनः, निन्दितो वा । 'कृपणः सन्ननिन्दितयोरपि' इति विश्वः । तद्व्यथयति तदतिपीडां जनयतीत्युपहासः । 'वाचाटो बहुगर्ह्यवाक्' इत्यमरः । लक्ष्म कलङ्कम् । अन्यस्मिन्नपि चन्द्रे लक्ष्म भवतीति ध्वनिः । तदयं न भवसि । तत्त्वं न भविष्यसीत्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यति लट् । दुर्दिनमन्धकारो वृष्टिर्वा । मन्दोदरी-

---

१. 'विहस्य' इति पुस्तकान्तरे नास्ति. २. 'रे रे'.

**रत्नचूडः**—कथं मैथिलीवल्लभेनापि [1]प्रत्युपक्रान्तमेव। (विहस्य।)

पतन्ति [2]रामभद्रेण खण्डिता रावणेषवः।
पूर्वार्धैः फलिभिर्वेगात्पश्चार्धैः [3]पक्षिभिश्चिरात्॥ ५९॥

किं च।

अक्षेषु केतुदण्डे च सारथौ च हयेषु च।
[4]खेलन्ति राक्षसेन्द्रस्य स्यन्दने रामपत्रिणः॥ ६०॥

**हेमाङ्गदः**—(सभयम्।) अहह।

अन्धकारीकृतव्योमा बाणवर्षेण रावणः।
रामारूढं तिरोधत्ते शताङ्गं शातमन्यवम्॥ ६१॥

(चिरं दृष्ट्वा सविस्मयम्।) सखे,

नानाविधानि शस्त्राणि शस्त्रैर्नानाविधैरपि।
इमौ हि प्रतिकुर्वाते न कश्चिदतिरिच्यते॥ ६२॥

**रत्नचूडः**—एवमेतत्।

यद्रावणो बहुभिरेष भुजैः करोति
तद्राघवः प्रतिकरोति भुजद्वयेन।
कर्म द्वयोर्यदपि तुल्यफलं तथापि
रक्षोभटादृशगुणं नरवीरशिल्पम्॥ ६३॥

**हेमाङ्गदः**—([5]विहस्य।) सखे,

विंशत्यापि भुजैरेष द्वौ भुजावभियोधयन्।
अदूषितद्वन्द्वयुद्धमर्यादो दशकंधरः॥ ६४॥

---

दयितेन रावणेन। प्रत्युपक्रान्तमेवेत्यत्र शरसहस्रदुर्दिनमित्यनुकर्षणीयम्। इषुः काण्डः। फलिभिर्लोहफलयुक्तैः। गौरवेण वेगात्पतनमिति भावः। पक्षिभिः पुङ्खयुक्तैः। पक्षैर्वातावरुद्धगतित्वेन चिरात्पतनमिति भावः। अक्षेषु चक्रेषु। 'चक्रे कर्षे पुमानक्षः' इति मेदिनीकरः। यद्वाक्षेषु रथकीलकेषु। केतुदण्डे पताकादण्डे। खेलन्ति क्रीडन्ति। स्यन्दनो रथः। पत्रिणः काण्डाः। तिरोधत्ते आच्छादयति। शताङ्गं रथम्। 'शताङ्गः स्यन्दनो रथः' इत्यमरः। शतमन्युरिन्द्रः। 'तस्येदम्' इत्यण्। हिरवधारणे। इमावेवेत्यर्थः। प्रतिकुर्वाते प्रतीकारविषयाणि कुरुतः। द्वयो रामरावणयोः। कर्म क्रिया। व्यापार इति यावत्। यदपि। यद्यपीत्यर्थः। 'वक्रः पन्था यदपि' इतिवत्। रक्षोभटो रावणः।

---

१. 'प्रक्रान्तमेव'. २. 'रामचन्द्रेण'. ३. 'पत्रिभिः'. ४. 'पतन्ति'. ५. 'विहस्य' इति पुस्तकान्तरे नास्ति.

(सखेदभयं च।) कथमयं रावणो माहेन्द्रस्यन्दनात्

तस्यारिबलभीमस्य ध्वजदण्डस्य लाञ्छनम्।
दर्पदीप्तः क्षुरप्रेण मायूरं पिच्छमच्छिनत् ॥ ६५ ॥

**रत्नचूडः**—(सहर्षम्।) सखे, पश्य पश्य कुलिशकेतुकेतनविमाननाविलक्षक्रुद्धेन

दिक्पालद्विपदर्पदानलहरीसौरभ्यगर्भानिलैः
पक्षैरेव समस्तराक्षसकथाकल्पान्तकर्णेजपाः।
दीयन्ते रघुपुंगवेन कतिचित्पौलस्त्यमौलिष्वमी
पौलोमीनयनाम्बुसीकरकणावग्राहिणो मार्गणाः ॥ ६६ ॥

**हेमाङ्गदः**—(सखेदाद्भुतम्।) कथं किरीटपरम्परापरिभवममृष्यमाणेन वाणवर्षाद्वैतमातन्वता राक्षसराजेन

विदेहकन्याकुचकुम्भकोटिकठोरतासाक्षिणि सायकोऽयम्।
रामस्य जन्मान्तरमेलकारश्रीकौस्तुभे वक्षसि हा निखातः ॥ ६७ ॥

(सम्यगवलोक्य।) सखे,

एकेनैव निवातकङ्कटभिदा लङ्कापतेः पत्रिणा
विद्धोऽयं यदि नाम कोऽपि जगतामुल्लाघनो राघवः।

---

स च विंशतिबाहुः। तस्माद्दशगुणं रामशिल्पं रामस्य युद्धकौशलम्। बाहुद्वयेन बाहुविंशतेः प्रतीकारादिति भावः। द्वन्द्वयुद्धमेकतुलायुद्धम्। **तस्येति**। मायूरं पिच्छं लाञ्छनं चिह्नमच्छिनत्। दीप्तो दीपनशीलः। क्षुरप्रेण काण्डभेदेन। 'पिच्छबर्हे नपुंसके' इत्यमरः। कुलिशकेतुरिन्द्रस्तस्य केतनं चिह्नम्। विमानना छेदनम्। विलक्षो लज्जितः। **दिक्पालेति**। दिक्पालद्विपानां दिग्गजानां दर्पेण दानलहरी मदराजिस्तस्याः सौरभ्यं सौगन्ध्यं गर्भे यस्य सोऽनिलो येषां तैः पक्षैः पुङ्खैः राक्षसकथायाः कल्पान्तस्य महाविनाशस्य कर्णेजपाः सूचकाः। 'स्तम्बकर्णयो रमिजपोः' इत्यच्। 'कर्णेजपः सूचकः स्यात्' इत्यमरः। दीयन्ते पात्यन्ते। मौलिषु मस्तकेषु, किरीटेषु वा। 'मौलिर्मूर्धकिरीटयोः' इति धरणिः। पौलोमी शची। अवग्राहिणो वृष्टिप्रतिबन्धकाः। मार्गणा बाणाः। अमृष्यमाणेनाक्षममाणेन। **विदेहेति**। कोटिरग्रम्। कठोरता कठिनत्वं तस्याः साक्षिणि ज्ञातरि। जन्मान्तरे विष्णोर्मूर्त्यन्तरे मेलकारौ सहचरौ श्रीकौस्तुभौ यत्र तस्मिन्। मेलनं मेलः। भावे घञ्। तं करोति मेलकारः। कर्मण्यण्। 'मेलकारः सहचरः' इति धरणिः। 'कौस्तुभो मणिः' इत्यमरः। हा कष्टम्। **एकेनैव**-

---

१.'अरिभयभीमस्य'.,'अरिभयभूतस्य'.२.'अवमानवैलक्ष्य–'.,'अवमाननाविलक्ष–'.

चक्षुर्वर्त्मसहस्रनिःसरदसृग्धारौघझांकारिणा
माहेन्द्रेण तु वर्मणा विवृणुते वीरः सहस्रं व्रणान् ॥ ६८ ॥

**रत्नचूडः**—( सहर्षम् । ) राघवेणापि

सीतास्तनस्तबककुङ्कुमपङ्कलोपे[2]-
संकल्पपातकिनि वक्षसि रावणस्य ।
न्यस्तः शरो विबुधकुञ्जर[3]दन्तघात[4]-
रूढव्रणार्बुदचतुष्टयमध्यवर्ती ॥ ६९ ॥

**हेमाङ्गदः**—( कर्णं दत्त्वा सविस्मयम् । ) एकेन[5] सव्यपाणिना विशिखमुत्खाय किमाह रावणः—साधु रे मनुष्यडिम्भ, साधु ।

त्रैविक्रमः सकलदानवजीवितव्य-
विद्यासमाप्तिलिपिरेष सुदर्शनो मे ।
यस्मिन्निपत्य हृदये दलितारजाल-
ज्योतिस्तुषारमयमाभरणं बभूव ॥ ७० ॥

---

ति । निवातं दृढं शस्त्राभेद्यम् । कङ्कटः संनाहः । 'उरश्छदः कङ्कटकः' इत्यमरः । पत्रिणा बाणेन । नाम प्राकाश्ये, संभावनायां वा । इदं संभाव्यत इत्यर्थः । जगतां कोऽप्यनिर्वचनीय उल्लाघनो नैरुज्यकारी । रावणनाशरूपभेषजकरणादिति भावः । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । 'उल्लाघो निर्गतो गदात्' इत्यमरः । असृग्धारौघो रुधिरधारासमूहः । झांकारोऽव्यक्तशब्दः । माहेन्द्रेण महेन्द्रसंबन्धिना । वर्मणा संनाहेन । विवृणुते प्रकाशयति । एकबाणपातेऽपि संनाहस्य चक्षुर्वर्त्मसहस्रेण रुधिरनिर्गमाद्व्रणसहस्रविवरणमिति भावः । **सीतास्तनेति** । लोपः खण्डनं तत्र संकल्प इच्छा तेनैव पातकयुक्ते । विबुधकुञ्जरस्यैरावतस्य दन्तघातेन रूढमुपचितं यद्व्रणस्यार्बुदचतुष्टयम्, अर्बुदमिवार्बुदं रूढव्रणोच्चस्थानं तस्य मध्यवर्ती । ऐरावतस्य चतुर्दन्तत्वात्तद्दन्ताघातेन रावणहृदयेऽर्बुदचतुष्टयं युज्यत एव । सव्यपाणिना दक्षिणहस्तेन । विशिखं बाणम् । उत्खायोत्पाट्य । **त्रैविक्रम इति** । एष मम त्रैविक्रमः । त्रिविक्रमो विष्णुस्तत्संबन्धी सुदर्शनश्चक्रविशेषोऽस्ति । सकलदानवानां जीवितव्यं जीवनं तदेव विद्या तस्याः समाप्तिलिपिः समाप्त इति यस्याः प्रसिद्धिस्तद्वत् । दानवसमूहप्राणनाशक इत्यर्थः । यस्मिन्सुदर्शने निपत्य हृदये दलितं खण्डितं यदारजालं चक्रप्रान्तसमूहस्तस्य ज्योतिः कर्तृ

---

१. 'सात्कारिणा'. २. 'लेप—'. ३. 'वारण—'. ४. 'दन्तपात—'. ५. 'एकेनापि सव्येन पाणिना'; 'एकेन सव्येन'; 'एकेन सव्यपाणिना तमुत्खाय'.

तस्मिन्नपि रुधिरदर्शनं कुर्वाणेन भवता दर्शितेयं सुरासुरवीरातिशायिनी[1] हस्तवत्ता ।

**रत्नचूडः**—अहह, विपक्षगिरामुद्गारेण सर्वग्रन्थिगुरुणा दूरं दीप्यमानस्य[2]

सुविनिहितचन्द्रहासव्रणकिणवलयोपहसितहारेषु ।
रामस्य मार्गणगणाः पतन्ति दशकण्ठकण्ठेषु ॥ ७१ ॥

**हेमाङ्गदः**—(सचमत्कारम् ।) सखे, पश्य पश्य—अनुरूपवीरसंवादप्रमोदभरद्विगुणितावष्टम्भसंक्षोभितभुवनत्रयस्य[3] निरन्तरप्रहीयमाणबाणपञ्जरमध्यवर्तिना[4] रामभद्रेण क्रीडाशकुन्तकौतुकं पूर्यते[5] राक्षसराजस्य । नूनमिदानीम्

उदञ्चन्न्यञ्चद्भूविवृतनिभृतानामनुफणं
मणीनां विद्युद्भिः क्षणमुषितपातालतिमिरः ।
भुजक्रीडावल्गद्दशमुखपदन्यासगरिम-
प्रगल्भैर्निःश्वासैरजनि भुजगानामधिपतिः ॥ ७२ ॥

---

तुषारमयमाभरणं भूषणं बभूव । अतिशायिनी जयनशीला । हस्तवत्ता प्रशस्तहस्तयोगित्वम् । प्रशंसायां मतुप् । 'चक्रं सुदर्शनः' इत्यमरः । विपक्षो रावणः । उद्गारेण भाषणेन । ग्रन्थिर्ग्रन्थना । दूरमत्यर्थम् । **सुविनिहितेति** । दशकण्ठकण्ठेषु कीदृशेषु । शिवाराधनावसरे शिरश्छेदार्थं सुष्ठु यथा स्यादेवं विनिहितो धृतो यश्चन्द्रहासो रावणखड्गस्तस्य व्रणकिणवलयेन क्षतचिह्नवेष्टनेनोपहसितो निन्दितो हारो यत्र तादृशेषु । चन्द्रहासव्रणप्ररोहणाद्धारकृत्यं चन्द्रहासव्रणरेखयैव कृतमिति भावः । संवादो मिलनम् । सादृश्यमिति यावत् । अवष्टम्भो गर्वः । प्रहीयमाणः प्रक्षिप्यमाणः । वेष्टनाद्बाण एव पञ्जरम् । शकुन्तः पक्षी । अन्योऽपि क्रीडापक्षी पञ्जरमध्ये तिष्ठतीति ध्वनिः । **उदञ्चदित्यादि** । भुजगानामधिपतिः सर्पराजो वासुकिः । अनुफणं फणां फणामनु । वीप्सायामव्ययीभावः । मणीनां विद्युद्भिरिव विद्युद्भिर्दीप्तिभिः क्षणं मुषितं दूरीकृतं पातालतिमिरं येन तादृशोऽजनि जातः । निःश्वासैर्लक्षितः । कीदृशैः । भुजक्रीडया वल्गंश्चलन्यो दशमुखस्तस्य पदन्यासगरिम्णा चरणार्पणगुरुत्वेन पीडनात्प्रगल्भैरुपचितैः । मणीनां कीदृशानाम् । उदञ्चन्त्युन्नता भवन्ती न्यञ्चन्ती निम्ना भवन्ती या भूस्तया विवृतानां

---

१. 'वाहिनी'. २. 'देदीप्यमानस्य'; 'कम्पमानस्य'. ३. 'प्रमोदद्विगुणित—'. ४. 'पञ्जरवर्तिना'. ५. 'आपूर्यते'.

**रत्नचूडः**—(सभयमवलोक्य ।) सखे, एवमेतत् ।

रक्षोविक्षोभवेगोच्छलितजलनिधिव्यक्तमातङ्गचक्र-
क्रुध्यद्दिङ्नागमुक्तोद्धरणगुरुभरामद्य नागाधिराजः ।
अङ्गैरङ्गेषु मग्नैरविरलवलिना वामनेनातिपीना
देहेनापह्नुवानः फणफलकपरीणाहमुर्वीं बिभर्ति ॥ ७३ ॥

(ऊर्ध्वमवलोक्य ।) कथमितस्ततो वैमानिकैरपक्रम्यते गगनतलात् ।

**हेमाङ्गदः**—(सचमत्कारम् ।) अहो त्रिभुवनभयंकरमायोधनमुपक्रान्तं महावीराभ्याम् । तथा हि ।

ध्यायत्ययं गाधिसुतादधीतान्दिव्यास्त्रमन्त्रान्मनुवंशवीरः ।
ब्रह्मोपदिष्टामिह शस्त्रविद्यामसौ तदाकाङ्क्षति राक्षसेन्द्रः ॥ ७४ ॥

तदावामप्यपसरावः । (इत्यपसृत्यासाते ।)

**हेमाङ्गदः**—(समन्तादवलोक्य ।) सखे, यथा भुवनसंक्षोभस्तथा तर्कयामि—तामिस्रं भानवीयेन, भानवीयं राहवीयेण, राहवीयं वैष्णवीयेन, वैष्णवीयं पौष्पकेतवेन, पौष्पकेतवं च पाशुपतेनास्त्रमस्त्रेण प्रतिकुर्वाणयोः पुलस्त्यककुत्स्थकुलैकवीरयोस्तुमुलमायोधनं वर्तते ।

---

विकासितानां निभृतानां संकुचितानाम् । अजनीति कर्तरि च्विण् । रक्ष इति । नागाधिराजो वासुकिः । रक्षसां विक्षोभश्चलनं संक्षोभो वा तज्जन्यवेगेनोच्छलितस्तुच्छीभूतो यो जलनिधिस्तेन हेतुना व्यक्तो यो मातङ्गचक्रो जलहस्तिसमूहस्तस्मै विपक्षतया क्रुध्यन्तो ये दिङ्नागा दिग्गजास्तैर्मुक्तं त्यक्तमुद्धरणमुत्कृष्टधारणं तेन गुरुर्भरो यस्यास्तामुर्वीं पृथिवीं बिभर्ति धारयति । दिङ्नागैः पृथ्वी ध्रियत इति पुराणम् । 'मातङ्गनक्र—' इति पाठे मातङ्गो जलहस्ती, नक्रो जलजन्तुः । यद्वा मातङ्गनक्रो जलहस्ती । पृथ्वीधारणभारेणातिपीनातिस्थूलेन । अत एवाविरलवलिना निरन्तरमांससंकोचरूपत्रिवलीयुक्तेन वामनेन खर्वेण देहेन फणफलकपरीणाहं फणसमूहविशालतामपह्नुवानः संकोचयन् । अङ्गेषु मग्नैरङ्गैर्लक्षितश्च । 'पीवा च स्थूलपीवरे' इत्यमरः । वैमानिकैर्विमानचारिभिः । विमान आकाशस्थः । 'तेन चरति' इति ठक् । 'व्योमयानं विमानोऽस्त्री' इत्यमरः । अपक्रम्यते गम्यते । पलाय्यत इति यावत् । ध्यायति चिन्तयति । गाधिसुतात्कौशिकात् । तामिस्रमित्यादौ 'सास्य देवता' इत्यण् । पौष्पकेतवेनेति कामस्य विष्णुसुतत्वेन स्नेहातिशयाद्वैष्णवीयमस्त्रं पौष्पकेतवेऽविरुद्धमिति पुष्पकेतवीयोपादानमिति

---

१. 'गुरुतराम्'. २. 'आक्रम्यते गगनतलम्'; 'अपाक्रम्यते'. ३. 'भङ्गभयंकरमुपक्रान्तम्'. ४. 'चास्त्रविद्याम्'. ५. 'तदाभ्यस्यति'. ६. 'तदावामुपसृत्यास्वहे'. ७. 'यथायम्'. ८. 'च' इति पुस्तकान्तरे नास्ति. ९. 'पौलस्त्यकाकुत्स्थकुलजयोः'.

**रत्नचूडः**—सखे[1], कृतिप्रतिकृतीनामविशेषेऽपि जेतव्यमिति रामस्य मर्तव्यमिति रावणस्य निर्णयनिर्भरोऽयं सर्वास्त्रमोक्षः । विशिखमुखोपस्थायिनीनां च पुनर्देवतानाम[2]बलीयानाटोपः कल्प्यते[3] । तथा हि ।

यद्दैवतं क्षिपति पत्रिषु राक्षसेन्द्रः
स्नेहेन तद्रघुपतेर्मृदु संनिधत्ते ।
यां देवतामुपदधाति च रामभद्र-
स्त्रासादसौ दशमुखस्य शनैरुपैति ॥ ७५ ॥

( नेपथ्ये ।)

यद्यत्कृत्तं दशमुखशिरस्तस्य तस्यैव[4] कान्तौ
संक्रामन्त्यामतिशयवती शेषवक्त्रेषु लक्ष्मीः ।
यो यः कृत्तो दशमुखभुजस्तस्य तस्यैव वीर्यं
लब्ध्वा दृप्यन्त्यधिकमधिकं बाहवः शिष्यमाणाः ॥ ७६ ॥

( नेपथ्ये[5] कलकलः ।)

**उभौ**—( सहर्षरोमाञ्चमाकर्ण्य ।) अये, शब्दोपलम्भसंवर्तकेन[6] कर्मणा निर्मितानि त्रिभुवनकोषस्य कोऽयमिन्द्रियाणि प्रीणयति[7] ।

( पुनर्नेपथ्ये कलकलः ।)

**उभौ**—( सभयाद्भुतम् ।) अये, कथमयं कपटकण्ठीरववैकुण्ठकण्ठकठोरकोलाहलकाहलो महानिर्घोषः प्रजाकोष[8]भङ्गमपर्वणि प्रक्रमते[9] । नूनं

---

भावः । तुमुलं महत्, अतिसंकुलं वा । आयोधनं सङ्ग्रामः । प्रतिकृतिः प्रतीकारः । मोक्षस्त्यागः । विशिखो बाणः । आटोपो गर्वो रोषो वा । **यद्दैवतमिति** । यां देवतां पत्रिषु बाणेषु क्षिपति तद्रघुपतेः स्नेहेन मृदु यथा स्यादेवं संनिधत्ते संनिहिता भवति । देवांशत्वाद्रामस्य । 'वृन्दारका दैवतानि' इत्यमरः । असौ देवता दशमुखस्य त्रासाच्छनैर्मन्दमुपैति दशमुखसंनिधिं गच्छति । **यदित्यादि** । कृत्तं छिन्नम् । यानि शिरांसि च्छिन्नानि तेषां कान्तिरवस्थितेषु मुखेषु संक्रामतीति भावः । लक्ष्मीः शोभा । छिन्नानां बाहूनां बलमच्छिन्नेषु बाहुषु संक्रामति । शिष्यमाणा अवशिष्टाः । शब्दोपलम्भसंवर्तकेन शब्दज्ञानजनकेन कर्मणा अदृष्टेन । इन्द्रियाणि श्रोत्रेन्द्रियाणि । तथा चातिको-

---

१. 'सखे' इति पुस्तकान्तरे नास्ति. २. 'देवतानां पुनः'. ३. 'कथयति'. ४. 'तस्येव'. ५. 'नेपथ्ये कलकलः' इति पुस्तकान्तरे नास्ति. ६. 'संवर्तकैककर्मणा'. ७. 'कोऽयमिन्द्रियाणि प्रीणयति त्रिभुवनस्य'. ८. 'ब्रह्माण्डकोश–'. ९. 'क्रमते'; 'अद्यापि'.

चेदानीं कालकूटोपदिग्धैरिव कण्ठध्वनिभिरेव मूर्छयतो भुवनानि भैरवस्य स्मरति सभयमद्य परमेष्ठी ।

(पुनर्नेपथ्ये ।)

दिव्यास्त्रैर्भूर्भुवःस्वस्त्रितयडमरणोड्डामरैर्योधयित्वा
लूनोत्क्षिप्तैः शिरोभिर्दशभिरभिनभो दर्शितैकादशार्कः ।
काकुत्स्थेनावकीर्णो निजविशिखशिखायोगपीठोपहूत-
ब्रह्मास्त्रेणाधिशेते रजनिचरपतेर्वीरशय्यां कबन्धः ॥ ७७ ॥

**उभौ**—(श्रुत्वा सहर्षसंभ्रममूर्ध्वमवलोक्य सविस्मयमन्योन्यम् ।) पश्य पश्य प्रलयकालकरालकालानलज्वालापुञ्जपिञ्जराणि रावणशिरांसि । (सत्वरमुपसृत्य चाधस्तात्पश्यतः ।)

**हेमाङ्गदः**—(सकरुणम् ।) हा महावीरप्रकाण्ड लङ्केश्वर, पर्यवसितोऽसि ।

---

लाहलः श्रूयत इति भावः । कपटेन भूतो यः कण्ठीरवः सिंह एतादृशो वैकुण्ठो नारायणो नरसिंहरूपी तस्य कण्ठान्निर्गतो यः कठोरो महान्कोलाहलस्तद्वत्काहलः कटुध्वनिः । देशी शब्दः । भयानको वा । प्रजाकोपो ब्रह्माण्डं तस्य भङ्गो नाशः । अपर्वण्यकाले । प्रलयं विनापीत्यर्थः । प्रक्रमत आरभते । नूनं चेति । नूनं निश्चितमद्य परमेष्ठी ब्रह्मा सभयं यथा स्यादेवं भैरवस्य स्मरति । कालभैरवं महेशं स्मरतीत्यर्थः । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । कालकूटेन विषेणोपदिग्धैर्लिप्तैरिव कण्ठध्वनिभिर्भुवनानि मूर्छयतो मूर्छां नयतः । **दिव्यास्त्रैरिति** । रजनिचरपते रावणस्य कबन्धः शिरःशून्यशरीरं वीरशय्यां समराङ्गणमधिशेते । तत्र स्वपितीत्यर्थः । काकुत्स्थेन रामेणावकीर्णः क्षिप्तः । कीदृशेन । निजविशिखशिखा एव स्वबाणाग्रभाग एव योगपीठो देवपूजासनं तस्मिन्नुपहूतमाहूतं ब्रह्मास्त्रं येन तेन । यद्वा ब्रह्मास्त्रेणेति करणे तृतीया । दिव्यास्त्रैर्योधयित्वा लूनैश्छिन्नैः । अर्थाद्दिव्यास्त्रैरेव । अनन्तरमुत्क्षिप्तैरूर्ध्वं नीतैर्दशभिः शिरोभिरभिनभो नभसि दर्शिता एकादशार्काः सूर्या येन सः । दश रावणशिरांसि, एकः प्रकृतः सूर्यः, एभिरेकादशार्का उदिता इति भावः । भूः पृथिवी, भुवोऽन्तरिक्षम्, स्वः स्वर्गः, एतत्त्रितयस्य त्रिभुवनस्य डमरणं चमत्कारस्तदर्थमुड्डामरैरुत्क्षिप्तैरूर्ध्वं नीतैः । केचित्तु डमरेण विनाशेनोड्डामरैर्भयानकैरित्यर्थः । 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरे' इत्यमरः । 'करालो भीषणेऽन्यवत्' इत्यमरः । कालानलो रौद्राग्निस्तज्ज्वालापुञ्जवत्पिञ्जराणि पिङ्गलानि । हे महावीरप्रकाण्ड प्रशस्तमहावीर । 'प्रकाण्डमुद्धतल्लजौ । प्रशस्त-

---

१. 'सविमर्षम्'. २. 'च' इति पुस्तकान्तरे नास्ति. ३. 'प्रवसितोऽसि'.

भिन्नैरावणगन्धसिन्धुरशिरःसंपातिभिर्मौक्तिकैः
शश्वद्विश्वजयप्रशस्तिरचनावर्णावलीशिल्पिने ।
नाकान्तःपुरिकाकपोलविलसत्काश्मीरपत्राङ्कुर-
श्रीविन्यासविलासभीषणभुजस्तम्भाय तुभ्यं नमः ॥ ७८ ॥

( निर्वर्ण्य । ) सखे रत्नचूड,

ध्रुवं पतितपङ्क्तिकंधरकबन्धपीडाभरा-
न्निजावनमनक्रमोन्नमितचक्रवालाचलम् ।
महीवलयमर्धकुण्डलितविग्रहाधारक-
प्रतीष्टफणमण्डलो वहति काद्रवेयाधिपः ॥ ७९ ॥

**रत्नचूडः**—सखे, सर्वमतिशायि रावणस्य । पुरापि खलु

चलति जगतीजैत्रे यत्र स्वभोगिचमूभटै-
र्वलयितमहादेहस्तम्भो बिभर्ति भुवस्तलम् ।

---

वाचकान्यमूनि' इत्यमरः । पर्यवसितोऽसि समाप्तोऽसि । **भिन्नेत्यादि** । हे रावण, तुभ्यं नमः । अस्त्विति शेषः । भिन्नं द्विधाकृतम् । ऐरावण ऐरावतः स एव गन्धसिन्धुरो गन्धगजस्तस्य यच्छिरो मस्तकं तस्मात्संपातिभिः संपतनशीलैर्मौक्तिकैः करणभूतैः शश्वद्वारंवारं विश्वविजयेन प्रशस्तिरचना प्रशंसाग्रथना तदर्थं या वर्णावल्यक्षरपङ्क्तिस्तस्याः शिल्पिने घटकाय । नाकस्यान्तःपुरिकाणामप्सरसां कपोले विलसन्तो ये काश्मीरपत्राङ्कुराः कुङ्कुमपत्रावल्यस्तेषु श्रीविन्यासविलासे भीषणा भुजस्तम्भा यस्य तस्मै । श्रीः शोभा । विन्यासो विक्षेपः । दूरीकरणमिति यावत् । तत्पतिवधात् । अत एव भुजस्तम्भानामपि भीषणत्वमिति भावः । तुभ्यमिति 'नमःस्वस्ति—' इत्यादिना चतुर्थी । **ध्रुवमित्यादि** । काद्रवेयाधिपः सर्पराजः शेषः, अर्धे कुण्डलितः संकुचितो विग्रहः काय एवाधारक आधारस्तेन प्रतीष्टो धृतः फणमण्डलो येन तादृशः सन्महीवलयं वहति धारयति । ध्रुवं निश्चये । पतितो यः पङ्क्तिकंधरस्य दशग्रीवस्य रावणस्य कबन्धस्तेन पीडाभरायन्त्रणातिशयान्निजावनमनक्रमेणोन्नमिताश्चक्रवालाचलाः कुलपर्वता गन्धमादनादयो येन तादृशम् । रावणकबन्धभरेण महीवलयस्याधोगमनेन पर्वतानामुच्चत्वं वृत्तमिति भावः । अतिशाय्यतिशयितम् । **चलतीति** । यत्र रावणे जगतीजैत्रे भुवनजेतरि चलति सति अहीश्वरो वासुकिः फणाभिर्भुवस्तलं बिभर्ति दधाति । कीदृशः । स्वभोगिचमूभटैः स्वीयसर्पसेनाभटैर्वलयितो वेष्टितो महादेहस्तम्भो

---

१. 'विनाश'. २. 'जयतां जैत्रे'.

प्रचलदखिलक्ष्माभृन्मूलोपलव्यतिघट्टितो-
ल्बणमणिशिलाजल्पाकीभिः फणाभिरहीश्वरः ॥ ८० ॥

इदानीं पुनरुत्क्रान्तवायुरतिदुर्वहो देहबन्धः ।

**हेमाङ्गदः**—(अन्यतोऽवलोक्य ।) कथमियं दशकन्धरस्य कबन्धाभिमुखी शोकविक्लवा मन्दोदरी निशाचरीभिरपकृष्यते । (कर्णं दत्त्वा । आकाशे।) कष्टम् । चपलकपिकुलानुक्रियमाणकरुणकाकुप्रकारकातरस्वरा मन्दोदरी किमाह महावीरवरवर्णिनी—

भूयिष्ठानि मुखानि चुम्बति भुजैर्भूयोभिरालिङ्ग्यते
चारित्रव्रतदेवतापि भवता कान्तेन मन्दोदरी ।
हा लम्बोदरकुम्भमौक्तिकमणिस्तोमैर्ममैकावली-
शिल्पे वागधमर्णिकस्य भवतो लङ्केन्द्र निद्रारसः ॥ ८१ ॥

---

महाङ्गयष्टिर्यस्य तादृशः सन् । प्रचलन्तो येऽखिलाः सर्वे क्ष्माभृतः पर्वतास्तेषां मूलोपलैर्मूलप्रस्तरैर्व्यतिघट्टिता अन्योन्यलग्ना या उल्बणा महत्यो मणिरूपाः शिलास्तासां जल्पाकीभिः शब्दनशीलाभिः । पर्वतमूलपाषाणस्य परस्परघर्षणेन उल्बणा या शिरोमणिशिला तस्याः कथयित्रीभिरित्यर्थः । जल्पाकीभिरिति 'जल्पभिक्ष–' इति षाकन् । षित्त्वान्ङीष् । जेतैव जैत्रः । स्वार्थिकोऽण् । 'जैत्रस्तु जेता' इत्यमरः । उत्क्रान्तो देहबहिर्भूतः । विक्लवा विह्वला । निशाचरीभी राक्षसीभिरपकृष्यते [म]रणादपनिवार्यते । अनुक्रियमाणः सदृशीक्रियमाणः । काकुः शोककृतो ध्वनिः । 'उत्तमा वरवर्णिनी' इत्यमरः । **भूयिष्ठानीति** । मन्दोदरी भूयिष्ठानि प्रचुराणि दश मुखानि चुम्बति । भवता त्वया । कान्तेन स्वामिना रम्येण वा । भूयोभिः प्रचुरैर्विंशत्या भुजैः सैवालिङ्ग्यते । चारित्रव्रते सुचरित्राव्रते देवतेव देवता । साध्वीत्यर्थः । अपिर्विरोधाभासे । तथा च पतिव्रताप्यहं नानामुखचुम्बनं भवतः कृते करोमीति भावः । हा कष्टम् । हे लङ्केन्द्र, भवतोऽपि निद्रारसः । कीदृशस्य । लम्बोदरस्य गणपतेः कुम्भमौक्तिकमणिसमूहैर्यैकावली हारभेदस्तस्याः शिल्पे निर्माणे मम वाचाधमर्णिकस्य ऋणिकस्य । गणेशस्य हस्तिरूपत्वात्तस्य कुम्भस्थमौक्तिकैरेकावलीं कृत्वा तुभ्यं दास्यामीत्यनेनाङ्गीकारेण त्वं ममाधमर्णोऽसीत्यधमर्णिकस्य निद्रा न भवतीति भावः । अधमर्णिक इति । अधमं च तदृणं चाधमर्णं तद्यस्यास्ति । 'अत इनिठनौ' इति ठन् । 'एकावल्येकयष्टिका' इत्यमरः । खेदो दैन्यम् । अनुभवो ग्रहणम् । चक्षुश्च श्रोत्रं च । प्राण्यङ्गादेकवद्भावः । दृष्टं

---

१. 'अपक्रान्तदेहवायुर्दुर्वहोऽयम्'. २. 'कातरतरस्वरा'. ३. 'मन्दोदरी' इति पुस्तकान्तरे नास्ति.

**उभौ**—(सखेदम्।) इदमशक्यानुभवं चक्षुःश्रोत्रस्य। प्रतिकृतानां विद्विषामपि व्यसनमतिमात्रं हृदयमर्माणि च्छिनत्ति। (सविमर्शम्।) अहह, न किंचिदनीषत्करं नाम कृतान्तस्य।

वन्दारुवृन्दारकवृन्दवन्दीमन्दारमालामकरन्दबिन्दून्।
मन्दोदरीयं चरणारविन्दरेणूत्करैः कर्करतामनैषीत्॥ ८२॥

(नेपथ्ये।)

नीयन्ते वनदेवताभिरमरक्षोणीरुहो नन्दनं
नीतो वल्लभपालकेन च निजामुच्चैःश्रवा मन्दुराम्।
रक्षोभिश्च विभीषणप्रणयिभिः कारागृहान्मोचित-
स्वर्वन्दीवदनावलोकनिबिडव्रीडो बिडौजाः कृतः॥ ८३॥

**रत्नचूडः**—(सहर्षम्।) सखे, तदेहि। लङ्केश्वरकाराधिवासचिरप्रवास्तव्यं बन्धुवर्गमीक्षावहे। (इति परिक्रामन्तौ विलोक्य सहर्षमन्योन्यम्।) सखे, पश्य पश्य। प्रहारजर्जरवलीमुखाच्छभल्लगोलाङ्गूलग्रामसंवलगनवलितसुग्रीवो लक्ष्मणनिहितधन्वा विभीषणभुजावलम्बी विजयश्रिया किमपि प्रदीप्तरमणीयो रामभद्रः। अयं हि संप्रति

श्रोतुं न पार्यत इत्यर्थः। प्रतिकृतानामुन्मूलितानाम्। व्यसनं दुःखम्। अतिमात्रमत्यर्थम्। मर्माणि तत्त्वानि। अनीषत्करं दुष्करम्। **वन्दार्विति**। वन्दारुर्वन्दनशीलः। 'शृवन्द्योरारुः'। वृन्दारका देवाः। वृन्दं समूहः। मन्दारं देवतरुपुष्पम्। कर्करतां कठिनताम्। 'कर्करः कठिनेऽन्यवत्' इति मेदिनीकरः। अनैषीन्नीतवती। अयं भावः—चरणपतितानां देवस्त्रीणां शिरःस्थितमन्दारपुष्परसान्स्वचरणारविन्दरेणुभिः कर्करतामियं मन्दोदरी नीतवती, तस्या इयं कष्टा दशेति कृतान्तस्य यमस्य न किंचिदनीषत्करम्, अपि तु सर्वमेवेषत्करमिति। **नीयन्त इति**। अमरक्षोणीरुहो देववृक्षाः पारिजातादयः। नन्दनमिन्द्रवनम्। वल्लभपालकेनाश्वरक्षकेण। 'यश्वारको भुद्रभुजां स स्याद्वल्लभपालकः' इति हारावली। उच्चैःश्रवा इन्द्राश्वः। 'वाजिशाला तु मन्दुरा' इत्यमरः। प्रणयिभिः स्निग्धैः। कारागृहाद्बन्धनागारात्। निबिडा गाढा। बिडौजा इन्द्रः। प्रवसतीति प्रवास्तव्यः। 'वसेस्तव्यत्कर्तरि णिच्च' इति कर्तरि तव्यत्। प्रहारो घातः। वलीमुखो वानरः। अच्छभल्लो भल्लूकः। गोलाङ्गूलः श्यामास्यो वानरः। ग्रामः समूहः संव-

१. 'वल्लव—'. २. 'प्रभृतिभिः'. ३ 'मोचितः'. ४. 'लङ्केश्वराधिवासचिरप्रवासव्यग्रम्'; 'लङ्केश्वरकारागृहाधिवासचिरप्रवासवास्तव्यम्'; 'लङ्केश्वरकाराधिवासचिरप्रवासव्यग्रबन्धुवर्गम्'. ५. 'समीक्षावहे'. ६. 'परिक्रामतः'. ७. 'प्रहारविद्ध—'. ८. 'संवर्गणव्यग्रित'. ९. 'विनिहित—'. १०. 'रामदेवः'.

पौलस्त्यन्यस्तशक्तिव्रणकिणकणिकालक्ष्मणो लक्ष्मणोरः-
पीठान्निर्मुक्तलज्जो विबुधपुरवधूक्लृप्तपुष्पाभिषेकः ।
सद्यो नप्तारमन्यं रजनिचरपुरीभद्रपीठप्रतिष्ठं
दृष्ट्वा तुष्यत्पुलस्त्यो जगति विजयते जानकीजानिरेकः ॥ ८४ ॥

(इति निष्क्रान्तौ[1] ।)

इति दशग्रीवनिग्रहो[2] नाम षष्ठोऽङ्कः ।

---

लग्नं संमाननम् । वल्गितश्चलितः । पौलस्त्येति । जानकी जाया यस्य स जानकी-जानी रामो विजयते । लक्ष्मणस्योरःपीठाद्धृदयपीठान्निर्मुक्तलज्जः । कीदृशात् । पौलस्त्येन रावणेन न्यस्ता क्षिप्ता या शक्तिरस्त्रभेदस्तस्या या व्रणकिणकणिका क्षत-चिह्नरेखा सैव लक्ष्म चिह्नं यत्र तस्मात् । तथा च रावणवधाद्रामस्य सा लज्जा नष्टेति भावः । विबुधपुरममरावती । सद्यस्तत्क्षणादेव । रावणवधानन्तरमेव । विभीषणस्य पिता विश्रवास्तस्य पिता पुलस्त्य इति पुलस्त्यनप्ता विभीषणः । अयं रावणादन्यमपरं नप्तारं पौत्रं विभीषणम् । राक्षसपुरीभद्रपीठे प्रतिष्ठाभिषेको यस्य तादृशम् । तुष्यन्पुलस्त्यो यस्मात्सः । भद्रपीठं सिंहासनम् । 'नृपासनं यत्तद्भद्रासनम्' इत्यमरः । जानकीजानि-रिति 'जायाया निङ्' । 'लोपो व्योर्वलि' इति यलोपः । निष्क्रान्तौ हेमाङ्गदरत्नचूडौ ॥

इति समस्तप्रक्रियाविराजमानरिपुराजकंसनारायणभवभक्तिपरायणश्रीहरिनारायण-
पदसमलंकृतमहाराजाधिराजश्रीमद्भैरवसिंहदेवप्रोत्साहितवैजोलीग्राम-
वास्तव्यखौआलवंशप्रभवश्रीरुचिपतिमहोपाध्यायविरचिताया-
मनर्घराघवटीकायां षष्ठोऽङ्कः ।

---

१. 'निष्क्रान्ताः'; 'निष्क्रान्ताः सर्वे'. २. 'दशास्यनिग्रहो नाम'.

सप्तमोऽङ्कः।

(नेपथ्ये।)

तमिस्रामूर्छालत्रिजगदगदंकारकिरणे
रघूणां गोत्रस्य प्रसवितरि देवे सवितरि।
पुरस्थे दिक्पालैः सह परगृहावासवचना-
त्प्रविष्टा वैदेही दहनमथ शुद्धा च निरगात्॥ १॥

अयमपि

एकैकानि शिरांसि राक्षसचमूचक्रस्य हुत्वा निजे
तेजोग्नौ दशकण्ठमूर्धभिरथो निर्माय पूर्णाहुतिम्।
अद्य स्वस्त्ययनं समाप्य जगतो लङ्केन्द्रबन्दीवृतां
सीतामप्यवलोक्य शोकरभसव्रीडाजडो राघवः॥ २॥

क्रमेण च

सहैव सुग्रीवविभीषणाभ्यां सौमित्रिसीतापरिपूर्णपार्श्वः।
उपैति वैवस्वतवंशवृत्तमेध्यामयोध्यामथ पुष्पकेण॥ ३॥ (युग्मम्)

**तमिस्रेति**। वैदेही सीता परगृहे रावणगृहे आवासश्चिरावस्थानं तद्रूपाद्वचनाद्धेतोः शुद्ध्यर्थं दहनमग्निं प्रविष्टा। अथानन्तरं शुद्धा सती निरगान्निर्गता बभूव। दहनादित्यर्थात्। दिक्पालैः सह रघूणां गोत्रस्य प्रसवितरि जनके सवितरि सूर्ये पुरःस्थेऽग्रस्थे सति। परीक्षा हि वंश्यस्यान्यस्य च महतोऽग्रे क्रियत इति समाचारः। तमिस्रा रात्रिस्तस्यां मूर्छा निद्रा तया युक्तं यत्त्रिजगत्तस्यागदंकारो वैद्यः। प्रकाशकर्तेति यावत्। किरणो यस्य तादृशे। मूर्छाल इत्यत्र 'सिध्मादिभ्यश्च' इति लच्। अगदंकार इति कर्मण्यण्। 'कारे सत्यागदस्य' इति मुम्। **एकैकानीति**। एकैकान्यनेकानि। प्रतीयमानबहुत्वाद्बहुवचनम्। अन्यराक्षसशिरांसि हुत्वा रावणशिरोभिः पूर्णाहुतिः। होमसमाप्ता हि पूर्णाहुतिः क्रियत इति समाचार इति भावः। स्वस्ति कल्याणं तस्यायनं वर्त्म स्वस्त्ययनं शान्तिकपौष्टिकं कर्म। 'अयनं पथि भानोरुदग्दक्षिणतो गतौ' इति मेदिनीकरः। वृतां वेष्टिताम्। सकलवराकनिशाचराणां सहसैव समूलमुन्मूलनाच्छोकः। सीतायाः प्राप्तेर्विशुद्धिज्ञानाच्च रभसः निष्करुणेन मया सीताविशुद्धिं जानतापि प्रियतमा साग्निप्रवेशं कारितेति व्रीडा। यद्वा बन्दीकृतसीतावलोकनाद्व्रीडा। एतै रसैर्जडो निष्क्रियः अयमपि राघव इत्यन्वयः। **सहैवेति**। विवस्वतः सूर्यस्यापत्यं वैवस्वतो मनुः। वृत्तं व्यापारः। मेध्यां पवित्राम्। 'मेध्यं त्रिषु शुचौ' इति विश्वः। पुष्पकेण

१. 'अयमपि'. २. 'बन्दीकृतां'.

(ततः प्रविशति विमानयानेन विजयाभिरामो रामः सीतालक्ष्मणौ सुग्रीवविभीषणौ च ।)

**सुग्रीवः**—(रामं प्रति ।) देव,

किंकुर्वाणपयोधिसेवितगृहोद्यानाधुनालोक्यतां
लङ्केयं रघुवंशविक्रमकथाबीजप्ररोहस्थली ।
देवेनात्र दशाननस्य दशभिश्छिन्नैः शिरोभिः क्रमा-
देकैकेन शतं शतं शतमखस्यामोदिता दृष्टयः ॥ ४ ॥

**रामः**—देवि वैदेहि, दृश्यतामितो लङ्कां पूर्वेण सुवेलं पश्चिमेन ।

त्वदर्थीयक्रव्यात्कपिकुलकबन्धव्यतिकरैः
करालेयं भूमिर्भुवनभयमद्यापि तनुते ।
अभूवन्नम्भोधेरिह रुधिरमय्यो युवतयः
सहस्रं साहस्रास्त्रिदिवयुवतीनां च पतयः ॥ ५ ॥

---

कुवेररथेन । स च पुरा रावणेन गृहीत इदानीं राघवेण लब्धः । 'एकैकानि शिरांसि' इत्यादि श्लोकद्वयेन युग्मकम् । युग्मकलक्षणं तु—'कुलकं बहुभिः श्लोकैः साकाङ्क्षैरेकवाक्यता । श्लोकाभ्यां युग्मकं ज्ञेयमेकार्थाभ्यां तु चुम्बकम् ॥' इति । **किंकुर्वाणेति ।** किंकुर्वाणः किंकरः सेवकः । गृहोद्यानं गृहनिकटवाटिका । मुदे हर्षाय । विक्रमोऽतिशक्तिता । तत्कथया यद्बीजं तस्य प्ररोहस्थली जन्मभूमिः । अन्यदपि बीजं भूमौ प्ररोहतीति ध्वनिः । अत्र लङ्कायाम् । [एकैकेन] इन्द्रस्य शतं शतं दृष्टयो नेत्रसहस्रं रावणस्यैकैकेन शिरसा आमोदिताः इन्द्रस्य चक्षुषां दशशतानि प्रत्येकं रावणदशशिरोभिर्मोदितानीति भावः । एकेन शिरसा एकशतनेत्रस्य हर्षः । एवमपरेणापरस्येति क्रमः । लङ्कां पूर्वेण सुवेलं पश्चिमेनेत्यत्र 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इत्येनप् । 'एनपा द्वितीया' इति द्वितीया । लङ्कायाः पूर्वं सुवेलस्य च पश्चिममित्यर्थः । **त्वदर्थीयेति ।** त्वमेवार्थः प्रयोजनं यस्य स त्वदर्थो रावणो रामश्च तस्मै हितं त्वदर्थीयम् । रावणस्य क्रव्यात्कुलं रामस्य कपिकुलं तेषां कबन्धव्यतिकरैः कबन्धमेलकैः कराला भयानका अतिदन्तुरा वा भूमिरद्यापि भुवनभयं तनुत इत्यन्वयः । इह भूमौ अम्भोधे रुधिरमय्यः सहस्रं युवतयो नद्योऽभूवन्भूताः । त्रिदिवयुवतीनामप्सरसां च पतयः स्वामिनः साहस्राः सहस्रपरिमाणा अभूवन् । सहस्रं परिमाणमेषां ते । 'शतमानविंशतिकसहस्रवसनादण्' । रणसंमुखं ये मृता वीरास्ते विद्याधरीभूता अप्सरःपतयो वृत्ता इति भावः । यद्वा साहस्राः सहस्रपुरुषबलाः सहस्रजनेश्वरा वा । 'बलिनो ये सहस्रेण

अपि च ।

उद्यम्य दृष्टनिजपन्नगरत्नमात्रा-
नस्त्राणि चन्दनतरूनुपरि भ्रमन्तः ।
द्यां ज्योतिरिङ्गणमयीमिह मेघनाद-
मायातमोपलपितां[1] कपयो वितेनुः ॥ ६ ॥

**सीता**—अज्जउत्त, अवि इध ज्जेव्व भुअंगपासबन्धणं सीदाए अणुहाविदा तुह्मे ।

**रामः**—आं मैथिलि, आम् ।

चर्वितपीनाहिगणष्ठणिति[2] विनिष्ठ्यूतफणिमणिरभीक्ष्णम् ।
येनबन्धनवैधुर्यं[3] व्यधुनोदिह नौ[4] स विहगेन्द्रः ॥ ७ ॥

(विमृश्य सस्मितम्[5] ।) अहो वैषम्यमस्या जातेः ।

द्वे तावत्करणे रसान्रसयितुं शब्दांश्च रूपाणि च
श्रोतुं द्रष्टुमथैकमिन्द्रियमुरोगत्यै निगूढं पदम् ।

---

साहस्रास्ते सहस्रिणः' इत्यमरः । **उद्यम्येति** । इह लङ्कायां मेघनादस्य मायातमो मायोपदर्शितान्धकारस्तेनापलपिता आच्छादिताः कपयो ज्योतिरिङ्गणमयीं खद्योतव्याप्तामिव द्यामाकाशं वितेनुर्विस्तारयामासुः । कीदृशाः । चन्दनतरूनस्त्राण्युद्यम्योत्तोल्योपरि भ्रमन्तः । कीदृशान् । दृष्टा निजा स्वीया पन्नगरत्नानां मात्राल्पत्वं कार्त्स्न्यं वा यत्र तान् । तथा च चन्दनवृक्षस्थसर्पाणां मणिप्रभाभिर्मेघनादमायान्धकारे ज्योतिरिङ्गणत्वमासादितम् । अन्योऽपि ज्योतिरिङ्गणोऽन्धकारे प्रसरतीति ध्वनिः । 'मात्राल्पे च परीमाणे' 'मात्रं कार्त्स्न्येऽवधारणे' इति विश्वः । **अज्जउत्तेति** । 'आर्यपुत्र, अपि इहैव भुजंगपाशबन्धनं सीतयानुभाविता यूयम्' [इति च्छाया ।] इह अपिः प्रश्ने संभावनायां वा । 'आर्यपुत्रेति संबोध्यः पतिः पत्नीजनेन तु' इति भरतः । सीतयेति हेतौ तृतीया । आं स्वीकारे ज्ञाते वा । 'आं ज्ञातेऽथवा स्वीकारे' इति भरतः । आम्शब्दो हलन्तोऽयमव्ययः । **चर्वितेति** । इह स्थाने विहगेन्द्रः पक्षिराजो गरुडो नौ आवयोर्मेहद्बन्धनवैधुर्यं बन्धनकष्टं व्यधुनोन्मोचितवान् । कीदृशः । चर्वितः खादितः पीन उपचितोऽहिगणो येन सः । 'चर्वितपीत–' इति पाठे चर्वितोऽनन्तरं पीतो द्रवीकृत्य पानविषयीकृतः । पुनः कीदृशः । अभीक्ष्णं वारंवारं ठणिति कृत्वा निष्ठ्यूत उद्गीर्णः फणिमणिर्येन सः । ठणादित्यव्यक्तानुकरणस्येति शब्दे परतः 'अव्यक्तानुकरणस्यात इतौ' इत्यत् शब्दस्य पररूपत्वम् । **द्वे तावदिति** । हे मातः कद्रु सर्पमातः, ईदृशान्सुतान्भूयः पुनरपि यदि भवती

---

१. 'तमोवलयिताम्.' २. 'ठगिति'. ३. 'अहिबन्धन–'. ४. 'नौ विहंगपूगेन्द्रः'; 'नः स विहगेन्द्रः'. ५. 'सविस्मितम्'.

अन्येष्वप्यशनेषु सत्सु जगतः प्राणाः स्वदन्तेतरां
मातः कद्रु यदि प्रसौति भवती भूयः सुतानीदृशान् ॥ ८ ॥
(सर्वे हसन्ति ।)

**सीता**—(सस्नेहस्मितं लक्ष्मणमवलोक्य रामं प्रति ।) अज्जउत्त, सोमित्ति-किित्तिकन्दलीए उप्पत्तिखेत्तं कदरो उण संणिवेसो ।

**रामः**—(सहर्षरोमाञ्चम् ।) देवि मैथिलि, अयमितो हस्तदक्षिणेन दशरथदशकंधरस्कन्धवारैकप्रवीरयोर्लक्ष्मणमेघनादयोर्द्वन्द्वयुद्धव्यतिकरसाक्षी सुवेलपादः ।

**सीता**—जहिं एव्व

अणुराअरोमकण्टअसेअजलेहिं णिसाअरी कावि ।
उद्दीविअणिव्वाविअदइदचिदाणलमनु मरेदि ॥ ९ ॥

---

प्रसौति । तदा परं नान्या कापीत्यर्थः । तावदिति वाक्यालंकारे । रसान्रसयितुमास्वादयितुं द्वे करणे द्वे इन्द्रिये जिह्वारूपे । अन्येषां प्राणिनामेकैव रसना, सर्पाणां तु द्वे इति वैषम्यम् । शब्दांश्च रूपाणि श्रोतुं द्रष्टुम् । यथाक्रममन्वयः । एकमिन्द्रियं चक्षुः । तदेव श्रोत्रं च । चक्षुःश्रवस्त्वात् । अन्येषां द्वे इन्द्रिये श्रोत्रं चक्षुः । उरसा वक्षसा गत्यै गमनाय निगूढमव्यक्तं पदं चरणम् । अन्ये पुनः प्रसिद्धचरणैः संचरन्ति । अन्येषु कठिनकोमलादिष्वशनेषु भक्ष्येषु सत्स्वपि जगतो विश्वस्य प्राणा वायवः, अथ चासवः स्वदन्ते रोचन्ते । तथा च न युक्ता ईदृशाः सुता उत्पादयितुमिति भावः । 'जगत्प्राणसमीरणाः' इत्यर्थः । ननु संबुद्धौ गुणे कृते 'कद्रो' इति स्यात् तत्कथं न तथेति चेत्, न । 'कद्रुकमण्डल्वोः संज्ञायाम्' इत्यूङि कृते ह्रस्वत्वविधानात् । **अज्जउत्तेति** । 'आर्यपुत्र, सौमित्रिकीर्तिकन्दल्या उत्पत्तिक्षेत्रं कतरः पुनः संनिवेशः' [इति च्छाया ।] इह 'कन्दली स्याद्गुल्मभेदे नवाङ्कुरे' इति विश्वः । कतरः कः । स्वार्थे तरप् । संनिवेशः स्थानम् । इतोऽस्मिन्प्रदेशे । आद्यादित्वात्तसिः । हस्तदक्षिणेन 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । स्कन्धावारः कटकम् । द्वन्द्वमन्योन्यम् । यद्वा द्वन्द्वं युद्धभेदः । व्यतिकरः संगमः प्राचुर्यं वा । पादाः प्रत्यन्तपर्वताः । **जहिं इत्यादि** । 'यत्रैव, अनुरागरोमकण्टकस्वेदजलैर्निशाचरी कापि । उद्दीपितनिर्वापितदयितचितानलमनु म्रियते ॥' [इति च्छाया ।] इह रोमकण्टकेन रोमाञ्चेनोद्दीपितं स्वेदजलेन निर्वापितं चितानलमनु लक्ष्यीकृत्य निशाचरी राक्षसी म्रियते प्राणांस्त्यजति । 'अनुसरेदि' इति पाठे अनुसरति । चितानलं यथा स्यादेवमिति क्रियाविशे-

---

१. 'व्यतिकरैक.'

**रामः**—आं जानकि[1], आम् । इदमेव तल्लक्ष्मणवीरलक्ष्मीस्वयंवर-कौतुकागारम् । इह हि

आनीतद्रोणशैलेन सौमित्रेः शल्यहारिणा ।
अक्रियन्त जगन्त्येव निःशल्यानि हनूमता ॥ १० ॥

**सीता**—(स्मृतिमभिनीय सानुरागम् ।) अज्जउत्त, किक्किन्धेसरकन्धावा-रधुरंधरो रहुउलकुटुम्बविहुरबन्धू सो कहिं हणूमन्तो ।

**रामः**—देवि निमिराजनन्दिनि,

क्षुण्णे निशाचरपतौ रविबिम्बवर्ती
तातो मया दशरथः स्वयमेव दृष्टः ।
तस्याज्ञया रघुपुरीं प्रहितः पुरैव
राज्याभिषेकविधिसंभृतये हनूमान् ॥ ११ ॥

(विमानवेगनाटितकेन ।) देवि[2], प्रणम्यतामयमितो भगवानम्बुराशिः ।

लक्ष्मीरस्य हि यादः कृष्णोरःस्थापि सुभटभुजवसतिः ।
इन्दुः स च मृडचूडामणिरपि जगतामलंकारः ॥ १२ ॥

---

षणम् । स्वयंवरे स्वयंवरणे । कौतुकागारं क्रीडागृहम् । द्रोणशैलः पर्वतविशेषः । यत्र विशल्या नाम महौषधिः स्थिता । शल्यं शरादिकम् । निःशल्यान्यव्यथानि । **अज्जउत्तेति** । 'आर्यपुत्र, किष्किन्धेश्वरस्कन्धावारधुरंधरो रघुकुलकुटुम्बविधुर-बन्धुः स कुत्र हनूमान्' [इति च्छाया ।] इह किष्किन्धेश्वरः सुग्रीवः । धुरंधरो धुरा-धारणक्षमः । विधुरबन्धुर्दुःखवारकः । **क्षुण्ण इति** । क्षुण्णे निष्पिष्टे । मारित इति यावत् । रविबिम्बवर्ती आदित्यमण्डलस्थः । तस्य योगयुक्तत्वात् । तदुक्तम्—'द्वावेतौ पुरुषौ राजन्सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति । र-घुपुरीमयोध्याम् । पुरैव पूर्वमेव । 'पुरापि' इति पाठेऽपि स एवार्थः । अव्ययानामने-कार्थत्वात् । यद्वा न केवलं तातो दृष्टः, हनूमानपि प्रहित इति समुच्चयेऽपिः । इतोऽत्र प्रदेशे । **लक्ष्मीरिति** । हिर्हेतौ । अस्य समुद्रस्य लक्ष्मीरिन्दुश्च यादो जलजन्तुः । अ-जहल्लिङ्गतयान्वयः । अपिर्विरोधाभासे । या हि कृष्णवक्षःस्थिता सा कथं सुभटभुजे वसतीति । अथ च सैव भगवती श्रीः संपद्रूपतया सुभटभुजवर्तिनी वृत्तेत्यविरोधः । मृडो हरः । 'गिरीशो गिरिशो मृडः' इत्यमरः । अपिरिहापि विरोधाभासे । जगतां लोकाना-

---

१. 'जनकि'. २. 'देवि पार्थिवि'.

(सविमर्शं च ।)

स्यादेव तोयममृतप्रकृतिर्यदि स्या-
न्नैकान्तमद्भुतमिदं पुनरद्भुतं नः ।
लक्ष्मीतुषारकरकौस्तुभपारिजात-
धन्वन्तरिप्रभृतयो यदपां विवर्तः ॥ १३ ॥

अपि च देवि,

आकण्ठदृष्टशिरसाप्यविभाव्यपृष्ठ-
पार्श्वोदरेण चिरमृग्भिरुपास्यमानः ।
नाभीसरोरुहजुषा चतुराननेन
शेते किलात्र भगवानरविन्दनाभः ॥ १४ ॥

(सीता वन्दते ।)

**लक्ष्मणः**—यत्सत्यमुत्सर्पिणी धर्मोत्तराणां सिद्धिः
जरयतु जगत्कल्पोच्छित्तौ पिपर्तु पयोधरा-
न्वहतु वडवावक्त्रज्योतिर्दधातु सुधाभुजः ।

---

मलंकर्ता । यो हि हरचूडामणिः स कथं सर्वालंकर्तेति । अविरोधो दर्शित एव । **स्यादेवेति** । तोयं पानीयममृतप्रकृतिरमृतक्षारणममृतस्वभावो वा यदि स्यात्स्यादेव । तोयस्य द्रवद्रव्यत्वात् । अमृतमपि तादृगेवेति । एकान्तमत्यर्थं नाश्चर्यम् । यद्वा अमृतनामकत्वाज्जलस्य न चित्रम् । यद्वा तोयं जलममृतप्रकृतिः सुधाकारणं यदि स्यात्स्यादेव । अमृतस्य हि समुद्रोत्पन्नत्वात् । यद्वा तोयममृतस्य प्रकृतिः समगुणं वा स्वभावो वा स्यादेव । 'प्रकृतिर्गुणसाम्ये स्यात्स्वभावे कारणेऽपि च' इति विश्वः । नोऽस्माकमिदं पुनरद्भुतमाश्चर्यं यदेते लक्ष्म्यादयोऽपां विवर्तः परिणामः । विसदृशत्वात् । तुषारकरश्चन्द्रः । धन्वन्तरिर्मुनिभेदो वैद्यककर्ता । **आकण्ठेति** । किल प्रसिद्धौ । अत्र समुद्रे भगवानरविन्दनाभो नारायणः शेते स्वपिति । कीदृशेन । नाभीपद्मस्थितेन चतुराननेन ब्रह्मणा चिरसमयं व्याप्य ऋग्भिर्वेदैरुपास्यमानः । कीदृशेन । कण्ठपर्यन्तं दृष्टमस्तकेनाप्यज्ञातपृष्ठपार्श्वोदरेण । यद्यपि कण्ठपर्यन्तं शिरो दृष्टं तथापि न ज्ञातं क्वास्य पृष्ठादिकम् । चतुर्मुखत्वात्तत्रापि मुखसंभावना स्यादिति भावः । वन्दते नमस्करोति । उत्सर्पिणी वर्धमाना । धर्मोत्तराणां तपःप्रधानानामगस्त्यादीनाम् । सिद्धिः कर्मफलम् । **जरयत्विति** । अयमपां निधिः समुद्रो जगद्भुवनं कल्पोच्छित्तौ सृष्ट्यवनासे जरयतु जीर्णं करोतु । नाशयत्वित्यर्थः । 'जनयतु जगत्' इति पाठे कल्पोच्छित्तौ प्रलयावसाने सति जगज्जनयतूत्पादयतु । समुद्रेण हि प्रलये पयःप्राचुर्याज्जगज्जीर्यते । सृष्टिकालौ जलैरेव सृज्यत इति पुराणम् । सृष्टौ प्रथमं

---

१. 'उपसर्पिणी'.

भवतु वपुषा यावांस्तावानगस्त्यरुषा पुन-
र्निधिरयमपामीषत्पानस्तपांसि नमोऽस्तु वः ॥ १५ ॥

रामः—(सबहुमानम् ।) [1]वत्स, किमुच्यते—

मुनेः कलशजन्मनो जयति कापि गम्भीरता
यया चुलकमम्भसामपि निधिः समुत्पद्यते ।
अमुष्य पुनरीश्महे न विवरीतुमुत्तुङ्गतां
यया भवति नोच्चैरहह सोऽपि विन्ध्याचलः ॥ १६ ॥

अपि च वत्स, दुरवगाहगम्भीरस्वभावानि महतां चरितानि । तथा हि ।

जगद्विगमघस्रघस्मरसहस्रभानुप्रभा-
परिक्कथितपिण्डितो लवणकूटमेवार्णवः ।
अयं क्षणमभूदथ ज्वलति कालरुद्रानले
चटच्चटदिति स्फुटन्न भवति स्म यावत्क्षणात्[2] ॥ १७ ॥

पयसामेव जननम् । तथा च विष्णुपुराणम्—'अप एव ससर्जादौ तासु वीर्यमवासृजत्' इति । पयोधरान्मेघान्पिपर्तु पूरयतु । 'पॄ पालनपूरणयोः'। लोट् । 'अर्तिपिपर्त्योश्च' इतीत्त्वम् । वडवावक्त्रज्योतिर्वडवानलं वहतु दधातु । सुधाभुजो देवान्दधातु पुष्णातु । 'डुधाञ् धारणपोषणयोः' । निजामृतदानात्तेषां पोषणम् । अत एव सुधाभुज इत्युक्तम् । वपुषेति 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । वपुषा शरीरेण यावान्यावत्परिमाणस्तावांस्तावत्परिमाणो भवतु । अगस्त्यस्य रुषा क्रोधेन पुनरयमपां निधिरपि ईषत्पानः सुखपेयः । यैस्तपोभिरगस्त्येन जलनिधिरपि पीतस्तानि हे तपांसि, वो युष्मभ्यं नमोऽस्तु । नमस्कारोऽस्त्वित्यर्थः । **मुनेरिति** । कलशजन्मागस्त्यः । चुलकं गण्डूषः । अमुष्यागस्त्यस्योत्तुङ्गतामुच्छ्रितत्वं पुनर्विवरीतुं प्रकाशयितुं न वयमीश्महे न प्रभवामः । अहह आश्चर्ये । ययोत्तुङ्गतया स विन्ध्यगिरिरपि नोच्चैर्भवति । न वर्धत इत्यर्थः । कलशादुत्पन्नस्य गाम्भीर्योत्तुङ्गते किं ब्रूम इति भावः । विवरीतुमित्यत्र 'वॄतो वा' इति दीर्घत्वम् । दुरवगाहानि दुःखविलोडनीयानि । अत एव गम्भीराणीत्यर्थः । **जगदिति** । अयमर्णवः समुद्रो जगद्विगमस्य प्रलयस्य यद्धस्रं दिनं तत्र घस्मरो भक्षणशीलो यः सहस्रभानुः सूर्यस्तस्य प्रभाभिः परिक्कथितोऽतिपक्वः अत एव पिण्डितः पिण्डीकृतो यतो

१. 'वत्स' इति पुस्तकान्तरे नास्ति. २. अस्माच्छ्लोकादग्रे केषुचिन्मूलपुस्तकेषु 'अपि च, अचिन्त्याः पन्थानः किमपि महतामन्धकरिपोर्यदक्ष्णोऽभूज्ज्योतिस्तदकृत कथामप्यमदनाम् । मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥' अयं श्लोको वर्तते.

**सीता**—अज्जउत्त, जलणिहिमज्झवट्टिणो लङ्कापोदअस्स जम्बूदीवोवसंजमणसिङ्खलेव्व को एसो पडिहासदे ।

**रामः**—देवि मेदिनीनन्दिनि[1], पतितपौलस्त्यजगद्विजयकेतुदण्डानुकारी ककुत्स्थकुटुम्बदुःखसंविभागदायादस्य[2] वानरपतेः[3] कीर्तनमयोऽयं महासेतुः ।

**सीता**—( सहर्षम् । ) दिट्ठिआ अज्जउत्तदंसणपच्चासाए वन्धप्परोहणमहोसहं सेदुबन्धो दीसइ । ( अञ्जलिं बद्ध्वा । ) भअवं, णमो दे ।

---

ऽतो लवणकूटमेवाभवत् । पूर्वं रविरश्मिना क्वथितः पश्चात्पिण्डीकृतः । अत एव कूटत्वम् । दुग्धादौ तथा दृष्टम् । अथानन्तरं कालरुद्रानले प्रलयकालीनरुद्रसंबन्धिवह्नौ ज्वलति सति चटत् चटत् इति स्फुटन्सन् क्षणान्न भवति स्म यावत् । न वृत्त एव यावत् । यावदित्युक्तिविशेषे । चटच्चटदिति स्फुटित्वा क्षणान्नष्ट इत्यर्थः । अयं भावः—प्रथमं रवितेजसा क्षारमयत्वाल्लवणकूटमेवाभवत् । अनन्तरं प्रलयानलज्वालया चटच्चटदिति कृत्वा स्फुटित इति दुरवगाहगम्भीराणि महतां चेष्टितानीति । चटदित्यत्र चटच्छब्दस्य तान्तत्वे 'अव्यक्तानुकरणस्यात इतौ' इति 'अत्' इत्यस्य पररूपत्वे चटितीति रूपप्रसङ्गः । तेन चटद्शब्दो दान्त एवात्र गम्यते । 'घस्रो दिनाहनी' इत्यमरः । घस्मर इति 'सृघस्यदः क्मरच्' । 'घस्लृ अदने' । 'पुञ्जराशी तूत्करः कूटमस्त्रियाम्' इत्यमरः । चटदित्यव्यक्तानुकरणम् । भवति स्मेति 'लट् स्मे' इति भूते लट् । **अज्जउत्तेति** । 'आर्यपुत्र, जलनिधिमध्यवर्तिनो लङ्कापोतस्य जम्बूद्वीपोपसंयमनशृङ्खलेव क एष प्रतिभासते' [इति च्छाया ।] इह लङ्कैव पोतो वहित्रं 'डोंगी' इति ख्यातः । उपसंयमनं बन्धनम् ) । पोतोऽपि महत्या रज्ज्वा बध्यत इति भावः । केतुः पताका । रावणे पतिते तत्केतुदण्डोऽयं पतित इति लक्ष्यते । ककुत्स्थकुटुम्बो रामादिः । संविभागः सम्यग्वण्टनम् । दायादोंऽशहरः दायं विभजनीयधनमादत्ते दायादः । 'आतश्चोपसर्गे' इति कः । 'विभक्तव्यधने दायः' इति विश्वः । वानरपतेः सुग्रीवस्य । कीर्तनं कीर्तिः । **दिट्ठिआ इत्यादि** । 'दिष्ट्या आर्यपुत्रदर्शनप्रत्याशाया बन्धप्ररोहणमहौषधं सेतुबन्धो दृश्यते' [इति च्छाया ।] इह दिष्ट्या हर्षे । प्रत्याशाया बन्धोऽनुबन्धस्तस्य प्ररोहणमङ्कुरस्तत्र महौषधं सेतुबन्ध इत्यजहल्लिङ्गतयान्वयः । यदा सेतुबन्धवार्ता मया श्रुता तदा त्वद्दर्शनप्रत्याशाबन्धो वृत्त इति भावः । 'प्रत्याशायाश्छिन्नप्ररोहणमहौषधम्' इति पाठे प्रत्याशायाश्छिन्नं छेदस्ततः प्ररोहणं जन्म तत्र महौषधमित्यर्थः । छिन्नमिति भावे क्तः । **भअवमिति** । 'भगवन्, नमस्ते' [इति च्छाया ।] इह 'नमःस्वस्ति–' इति

---

१. 'धरित्रीनन्दिनि'. २. 'दुःखविभाग–' ३. 'वानरपतेः सुग्रीवस्य कीर्तिमयोऽयं'.

रामः—देवि विश्वंभरासंभवे, पश्य पश्य।

यथा दूरापातित्रिदिवयुवतीनेत्रसुलभा-
मपां भर्ता हारावलिवलयलक्ष्मीं वितनुते।
तथायं माणिक्यस्फटिककनकग्रावशिखरै-
रशून्यात्मा सेतुः प्रभवति महानायक इव॥ १८॥

अपि चास्मिन्बध्यमाने

शैलप्रवेशात्प्रचलीभवद्भिः कल्लोलकूटैरभिताडितानाम्।
आसीन्निवृत्त्याचलगामिनीनामम्भोधिरेव प्रभवो नदीनाम्॥ १९॥

(सुग्रीवं प्रति।) सखे,

तथा सेतुश्रद्धोत्कलितकपिनिक्षिप्तशिखरि-
प्रतिष्ठावर्धिष्णुः क्षणमथ नदीभिः प्रतिवहन्।
समुत्खातक्षोणीधरकुहरपूर्तिव्यतिकर-
प्रमृष्टाहंकारः स्मरति तदवस्थो निधिरपाम्॥ २०॥

---

चतुर्थी। **यथेति**। अयमपां भर्ता समुद्रस्तथा हारावलिवलयलक्ष्मीं वितनुते। क्ष्मावेष्टनाद्दूरागमनाच्च हारवलयाकारतया नेत्रविषयो भवतीति भावः। यथायं सेतुर्माणिक्यस्फटिककनकप्रस्तरशृङ्गैरशून्यात्मा व्याप्तः सन्महानायक इव प्रभवति जायते पारावारं व्याप्य तिष्ठति इति वा योज्यम्। नायको हारमध्यमणिः। कीदृशीं लक्ष्मीम्। दूरापातिनीनां दूरादागमनशीलानां देवस्त्रीणां नेत्रैः सुलभां सुखप्राप्याम्। वध्यमाने बन्धनं प्राप्तवति। **शैलेति**। समुद्रे शैलप्रवेशात्प्रचलीभवद्भिः कल्लोलसमूहैरभिताडितानामाहतानां यतोऽतो हेतोर्निवृत्त्य व्याघुट्य पर्वतगामिनीनां नदीनामम्भोधिरेव प्रभव उत्पत्तिस्थानमासीत्। नद्यः पर्वतात्प्रभवन्ति, अत्र तु शैलप्रवेशानन्तरं कल्लोलाघातात्परिवृत्त्याचलं प्रति यान्त्यो नद्यः समुद्रादिव प्रभूता इति भावः। **तथेति**। तथा सेतुश्रद्धया सेत्वादरेण उत्कलितैरुत्कण्ठितैः कपिभिर्निक्षिप्तानां गिरीणां प्रतिष्ठया संघर्षेण वर्धिष्णुर्वर्धनशीलः। यद्वा सेत्वादरेण उत्कलितानामुत्पाटितानां कपिभिर्निक्षिप्तानां गिरीणां प्रतिष्ठया उत्कर्षेण वर्धिष्णुः। अथानन्तरं क्षणं नदीभिः प्रतिवहन् सेतुसंगमात्प्रतीपेन वहन् सन्। अथ उत्पाटितशैलस्थानविवरपूरणव्यतिकरेण समूहेन संबन्धेन वा नष्टाहंकारस्तदवस्थो बन्धनकालावस्थः समुद्रः स्मरसि। इह वाक्यार्थस्यैव कर्मता। 'कथमासीन्निधिरपाम्' इत्यपि पाठः। तत्र कथमासीत्किंरूप आसीदित्यर्थः। वर्धिष्णुरिति

---

१. 'त्रिदशयुवती'. २. 'विभवति'. ३. 'प्रवलीभवद्भिः'.

**सुग्रीवः**—देव, भवच्चरितचित्रशालिकायामस्माकं चेतसि किं किं नाम न लिखितमस्ति । अपि च ।

सेतूद्योगे[1] सपदि लवणादन्यम[2]न्तस्तिमिभ्यः
कालेनापां मधुरमपि हि स्वादमुद्भेदयन्त्यः ।
शैलक्षेपोच्छलितसलिलव्यूहतुच्छे समन्ता-
द्वारां पत्यौ प[3]टुतररयं निम्नगाः संनिपेतुः ॥ २१ ॥

**विभीषणः**—देव मनुवंशमौक्तिकमणे,

सद्यः पीत्वा दरीभिर्जल[4]धिमथ चिराद्दृष्टमेनाकबन्धु-
प्रीतिप्रौढाश्रुपूरद्विगुणमहिमभिर्निर्झरैः पूरयन्तः ।
ये विन्यस्ताः पुरस्तान्निशि निशि निवहैरोषधीनां ज्वलद्भि-
स्ते दृश्यन्ते तदात्वोषितकपिशिबिरस्मारिणः सेतुशैलाः ॥ २२ ॥

**सीता**—( सस्मितम् । ) अज्जउत्त, गोरीगुरुणो गिरिन्दस्स जुवराओ जलणिहिगब्भवसदी मेणाओ जाणामि पक्खच्छेअं पि विणा थावरीभूदो ।

---

'अलंकृञ्–' इत्यादिना इष्णुच् । 'कुहरं सुषिरं विवरं बिलम्' इत्यमरः । चित्रशालिका चित्रप्रधानं गृहम् । नाम संभावनायां निश्चये वा । **सेत्विति** । शैलक्षेपादुच्छलितो यः सलिलव्यूहो जलसमूहस्तेन तुच्छे वारां पत्यौ समुद्रे । अत एव पटुतररयं मनोहरवेगं यथा स्यादेवं निम्नगा नद्यः संनिपेतुर्मिलन्ति स्म । कीदृश्यः । पूर्वं तिमिभिर्मत्स्यभेदैः समुद्रजलस्य लवणः स्वाद उपलब्धः शैलक्षेपादुच्छलितलवणमयजलपूरैस्तुच्छे समुद्रे तेभ्यस्तिमिभ्यो जलानां मधुरं स्वादं प्रकाशयन्त्यः । सेतोर्बन्धस्योद्योगे उपक्रमे सति । कालेन क्रमेण । तिमिभ्य इति तादर्थ्ये चतुर्थी । **सद्य इति** । ये सेतुशैलाः सेत्वर्थं पर्वताः पुरस्तात्प्रथमं विन्यस्ताः । अर्थात्सेतौ । यद्वा पुरस्तात्प्रथमं विन्यस्तास्तटे जलनिधिं न प्राप्तास्ते पर्वता निशि निशि प्रतिरात्रं ज्वलद्भिरोषधीनां निवहैर्हेतुभूतैः तदात्वं तत्कालः तत्रोषितमवस्थितं यद्वानरसैन्यं तस्य स्मारिणो दृश्यन्ते । ओषधीनां तेजसा पर्वताः कपीनां कपिशत्वाद्वानरसैन्यनिवासभ्रममुत्पादयन्तीति भावः । कीदृशाः । दरीभिः कंदराभिर्जलधिं पीत्वा अनन्तरं जलाभावाद्दृष्टो यो मेनाक एव बन्धुः । मेनाकस्य समुद्रमध्यस्थितत्वात् । तस्य प्रीत्या प्रौढ उपचितो योऽश्रुपूर आनन्दाश्रुसमूहस्तेन द्विगुणो महिमा महत्त्वं येषां तैर्निर्झरैः पुनर्जलधिं पूरयन्तः । सेतुशैला इति शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । 'तत्कालस्तु तदात्वं स्यात्' इत्यमरः । **अज्जउत्तेति** । 'आर्यपुत्र, गौरीगुरोर्गिरीन्द्रस्य युवराजो जलनिधिगर्भवसतिर्मेनाको

---

१. 'सेतूद्योगात्'. २. 'अन्यमन्यं'. ३. 'पटुतरममूः'. ४. 'जलनिधिमचिरं.'

रामः—(विहस्य[1]।) आं जानकि, आम्।

क्रौञ्चं विमुच्य[2] पुत्रं च पितरं च हिमालयम्।
प्रविश्य जलधिं पक्षौ रक्षतानेन[3] किंकृतम्॥ २३॥

सीता—(हसन्ती पुष्पकं प्रति।) विमाणराअ, गअणमग्गचंकमणकोदूहलुल्लसिअमाणसाह्मि। ता उण्णमेहि दाव।

रामः—(सकौतुकस्मितम्।) देवि रत्नगर्भागर्भरत्नशलाके[4], पश्य पश्य।

यथा यथा परं व्योम विमानमधिरोहति।
तथा तथापसर्पन्ति परतः परितो दिशः॥ २४॥

किं च।

आसन्नतपनाश्यानत्वचः पुष्पकपीडिताः।
गगनार्णवयादांसि स्तिम्यन्ति[5] स्तनयन्निव॥ २५॥

---

जानामि पक्षच्छेदमपि विना स्थावरीभूतः' [इति च्छाया।] इह गौरीगुरोर्हिमालयस्य। युवराजः कृताभिषेकः पुत्रः। गर्भो मध्यम्। जानामीत्यत्र वाक्यार्थस्यैव कर्मता। इतिरध्याहार्यो वा। अपिर्भिन्नक्रमः। तेन पदच्छेदं विनापीत्यर्थः। स्थावरः स्थिरः। क्रौञ्चं गिरिभेदम्। किंकृतं कुत्सितं कृतम्। पितापुत्रयोस्त्यागात्। यद्वा किं कृतम्, अपि तु न किमपि कृतमित्यर्थः। **विमाणेति**। 'विमानराज, गगनमार्गचङ्क्रमणकौतूहलोल्लसितमानसास्मि। तदुन्नम तावत्' [इति च्छाया।] इह चङ्क्रमणं कौटिल्यगमनम्। 'नित्यं कौटिल्ये गतौ' इति यङ्। 'नुगतोऽनुनासिकान्तस्य' इति नुक्। उन्नम ऊर्ध्वं गच्छ। 'उल्लफलिदमाणसह्मि' इति पाठे उल्लफलिदशब्दो देशी उत्कण्ठिते वर्तते। 'हल्लहलमाणसह्मि' इति पाठे हल्लहलशब्दोऽपि देशी उत्सुकतामाह। **यथेति**। विमानं कर्तृ। परमुपरि। व्योम कर्म। अपसर्पन्ति पलायन्ते। परतोऽन्यस्थानम्। परितः सर्वतः। 'परतः परतः' इति पाठे 'नित्यवीप्सयोः' इति वीप्सायां द्विरुक्तिः। **आसन्नेति**। आसन्नो निकटो यस्तपनः सूर्यस्तस्य तेजसा आश्यानाः शुष्कास्त्वच इव त्वच एकदेशा येषां तादृशाः स्तनयित्नवो मेघाः स्तिम्यन्ति आर्द्रीभूताः शब्दं कुर्वन्ति। यद्यपि 'स्तिमिर् आर्द्रीभावे' दैवादिक आर्द्रतामात्रे पठ्यते, तथापि स्वभावादार्द्रीभावपूर्वकशब्दे तस्य प्रयोगः। तथैव सहचारात्। यादांसि जलजन्तवः। अजहल्लिङ्गतया

---

१. 'विहस्य' इति पुस्तकान्तरे नास्ति. २. 'विलुप्य'. ३. 'तेन'. ४. 'रत्नगर्भागर्भरत्नशलाके' इति पुस्तकान्तरे नास्ति. ५. 'तिम्यन्ति'.

अपि[1] च ।

अमी ते गम्भीरस्तनितरवरौद्रा नयनयो-
रनायुष्यं पुष्यन्त्यवतमसमुच्चैर्जलमुचः ।
विसर्पद्भिर्येषामुपरि परमिन्दोः परिमलै-
रसंबाधज्योत्स्नातिमिरचयचित्रं वियदभूत् ॥ २६ ॥

**सुग्रीवः**—(अधोऽवलोक्य सकौतुकं रामं प्रति ।) देव, दूरादवागवलोकय[2] तावत् ।

निह्नुतोन्नतनतप्रविभक्तिः स्वस्ववर्णविनिविष्टपदार्था ।
अम्बुराशिपरिवेषवती भूश्चित्रकुट्टिममिव प्रतिभाति ॥ २७ ॥

अपि च देव,

अयमनेन महोदधिभोगिना वलयितो वसुधाफणमण्डलः ।
जगदनर्घमवाप्य भवादृशं किमपि रत्नमहंकुरुतेतराम् ॥ २८ ॥

---

यादःस्तनयित्नुशब्दयोः सामानाधिकरण्यम् । **अमी इति** । अमी ते जलमुचो मेघा नेत्रयोरनायुष्यमनायुःप्रयोजनकमवतमसं क्षीणान्धकारमुच्चैरत्यर्थेन पुष्यन्ति पुष्टं कुर्वन्ति । यद्वा उच्चैर्जलमुचो महामेघाः । कीदृशाः । गम्भीरं मन्द्रं स्तनितं मेघध्वनिस्तद्रूपो रवस्तेन रौद्रा भयंकराः । येषां मेघानां परिमलैर्विमर्दैरसंबाधा असंकटा । विरलेति यावत् । या ज्योत्स्ना तिमिरचयश्च ताभ्यां चित्रं शुक्लकृष्णवर्णं वियदाकाशमभूद्वृत्तम् । कीदृशैः । इन्दोरुपरि परं चाधो विसर्पद्भिः । यद्वा येषामुपरि परिमलैरित्यन्वयः । इन्दोरध इत्यन्वयः । अवतमसमिति 'अवसमन्धेभ्यस्तमसः' इत्यच् । क्षीणेऽवतमसं तमः' इत्यमरः । 'स्यात्परिमलोऽतिमर्दातिमनोहरगन्धयोश्चापि' इति मेदिनीकरः । 'संबाधः संकटे क्षेपे' इति विश्वः । **निह्नुतेति** । निह्नुत आच्छादितः । प्रविभक्तिः कुटिलता विभागो वा । वर्णाः शुक्लादयः । विनिविष्टः स्थितः । पदार्थो वस्तु । स्वे स्वे वर्णे विनिविष्टाः स्थिताः पदार्था द्रव्याणि यस्यां सा । दूरात्पदार्थविशेषतया न ज्ञाताः शुक्लादिवर्णशालितयैव परमुपलभ्यन्त इति भावः । परिवेषो वेष्टनम् । चित्रमाश्चर्यम् । कुट्टिमं भूमिकर्म । **अयमिति** । अयं वसुधैव फणमण्डलः अनेन महोदधिभोगिना समुद्ररूपसर्पेण वलयितो वेष्टितः सन् भवादृशं जगतामनर्घं श्रेष्ठं रत्नमवाप्य अहंकुरुतेतराम् । अत्यर्थमहंकारं करोतीत्यर्थः । सर्पेण कृष्णवर्णत्वात्समुद्रस्य रूपणम् । अब्धिव्योम्नोः कृष्णत्वं कविसंप्रदायः । अनर्घं श्रेष्ठं भवादृशं त्वां रत्नं प्राप्य । 'जातौ जातौ

---

१. 'अपि च' इति पुस्तकान्तरे नास्ति. २. 'दूरादर्वागवलोकय'; 'दूरादवलोकय'.

**सीता**—(पुरो दर्शयन्ती।) को एसो कप्पाणलज्जालाकलावकढिज्जमाणजलणिहिलवणत्थवकणिम्मलअब्भंलिहसिहरसहस्समहुरो महीहरो पलोइज्जदि।

**विभीषणः**—देवि,

पुरः प्रालेयशैलोऽयं यस्मिन्मकरकेतवे।
मृतसंजीवनी दुर्गा महौषधिरजायत॥ २९॥

**सीता**—(सकौतुकम्।) अवि इध ज्जेव चन्दसेहरणअणाणले आहुदीभूदो भअवं मम्महो।

**विभीषणः**—आं देवि[1], आम्। इयमुत्तरेण देवदारुवनलेखा विषमशरदुरन्तसाक्षिणी।

पुरा पुरां भेत्तुरिह त्रिनेत्रीशृङ्गाटके तुल्यरुषि स्थितेऽपि।
धग्धग्धगित्यज्वलदेकमन्ये तद्धूमपीडामपि नासहेताम्॥ ३०॥[2]

**रामः**—किमुच्यते।

नीललोहितललाटलाञ्छने लोचने जयति कोपपावकः।
रक्षितस्य जगदन्तहेतवे यस्य संज्वलनमात्मभूरभूत्॥ ३१॥

---

यदुत्कृष्टं तद्धि रत्नं प्रचक्षते' इति विश्वः। **को एसो इति**। 'क एष कल्पानलज्वालाकलापकथ्यमानजलनिधिलवणस्तवकनिर्मलाभ्रंलिहशिखरसहस्रमधुरो महीधरः प्रलोक्यते' [इति च्छाया।] इह स्तवको गुच्छः। मधुरो हृद्यः। **पुर इति**। प्रालेयशैलो हिमालयः। मकरकेतवे कंदर्पाय। तादर्थ्ये चतुर्थी। मृतः संजीव्यतेऽनया। करणे ल्युट्। टित्वात् ङीप्। दुर्गा गौरी। दुर्गैव महौषधिः। नयनानलदग्धः कामो महेशेन देही कृतो गौरीग्रहेणेति गौरी मृतसंजीवनी महौषधिः। महौषधिरपि मृतसंजीवनी भवतीति ध्वनिः। **अवि इध ज्जेवेति**। 'अपि इहैव चन्द्रशेखरनयनानले आहुतीभूतो भगवान्मन्मथः' [इति च्छाया।] इह आहुतीभूतो हवनीयद्रव्यमभूत्। लेखा पङ्क्तिः। विषमशरः कामः। दुरन्तो दाहः। **पुरेति**। पुरा पूर्वं इह देवदारुवने पुरां भेत्तुः शिवस्य त्रिनेत्री नेत्रत्रयं सैव शृङ्गाटकं वारिकण्टकं 'सिङ्गाडा' इति प्रसिद्धं चतुष्पथं वा तस्मिन् तुल्यक्रोधेऽपि स्थिते सति एकनेत्रं कर्तृ, धक् धक् धक् इत्यनेनाकारेण कंदर्पदाहार्थमज्वलज्ज्वलितम्। अन्ये इतरे नेत्रे तस्य ललाटनेत्राग्नेर्धूमव्यथामपि न असहेतां न सहेते स्म। धगित्यव्यक्तानुकरणम्। 'शृङ्गाटकं भवेद्वारिकण्टके च चतुष्पथे' इति

---

१. 'जानकि'. २. 'धगद्धगित्यज्वलदेक–'

**सीता**—(रामं प्रति ।) अज्जउत्त, तधा णिरणुक्कोसो कधं उण पडिणि-वुत्तो महादेओ देवीए ।

**रामः**—

स्मरपरिभवनिःसहायदीर्घैरथ सुभगंकरणैरियं तपोभिः ।
तदकृत यदसौ निजेऽपि देहे जयति जगत्पतिरात्मनाद्वितीयः ॥ ३२ ॥

**विभीषणः**—(सपरिहासम् ।)

चिरमनया तपसित्वा कपालविषविषधरैकचित्तस्य ।
चक्रे हरस्य मूर्तिः फलमर्धं फलदमर्धं च ॥ ३३ ॥

**सीता**—(विहस्य तं प्रति सकौतुकम् ।) कदरस्सिं उण संणिवेसे भअव-दीए सव्वमङ्गलाए पाणिग्गहणमङ्गलं आसी ।

**विभीषणः**—इदं पुरस्तादोषधिप्रस्थं नाम नगराजनगरम् । अत्र हि

---

मेदिनीकरः । **नीलेति** । नीललोहितो हरः । लाञ्छनं चिह्नम् । जगदन्तः प्रलयः । संज्वलनं संधुक्षणकाष्ठम् । आत्मभूः कामः । कामं काष्ठं प्राप्य ज्वलितो हराक्षिज्वलनो जगत्त्रयं धक्ष्यतीति भावः । **अज्जउत्तेति** । 'आर्यपुत्र, तथा निरनुक्रोशः कथं पुनः प्रतिनिवृत्तो महादेवो देव्यै' [इति च्छाया ।] इह निरनुक्रोशो निर्दयः । प्रतिनिवृत्तः संमुखीभूतः । **स्मरेति** । इयं गौरी असुभगः सुभगः क्रियते यैस्तैस्तपोभिस्तदकृत कृतवती यदसौ जगत्पतिः शिवो निजे स्वीयेऽपि शरीरे आत्मना स्वेन द्वितीयो द्विसंख्यापूरको जयति वर्धते । एका गौरी द्वितीयस्तु स्वयं भगवान् इत्येकस्मिञ्शरीरेऽर्धनारीश्वरोऽभू-दित्यर्थः । सुभगंकरणेति 'आढ्यसुभग–' इति करणे ख्युन् । 'अरुर्द्विषत्–' इति मुम् । आत्मनाद्वितीय इत्यत्र 'आत्मनश्च पूरणे' इति तृतीयाया अलुक् । **चिरमिति** । अनया गौर्या चिरं तपसित्वा तपश्चरित्वा हरस्य मूर्तिः शरीरमर्धं फलं चक्रे कृतम् । गौर्या तदर्धप्राप्तेः । यद्धि प्राप्यते तत्फलम् । अर्धं च फलदं कृतम् । तदर्धस्य फलदातृत्वात् । 'मूर्तेः' इति पाठे कायस्यार्धं फलमर्धं च फलदमित्यर्थः स्फुट एव । तपसित्वेति तपश्च-रतीत्यर्थे 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ् । 'क्यस्य विभाषा' इति यलोपः । 'वृष–' इति पाठे वृषो वृषभः । विषधरो वासुकिः । 'मूर्तिः काठिन्यकाययोः' इत्यमरः । **कदरस्सिं इति** । 'कतरस्मिन्पुनः संनिवेशे भगवत्याः सर्वमङ्गलायाः पा-णिग्रहणमङ्गलमासीत्' [इति च्छाया ।] इह कतरस्मिन्कुत्र । संनिवेशः स्थानम् । सर्वमङ्गला गौरी । ओषधिप्रस्थं हिमालयस्य पादशैलः । नगराजो हिमालयः । संप्रदाता

---

१. 'सहासम्'.

संप्रदातरि महौषधीमये भूधरे सुखमुवाह पार्वतीम् ।
मूढकङ्कणफणीन्द्रनिर्भयां तारकेश्वरकिशोरशेखरः ॥ ३४ ॥

रामः—आं देवि, इहैव

पितरि निजतुहिनसंपत्कल्पितहेमन्तविभ्रमे गौरी ।
निर्मदभुजंगभूषणमभीषणं प्रियकरं भेजे ॥ ३५ ॥

सीता—(सस्मितम् ।) अज्जउत्त, अवि एदस्सिं जेव्व मअणतणुदहणवइअरणिरप्पणो फुडमविस्ससन्तीए गोरीए चन्दचूडो संघडिदो णिअसरीरेण ।

रामः—(विहस्य ।) आं देवि,

एतस्यां हि तुषारभूधरशिरःसीम्नि प्रियार्धेन च
स्वेनार्धेन च तादृशे पशुपतौ वृत्तेऽर्धनारीश्वरे ।
शेषेणार्धयुगेन सप्रहसनं गौरीसखीभिस्तदा
चक्रे दक्षिणवामयोर्विनिमयादन्योऽर्धनारीश्वरः ॥ ३६ ॥

---

सम्यक्प्रदानकर्ता । संप्रदातरि सतीत्यर्थः । तारकेश्वरश्चन्द्रः । किशोरो बालः । स शेखरं यस्य स हरः मुग्धकङ्कणसर्पाभयमन्यां गौरीं सुखं यथा स्यादेवमुवाह परिणयति स्म । अमृतरश्मेर्बालत्वेऽपि कन्यादातुर्हिममयत्वान्महौषधीमयत्वाच्च सर्पो निःसहाङ्गस्तेन त्वभयंमन्याया गौर्याः सुखपरिणय इति भावः । 'किशोरो बालकेऽपि स्यात्' इति शाश्वतः । हेमन्तस्य विभ्रमो विलासो यस्य तस्मिन् । हेमन्ते सर्पा निर्मदा भवन्तीति प्रसिद्धिः । अभीषणमभयंकरम् । प्रियकरं हरहस्तम् । **अज्जउत्तेति** । 'आर्यपुत्र, अप्येतस्मिन्नेव मदनतनुदहनव्यतिकरनिरात्मीयः स्फुटमविश्वसन्त्या गौर्या चन्द्रचूडः संघटितो निजशरीरेण' [इति च्छाया ।] इह व्यतिकरः संबन्धस्तेन निरात्मीयोऽस्वीयः । 'वइरणिप्पण्णो' इति पाठे निष्पन्नवैरः । प्राकृते पूर्वनिपातानियमः । चन्द्रचूडो हरः । **एतस्यामिति** । एतस्यां हिमालयशिरःसीमायां तादृशे प्रसिद्धे पशुपतौ शिवे प्रियार्धेन स्वेनार्धेन च अर्धनारीश्वरे वृत्ते सति सप्रहसनं साहसं यथा स्यादेवं शेषेणावशिष्टेन गौर्याः शिवस्य चार्धयुगेन दक्षिणवामयोर्विनिमयादन्योन्यपरीवर्तादन्योऽर्धनारीश्वरो गौरीसखीभिश्चक्रे । कृत इत्यर्थः । दक्षिणेन गौरी, वामेन शंकर इति विपर्यासः । अत एव हासः । अर्धं नार्या अर्धनारी सा ईश्वरा यस्य सोऽर्धनारीश्वरः । न तु अर्धं नारी यस्येति समासं कृत्वा ईश्वरशब्देन कर्मधारयः । एवं हि कपि सति अर्धनारीकेश्वर

---

१. 'गूढ'; 'मुग्ध'.

अपि च।

संभोगानतिरिच्यमानविभवो यद्विप्रलम्भो रस-
स्तद्दिव्यं मिथुनं परस्परपरिस्यूतं नमस्कुर्महे।
एकस्याः प्रतिबिम्बसंभृतविपर्यासे मुहुर्दर्पणे
सव्याङ्गस्थितिकौतुकं शमयति स्वामी स यत्रापरः॥ ३७॥

**विभीषणः**—देव,

स्वच्छन्दैकस्तनश्रीरुभयमतमिलन्मौलिचन्द्रः[2] फणीन्द्र-
प्राचीनावीतवाही सुखयतु भगवानर्धनारीश्वरो वः।
यस्यार्धे विश्वदाहव्यसनविसृमरं[3] ज्योतिरर्धे कृपोद्य-
द्बाष्पं चान्योन्यवेगप्रहतिसिमसिमाकारि चक्षुस्तृतीयम्॥ ३८॥

---

इति स्यात्। **संभोगेति**। तद्दिव्यं मिथुनं स्त्रीपुंसौ नमस्कुर्महे। कीदृशम्। परस्परमन्योन्यं परिस्यूतं मिलितम्। यदित्यव्ययं यस्यार्थे। यस्य विप्रलम्भो रसो विप्रलम्भरूपः शृङ्गारः संभोगात्[1] मिलितस्त्रीपुरुषचेष्टाविशेषरूपादनतिरिच्यमानो विवेक्तुमशक्यो विभवो वैभवं यस्य सः। यत्र मिथुने संभोग एव परं शृङ्गारो न विप्रलम्भः। संभोगश्च मिलितस्त्रीपुरुषयोश्चेष्टाविशेषः स चात्र नित्यमेवेति भावः। 'शृङ्गारः शुचिरुज्ज्वलः स्मरकलानिर्वेदसंयोगतो हावार्थादुपपद्यते निरुपमाद्भावात्सुखैकाश्रयः। नारीनायकयोः परस्परभवत्संश्लेषविश्लेषजः संभोगः स च विप्रलम्भ इति च द्वेधा समुत्कीर्तितः॥ भ्रूविक्षेपकटाक्षवीक्षणकलास्मेरास्यरोमाञ्चितैरन्यैश्चापि विलासचेष्टितलयैरेषोऽभिनेयो नटैः। संभोगेऽप्यथ विप्रलम्भनविधावस्तु प्रपातानतास्मेरास्यश्रवणोपतापि (?) वचनक्ष्मातल्पसंसेवनैः॥' इति संगीतकल्पतरुः। यत्र मिथुने दर्पणे आदर्शे प्रतिबिम्बे प्रतिकृतौ संभृत ऊर्जितः। उपदर्शित इति यावत्। यो विपर्यासो वैपरीत्यं तस्मिन्सति एकस्या गौर्याः सव्याङ्गस्थितिकौतुकं वामाङ्गावस्थानकुतूहलमपरः स्वामी शिवः शमयति शान्तं करोति। अयं भावः—शरीरस्य दक्षिणभागं विहाय वामभागे मां धारयतीति स्वसौभाग्याय शुद्धायां गौर्यां दर्पणे वामं दक्षिणं दक्षिणं च वामं दृश्यत इत्याशयेन भगवता 'आदर्शे पश्य तावत्, किं दक्षिणभागे धृतासि उत वामभागे' इत्युक्ताया गौर्या आदर्शदर्शने तथा ज्ञानमभूदिति। 'सव्यं दक्षिणवामयोः' इति विश्वः। **स्वच्छन्देति**। भगवानर्धनारीश्वरो वो युष्मान्सुखयत्विति संबन्धः। कीदृशः। अर्धस्त्रीकलात्स्वच्छन्दा स्वतन्त्रा एकस्तनस्य श्रीः शोभा यत्र सः उभयमत उभयस्वीकृतः। साधारण इति यावत्। मिलन्मौलिचन्द्रो यस्य सः। फणीन्द्र एव प्राचीनावीतम्। दक्षिणस्कन्धे

---

१. 'संयोगात्'. २. 'उभयदल—'. ३. 'विसृमरज्योतिः'.

अपि च।

> स्वेदार्द्रवामकुचमण्डलपत्रभङ्ग[1]-
> संशोषिदक्षिणकराङ्गुलिभस्मरेणुः।
> स्त्रीपुंनपुंसकपदव्यतिलङ्घिनी[2] वः
> शंभोस्तनुः सुखयतु प्रकृतिश्चतुर्थी॥ ३९॥

(अन्यतश्च[3] दर्शयन्।)

> आधत्ते दनुसूनुसूदनभुजाकेयूरवज्राङ्कुर-
> व्यूहोल्लेखपदावलीवलिमयैरङ्गैर्मुदं मन्दरः।
> आधारीकृतकूर्मपृष्ठकषणप्रक्षीणमूलोऽधुना
> जानीमः परतः पयोधिमथनादुच्चैस्तरोऽयं गिरिः॥ ४०॥

---

तिर्यग्भावेन परिधानात्। तद्वोढुं शीलं यस्य सः। ताच्छीलिको णिनिः। 'उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे। प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम्॥' इत्यमरः। यस्यार्धनारीश्वरस्य तृतीयं चक्षुः अर्धे शिवस्वरूपार्धे जगद्दाहव्यसने विस्मरं प्रसरणशीलं ज्योतिर्ज्वलनस्वरूपम्। व्यसनमासक्तिः। अर्धे च पार्वतीस्वरूपे स्त्रीत्वात् विश्वदाहेन जाता या कृपा तया उद्यद्बाष्पं यस्य तादृशम्। ज्योतिर्बाष्पयोरन्योन्यवेगयोः प्रह्लासंश्लेषेण सिमसिमारूपशब्दं कर्तुं शीलं यस्य तादृशमस्ति। अग्नौ तु स्वल्पजलसंबन्धात्सिमसिमाशब्दः स्यात्। सिमसिमेत्यव्यक्तानुकरणम्। **स्वेदेति**। हरस्य तनुर्वः सुखयतु। स्त्रीपुंनपुंसकानां पदं स्थानं तस्य व्यतिलङ्घिनी अतिक्रामिका। त्रितयस्यापि वक्तुमशक्यत्वात्। अर्धनारीश्वरतनुर्न स्त्री। सेश्वरत्वात्। न च पुरुषः। सस्त्रीकत्वात्। नापि नपुंसकम्। सेश्वरस्त्रीकत्वात्। अत एव चतुर्थी प्रकृतिः। चतुर्थं लिङ्गमित्यर्थः। 'प्रकृतिर्योनिलिङ्गयोः' इति विश्वः। कीदृशी तनुः। हरेण शृङ्गारितया गृहीतगौरीस्तनतटे सात्विकभावाविर्भावादुत्पन्नस्वेदेनार्द्रो वामकुचमण्डलपत्रभङ्गो वामस्तनमण्डलपत्रावली तत्संशोषी दक्षिणकराङ्गुलिभस्मरेणुर्यत्र सा। **आधत्त इति**। अयं मन्दरो गिरिभेदः अङ्गैर्मुदमाधत्ते। यद्वा अङ्गैर्लक्षितः। कीदृशैः। दनुसूनुर्दानवस्तत्सूदनो विष्णुस्तस्य बाहुस्थितकङ्कणहीरकाङ्कुरसमूहस्य उल्लेखपदावली विदारणस्थानपङ्क्तिरेव वलिरुदरावयवस्त्रिवली तन्मयैः। उल्लेखो विदारणम्। पदं स्थानम्। विष्णुना जलधिमथनार्थं बाहुभिर्बद्धा कूर्मपृष्ठे मन्दरो धृतस्तदा तद्बाहुहीरकैरेवं लक्ष्यत इति भावः। समुद्रमथनावसरे आधारीकृतं मथनपात्रीकृतं यत्कूर्मपृष्ठं तस्य कषणेन घर्षणेन प्रक्षीणं कृशीभूतमपचितं मूलं यस्य तादृशो यतः अतः पयोधिमथनात्परतः पूर्वमयं गिरिरुच्चैस्तरोऽत्युच्च इति जानीमः।

---

१. 'पत्रभङ्गी–'. २. 'लङ्घनीया'. ३. 'अग्रतश्च'.

**रामः**—(निर्वर्ण्य सस्मितम् ।)

तत्तादृक्फणिराजरज्जुकषणं संरूढपक्षच्छिदा-
घातारुंतुदमप्यहो कथमयं मन्थाचलः सोढवान् ।
एतेनैव दुरात्मना जलनिधेरुत्थाप्य पापामिमां
लक्ष्मीमीश्वरदुर्गतव्यवहृतिव्यस्तं जगन्निर्मितम् ॥ ४१ ॥

**सीता**—(सोद्वेगम्[1] ।) इमिणा ज्जेव्व मत्थुसेसीकिददुद्धसाअरेण चन्द-मुद्धरिअ पउसिदभत्तुणो इत्थिआजणस्स उवरि चारहली विढत्ता ।

(सर्वे हसन्ति ।)

---

**तत्तादृगिति** । तत्प्रसिद्धम् । तादृगतिगुणवत् । फणिराजो वासुकिः । स एव रज्जुर्मे-थनदोरकम् । कषणं घर्षणम् । संरूढ उपचितः । पक्षच्छिदा पक्षच्छेदः । 'इरितो वा' इत्यङ् । घातः किणः । अरुंतुदं व्रणव्यथाकरम् । नवसंरूढव्रणे घर्षणाद्दुःखं भवत्येवेत्यनु-भवसिद्धम् । 'विध्वरुषोस्तुदः' इति खश् । 'अरुर्द्विषदजन्तस्य—' इति मुम्, सलोपश्च । मन्थाचलो मन्दरः । सोढवान्कथम् । निष्फलमित्यर्थः । यद्वा केन प्रकारेण । अशक्य-त्वात् । कुतस्तन्निरर्थकमित्यत आह—एतेनैव मन्थाचलेन समुद्रादिमां लक्ष्मीमुत्थाप्य इदं जगदीश्वरदुर्गतव्यवहारेण व्यस्तमाकुलं निर्मितं कृतम् । लक्ष्म्या अनुत्पत्तौ जगदेक-प्रकृति स्यात् । ननु कोऽपि दुर्गतः कोऽपीश्वर इति । स्त्रीनिन्दामसहमाना सीता च-न्द्रात्प्राप्तसंतापा पुरुषमपि चन्द्रं निन्दयितुं स्वं लक्ष्यीकृत्याह—**इमिणा ज्जेव्वेति** । 'अनेनैव मस्तुशेषीकृतदुग्धसागरेण चन्द्रमुद्धृत्य प्रोषितभर्तृकस्य स्त्रीजनस्योपरि चार-हली विस्तीर्णा' [इति च्छाया ।] इह मस्तु तक्रविशेषो दधिजलम् 'घोल' इति प्र-सिद्धम् । 'मण्डं दधिभवं मस्तु' इत्यमरः । तथा च निःसार इत्यर्थः । चारहली पौरुषम् । देशीशब्दोऽयम् । ननु सीतायाः स्वात्मानमुद्दिश्य मन्दं पापालम्भः (?) तथा च तस्याः प्रोषितपतिकात्वमनुपपन्नम् । तथा हि भरतः—'कुतश्चित्कारणाद्यस्याः पतिर्देशान्तरं गतः । दत्त्वावधिं भृशार्ता सा भवेत्प्रोषितभर्तृका ॥' इति । उच्यते—प्रोषितभर्तृकेति विरहिण्या उपलक्षणम् । विरहिणी च कान्तसङ्गमप्राप्तवती विप्रलम्भरसमनुभवन्ती कालं क्षिपतीति स्थितिः । इदं च सीतायामप्यभूदेवेत्युपपन्नम् । यद्वा मायाहेममृगवधार्थं तद्वारणमेवावधिं दत्वा रामे देशान्तरं गतवति भवत्येव तदा सीता प्रोषितभर्तृकेति । यद्वा प्रोषिता नाम नवमी नायिका । अष्टौ नायिका इत्युपलक्षणम् । सा च सीतैव । तदुक्तं भरते—'प्रवासोऽन्यत्र गमनं भर्तुस्तच्च विशेषणम् । सीतां च कथमाचष्टे जनः प्रोषितभर्तृकाम् ॥ अन्तर्भावमपश्यद्भिः पश्यद्भिर्जनकात्मजाम् । प्रोषिता नाम नवमी नायिका स्त्रीत्युदाहृतम् ॥ आयोध्यकस्य गृहिणी राक्षसेन प्रवासिता । प्रवासविप्रलब्धातो

---

१. 'सावेगं ससंभ्रमम्'.

**विभीषणः**—(तदेव रामसूक्तं भावयन् ।) अहह ।

प्रक्षेप्तुमुदधौ लक्ष्मीं भूयोऽपि वलते मनः ।
किं तु प्रक्षिप्त एवायं पुनरायाति चन्द्रमाः ॥ ४२ ॥

(विमृश्य चाकाशे ।)

कस्मैचित्कपटाय कैटभरिपूरःपीठदीर्घालयां
देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किंचिदाचक्ष्महे ।
यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च ते
नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ ४३ ॥

**लक्ष्मणः**—(सहासम् ।) हन्त, सुरासुरमल्लभटीतूर्यतालनर्तकी सकलराजकुलखलीकारखर्जूला साहसिकजनसहस्रशस्त्रान्धकारखेलनखद्योती मधुमथनजीमूतविलासविद्युल्लता किमेवमुपालभ्यते । इयं हि

गुणवद्भिः सह संगममुच्चैः पदमाप्तुमुत्सुका लक्ष्मीः ।
वीरकरवालवसतिर्ध्रुवमसिधाराव्रतं चरति ॥ ४४ ॥

---

भवेत्सीताथ नायिका ॥' इति सूक्तं सुवचनम् । 'तत्तादृक्फणिराज—' इति । मनः कर्तृ । वलते लगति । किं तु प्रक्षेपोऽस्या अयुक्तः । चन्द्रः प्रक्षिप्तोऽप्यायाति । यतः सूर्याचन्द्रमसौ पश्चिमसमुद्रं प्रविश्य पूर्वसमुद्रेणोत्तिष्ठत इत्यागमः । कस्मैचिदिति । हे देवि लक्ष्मि, चेद्यदि न कुप्यसि तदा त्वामभिवाद्य नत्वा किंचिदाचक्ष्महे ब्रूमः । कीदृशीं । कस्मैचित्कपटाय । वञ्चनेन लोकविश्वासार्थमिति भावः । कैटभरिपुर्विष्णुस्तस्य हृदयपीठमेव दीर्घश्चिरकालीन आलयो निवासस्थानं यस्यास्ताम् । यत्ते मन्दिरं गृहमम्बुजन्म पद्मं किमिदमन्तः कुटिलपत्रसंनिवेशं विद्याभ्यासस्थानम् । अत एव त्वयि कुटिलतेति भावः । यच्च ते नीचान्नीचतरस्योपसर्पणं तत्किमपां जलानामाचार्यकमाचार्यत्वम् । उपदेष्टृत्वमित्यर्थः । यथा आपो नीचान्नीचतरं यान्ति तथा त्वमपीति भावः । अयमाशयः—हरिवक्षसि यच्चिरावस्थानं तल्लोकविश्वासार्थम् । पद्मे च नीचतरोपसर्पणाध्ययनाय जलसंनिधानार्थितया चिरावस्थानम् । अन्यत्र चाञ्चल्यमेवेति । मल्लभटी तूर्यम् । 'मलहली' इति प्रसिद्धं तूर्यं यद्युद्धकाले ताड्यते । राजकुलं राजसमूहस्तस्य खलीकारः परिभवस्तत्र खर्जूला कण्डूदायिनी । खर्जूं लातीति खर्जूला । 'आतोऽनुपसर्गे कः' । आत्मनिरपेक्षं कर्म साहसम् । साहसेन दीव्यते । 'तेन दीव्यति—' इति ठक् । साहसिकः । तेषां खड्गान्धकारे कृपाणतमसि खेलने क्रीडायां खद्योती ज्योतिरिङ्गणरूपा । अन्यापि खद्योती तमसि खेलतीति ध्वनिः । लक्ष्मीनिमित्तकमेव खड्गादिप्रहरणमिति भावः । मधुमथनो विष्णुः स एव जीमूतो मेघः । खद्योतीत्वं विद्युल्लतात्वं च चाञ्चल्य-

---

१. 'मल्लारभटी'. २. 'साहसिकसहस्र—'.

**सीता**—(साभ्यसूयमिव ।) णिअदेव्वदुव्विलासविआरालसो लोओ लच्छीदेवीए दुज्जसवअणाइं गाएदि । (पुरो दर्शयन्ती ।) को एसो दीसदि दिअसकूडीकिदजोण्हाविच्छद्दपडिरूवो गिरी ।

**विभीषणः**—देवि,

सोऽयं कैलासशैलः स्फटिकमणिभुवामंशुजालैर्ज्वलद्भि-
श्छाया पीतापि यत्र प्रतिकृतिभिरुपस्थाप्यते पादपानाम् ।
यत्रोपान्तोपसर्पत्तपनकरधृतस्यापि पद्मस्य मुद्रा-
मुद्दामानो दिशन्ति त्रिपुरहरशिरश्चन्द्रलेखामयूखाः ॥ ४५ ॥

**रामः**—हन्त, शतधा दृश्यमानोऽपि न चक्षुरकौतुकं करोति ।

गिरिः कैलासोऽयं दशवदनकेयूरविलस-
न्मणिश्रेणीपत्राङ्कुरमकरमुद्राङ्कितशिलः ।
अमुष्मिन्नारुह्य स्फटिकमयसर्वाङ्गविमले
निरीक्षन्ते यक्षाः फणिपतिपुरस्यापि चरितम् ॥ ४६ ॥

---

स्फोरणाय । उच्चैः पदं महोत्कर्षेण (महोत्कर्षम्) । करवालः खड्गः । ध्रुवमुत्प्रेक्षे । असिधाराव्रतमसिधारायां संचरणरूपं व्रतमित्यर्थः । चरति करोति । **णिअदेव्वेति** । 'निजदैवदुर्विलासविचारालसो लोको लक्ष्मीदेव्या दुर्यशोवचनानि गायति । क एष दृश्यते दिवसकूटीकृतज्योत्स्नाविच्छर्दप्रतिरूपो गिरिः ॥' [इति च्छाया ।] इह दैवं भाग्यम् । दुर्विलासो दुर्विपाकः । विच्छर्दः समूहः । प्रतिरूपस्तुल्यः । **सोऽयमिति** । सोऽयं कैलासनामा शैलः । अस्तीत्यध्याहार्यम् । यत्र शैले पादपानां वृक्षाणां छाया स्फटिकांशुजालैः पीताप्यपह्नुतापि प्रतिकृतिभिः प्रतिबिम्बैरुत्थाप्यते व्यक्तीक्रियते । शून्यनभोभागे स्फाटिककिरणैरेव वृक्षच्छाया नाशिता । स्फटिकभुवि तु प्रतिबिम्बेन गृह्यत इत्यर्थः । गिरेरत्युच्चतया रवेरुपान्तगमनम् । करो हस्तो रश्मिश्च । धृतं विकासितं विधृतं च । पद्ममब्जम् । मुद्रा संकोचः । त्रिपुरहरो महेशः । लेखा कला तस्या मयूखाः किरणाः । प्रकाशकसूर्यकिरणसमीपस्थितान्यपि पद्मानि अतिसंनिहितप्रबलमहादेवमस्तकस्थचन्द्रकिरणा मुद्रयन्तीति भावः । **गिरिरिति** । केयूरमङ्गदम् । पत्राङ्कुरं पत्रावली । मकरश्चिह्नविशेषस्तस्य मुद्रया चिह्नेनाङ्किता शिला यस्य सः । अमुष्मिन्कैलासे स्फटिकमयसर्वाङ्गविमले आरुह्य यक्षाः फणिपतिपुरस्यापि वासुकिनगरस्य पातालस्यापि व्यवहारं पश्यन्ति । अत्युच्चत्वात् । यद्वा अतिविमलस्फटिकतेजसा चक्षुस्तेजःप्रसरणस्याप्रतिबन्धा-

---

१. 'दृश्यमानेन चक्षुः'; 'दृश्यगानो न चक्षुः'.

अपि च।

दशमुखभुजदण्डमण्डलीनां दृढपरिपीडनपीतमेखलोऽयम्।
जलगृहकवितर्दिकासुखानि स्फटिकगिरिर्गिरिशस्य निर्मिमीते॥ ४७॥

विभीषणः—(सीतां प्रति।) देवि, दृश्यन्ताममी

कैलासाद्रितटीषु धूर्जटिजटालंकारचन्द्राङ्कुर-
ज्योत्स्नाकन्दलिताभिरिन्दुदृषदामद्भिर्नदीमातृकाः।
गौरीहस्तगुणप्रवृद्धवपुषः पुष्प्यन्ति धात्रेयक-
भ्रातृस्नेहसहोढषण्मुखशिशुक्रीडासुखाः शाखिनः॥ ४८॥

अपि चास्य नित्यमधित्यकावासी परमेश्वरः।

सहस्राक्षैरङ्गैर्नमसितरि नीलोत्पलमयी-
मिवात्मानं मालामुपनयति पत्यौ मखभुजाम्।
जिघृक्षौ च क्रीडारभसिनि कुमारे सह गणै-
र्हसन्वो भद्राणि द्रढयतु मृडानीपरिवृढः॥ ४९॥

---

दिति भावः। **दशमुखेति**। दशमुखस्य रावणस्य भुजदण्डमण्डलीनां दृढपरिपीडनेन गाढयन्त्रणेन पीता दुर्बलीकृता मेखला यस्य सोऽयं कैलासो महादेवस्य सलिलगृहं 'जलहरी' इति ख्यातं तदेव वितर्दिका वेदिका तत्सुखानि निर्मिमीते ददाति। 'माङ् माने'। शपः श्लुः। 'भृञामित्' इतीत्त्वम्। जलनाड्या रावणभुजमण्डलीयन्त्रणेनोर्ध्वगमनाद्धारागृहसुखमिति भावः। 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः। **कैलासेति**। अमी शाखिनो वृक्षाः कैलासपर्वतस्य तटीषु पुष्प्यन्ति पुष्पवन्तो भवन्ति। महादेवजटालंकारीभूतो यश्चन्द्राङ्कुरस्तस्य ज्योत्स्नया कन्दलिताभिः पल्लविताभिरिन्दुदृषदां चन्द्रकान्तमणीनामद्भिर्जलैर्नदीमातृकाः। नदी माता परिपालिका येषां ते। चन्द्रकान्तप्रसरणजलप्रवाहो नदीत्वेन रूपितः। गौर्या हस्तगुणेन भद्रकहस्तकर्मणा प्रवृद्धवपुषः। अत एव धात्रेयकभ्राता कार्तिकेयः। तन्मात्रा गौर्या शाखिनां पोषणात्। धात्री उपमाता गौरी। धात्रेयकभ्रातृस्नेहेन हेतुना सहोढं सहप्राप्तं षण्मुखशिशुक्रीडासुखं यैस्ते। यादृशं सुखं गौरीतः षण्मुखेन लब्धं तादृशं शाखिभिरपि तैस्तेन सहैव लब्धमिति भावः। गिरेरुपरिभूरधित्यका। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः। **सहस्राक्षैरिति**। सहस्रमक्षीणि येषु तादृशैरङ्गैः कायावयवैर्नमसितरि नतिं कुर्वति सति मखभुजां पत्यौ इन्द्रे आत्मानं स्वं चक्षुषां नीलोत्पलसाम्यान्नीलोत्पलमयीमिव मालारूपामुपनयति सति

---

१. 'मण्डलीभिः'. २. 'निविडनिपीडन'.

किं च ।

यन्नाट्यभ्रमिघूर्णमानवसुधाचक्राधिरूढे भृशं
　मेरौ पार्श्वनिविष्टवासरनिशाचक्रे परिभ्राम्यति ।
तैजस्यस्तडितो भवन्तु शतशो दृष्टा हि जाताः कथं
　तामस्योऽपि स वः पुनातु जगतामन्तेष्टियज्वा विभुः ॥ ५० ॥

**लक्ष्मणः**—

जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन ।
इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुलेखा ॥ ५१ ॥

**सीता**—(सपरिहासम् ।) एदस्स दंदसूअणरकरोडिमुण्डमालामण्डणस्स मसाणवासिणो भूसणता जेव्व रोहिणीवल्लहस्स कलंको, किं तवस्सिणा कुरङ्गएण ।

---

क्रीडारभसिनि कुमारे कार्तिकेये तां च पद्ममालाभ्रमेण जिघृक्षौ ग्रहीतुमिच्छौ सति हसन्सन् मृडानीप्रभुर्महेशो वो युष्माकं कल्याणानि द्रढयत्वित्यर्थः । नमसितरीति 'नमो वरिव–' इति क्यच् । 'यस्य हलः' इति यलोपः । परिवृढः प्रभुः । 'प्रभौ परिवृढः' इति निपातनम् । **यन्नाट्येति** । स भगवान् अन्तेष्टिरन्तयज्ञः प्रलयनामा तस्य यज्वा याज्ञिको विभुः सर्वव्यापी महादेवो वो युष्मान्पुनातु । यस्य प्रलयार्थं नाट्ये भ्रम्या मण्डलीभ्रमेण घूर्णमानं भ्रमितं यद्भूचक्रं तत्राधिरूढे मेरौ सुमेरौ अत एव भृशमत्यर्थं भ्राम्यति सति तैजस्यस्तेजोविकारास्तडितो विद्युतो भवन्तु । हि यतस्ताः शतशो वहुधा दृष्टाः । तामस्यस्तमोविकारा अपि तडितः कथं भवन्तु । अदृष्टपूर्वत्वात् । तथापि दृश्यन्त इत्याश्चर्यम् । ननु कथं तैजस्यस्तामस्यश्च तडितो भवन्तीत्यत आह— मेरौ कीदृशे । पार्श्वे समीपे निविष्टाभ्यां दिनरात्रिभ्यां चित्रे कर्बुरे । अयमाशयः— परमेश्वरनाट्येन परिभ्राम्यति सुमेरौ समीपस्थितदिवसरात्र्योरपि भ्रमणेन यथाक्रमं तैजस्यस्तामस्यश्च तडितो जाता इति । **जयतीति** । इह कैलासतटीभूमौ शिवशिरःशशिलेखा जयति । कीदृशी । सिंहनखाग्रवत्कुटिला वक्रा । अत एव सिंहनखभ्रमजन्यत्रासादनुपसर्पतेव पलायमानेनेव हरिणेन परिमुषितं त्यक्तं लक्ष्म कलङ्को यस्य तादृशी । हरिणेनेति 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । करजो नखः । अनुपसर्पतेवेत्यत्र इवशब्द उत्प्रेक्षायाम् । 'अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्ष्यते या तु तामुत्प्रेक्षां विदुर्बुधाः ॥ 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥' इति दण्डी । वस्तुतस्तु—हरशिरःस्थितचन्द्रलेखायां कलङ्को न वर्तत एवेति तत्रोत्प्रेक्षा । **एदस्सेति** । 'एतस्य दंदशूकनरकरोटिमुण्डमाला-

---

१. 'पार्श्वनिवेशि–'; 'पार्श्वनिवासि–'.

**विभीषणः**—(विहस्य ।) शङ्के भगवानपि न मृगाङ्कमलंकारकामः कलयति । तथा हि[1] ।

सहचरपिशाचपरिषत्प्रसत्तये कामचारतो रजनीम् ।
कारयितुमिव कपाली शिरसि[2] निशाकरमयं वहति ॥ ५२ ॥

(सर्वे हसन्ति ।)

**रामः** (सबहुमानम् ।)

श्रीकण्ठस्य कपर्दबन्धनपरिश्रान्तोरगग्रामणी-
संदष्टां मुकुटावतंसकलिकां वन्दे कलामैन्दवीम् ।
या विम्बप्रतिपूरणाय परितो निष्पीड्य संदंशिका-
यन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥ ५३ ॥

(पुष्पकं प्रति ।) विमानराज, मनागुन्नम्यताम्[3] । आलोकयतु[4] मैथिली सुमेरुशिखराणि ।

**विभीषणः**—(सीतां प्रति ।) देवि पश्य पश्य ।

---

मण्डनस्य श्मशानवासिनो भूषणतैव रोहिणीवल्लभस्य कलङ्कः, किं तपस्विना कुरङ्गकेण' [इति च्छाया ।] इह दंदशूकः सर्पः । नरकरोटिर्ब्रह्मकपालास्थि । 'लडआ' इति प्रसिद्धा । रोहिणीवल्लभश्चन्द्रः । तपस्विना वराकेण । कुरङ्गकेणाल्पहरिणेन । अल्पार्थे कन् । 'भूषणताविलम्बनमेव' इति पाठे अलंकरणतारूपं विडम्बनं धर्षणमेव कलङ्क इत्यर्थः । कलयति धारयति । सहचरो द्वितीयः । परिषत्समूहः । प्रसत्तिः प्रसन्नता । कामचारत इच्छातः । पिशाचानां रात्रिचरत्वाचन्द्रोऽप्ययं निशां करोत्वितिकृत्वा शिवश्चन्द्रं वहति । एतदेव निशाकरपदोपादाने वीजम् । इवेत्युत्प्रेक्षायाम् । सबहुमानं सादरम् । **श्रीकण्ठस्येति** । ऐन्दवीमिन्दुसंबन्धिनीं कलां वन्दे नमामि स्तौमि वा । श्रीकण्ठस्य शिवस्य कपर्दबन्धनेन जटाजूटसंयमनेन परिश्रान्तो य उरगग्रामणीः सर्पराजो वासुकिस्तेन संदष्टां कवलिताम् । अवतंसो भूषणम् । कलिकेव कलिका । या कला विम्बप्रतिपूरणाय अर्थाच्चन्द्रस्य संपूर्णं मण्डलं कर्तुं संदंशिका 'संडासी' इति प्रसिद्धा सा च वासुकिरेव तद्रूपयन्त्रेण निष्पीड्य यन्त्रयित्वा महेशस्य ललाटलोचनज्वालाभिरावर्त्यते द्रवीक्रियत इव । अन्यदपि हिरण्यादिकं किंचित्पूरणाय संदंशिकया धृत्वाग्निभिरावर्त्यत इति ध्वनिः । 'ग्रामणीर्नापिते प्रभौ' इति विश्वः । 'उग्रः कपर्दी श्रीकण्ठः' इत्यमरः ।

---

१. 'तथाहि' इति पुस्तकान्तरेषु नास्ति. २. 'शिरोनिशाकर'. ३. 'उत्क्षम्यताम्'; 'उत्ताम्यताम्'. ४. 'अवलोकयतु'.

मेरोर्मेदुरयन्ति संपदमधःसंपातिभिर्ज्योतिषा-
　　माटोपैर्विटपोपरिस्थिततरुच्छायाभृतोऽधित्यकाः ।
निष्पीतासु च मासि मासि विबुधैरिन्दोः कलासु क्रमा-
　　दुद्दामप्लवमानलाञ्छनमृगच्छिन्नाग्रदर्भाङ्कुराः ॥ ५४ ॥

**लक्ष्मणः**—(सीतां प्रति ।)

एतासु पर्वतनितम्बतटीषु पश्य
　　मध्यंदिनेऽपि हरिचन्दनवाटिकेयम् ।
पक्षस्थितद्युमणिबिम्बतयातिदीर्घ-
　　च्छायावितानमधुरा मुदमादधाति ॥ ५५ ॥

अपि च ।

भूमेः स्वर्णतया फलोत्तरतरुस्मेरस्य मेरोस्तटी-
　　सीमन्तोऽयमनूरुसारथिरथप्रस्थानघण्टापथः ।
अस्मिन्नुद्ध्रियते कथंचन हयैरुद्दामचण्डातप-
　　ज्वालाजालविलीनकाञ्चनशिलाजम्बालमग्नः प्रधिः ॥ ५६ ॥

---

'कपर्दोऽस्य जटाजूटः' इत्यपि । उन्नम्यतामूर्ध्वं गम्यताम् । **मेरोरिति** । अधित्यकाः पर्वतोर्ध्वभूमयः । मेरोः संपदं हर्षं संपदं शोभां वा मेदुरयन्ति उपचितीकुर्वन्ति । कीदृश्यः । अधःसंपातिभिरधःसंचारिभिः सूर्यादीनां ज्योतिषां तेजसामाटोपैः समूहैर्हेतुभूतैः शाखोपरिस्थिततरुच्छायां बिभ्रति यास्ताः । यदा ज्योतिरूर्ध्वं तदाधश्छाया, यदा चाधस्तेजस्तदोपरिच्छाया । अत्र च मेरोरुच्चतया शैलाग्रस्थितवृक्षाणामधो ज्योतिषामाटोपादूर्ध्वमेव च्छाया । तेन च्छायानां स्थिरत्वमिति भावः । मासि मासि प्रतिमासम् 'पद्दन्नोमास्—' इत्यादिना मासशब्दस्य हलन्तो मास्आदेशः । निष्पीतासु भक्षितासु । यथापर्यायपीतस्य सुरैर्हिमांशोरिति । विबुधैर्देवैः । उद्दाम उद्भटः । मृगस्योद्दामत्वं प्रतिबन्धकचन्द्रभक्षणात् । दर्भः कुशः । **एतास्विति** । नितम्बः कटकम् । 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । मध्यंदिने दिनमध्ये । मध्यशब्दादौणादिको दिनप्रत्ययः । हरिचन्दनं देवदारुभेदः । पक्षः सुमेरोः पार्श्वम् । द्युमणिः सूर्यः । छाया प्रतिबिम्बम् । वितानो विस्तारः । मधुरा मनोज्ञा । अन्यत्र प्रातःसायंकालयोर्वृक्षच्छाया दीर्घा । अत्र तु रवेः पार्श्वस्थतया मध्याह्नेऽपि सा दीर्घेति हर्ष इति भावः । **भूमेरिति** । अयं मेरोस्तटीसीमन्तस्तटीरेखा । स्त्रीकेशरचनारेखायां सीमन्तशब्दो मुख्यः । इह तु लक्षणया रेखामात्रे प्रयुक्त इति । भूमेः स्वर्णतया फलोत्तराः फलप्रधाना ये तरवस्तैः स्मेरस्य

---

१. मूलपुस्तकेष्वयं श्लोकः 'भूमेः स्वर्णतया—' इत्याद्यग्रिमश्लोकादनन्तरं वर्तते.

(निरूप्य च सहर्षस्मितम् ।) कथमुपर्युपरि पुष्करावर्तकानभ्रमुवल्लभः । (विमृश्य।)

अद्यायं विबुधेन्द्रबान्धववधूसंभुक्तसंतानक-
स्रग्दाम्नीममरावतीं विहरते निर्वैरमैरावणः ।
यं दोर्मात्रपरिच्छदो युधि मुदोत्क्षिप्य प्रतीच्छन्मुहुः
संतेने दशभिर्निजैरपि मुखैः सांराविणं रावणः ॥ ५७ ॥

---

सहासस्य । स्वर्णादिप्रदेशे तरूणां फलोपचय इति प्रसिद्धिः । अनूरुसारथेः सूर्यस्य रथानां प्रस्थाने गमने घण्टापथो राजमार्गः । अस्मिन्सीमन्ते हयैरश्वैः अर्थादादित्यस्य प्रधिश्चक्रान्तः कथंचन कष्टसृष्ट्या उद्ध्रियते उत्तोल्यते । उद्दामा उद्भटा या चण्डातपज्वाला सूर्याचिस्तस्याः समूहस्तेन विलीना आवर्तिता द्रवीभूतेति यावत् । काञ्चनशिला सुवर्णप्रस्तरः । सैव जम्वालः कर्दमः । तत्र मग्नः । तथा च कर्दममग्नत्वात्कष्टेनोद्ध्रियत इति भावः । 'घण्टापथः संसरणम्' इत्यमरः । 'नेमिः स्त्री स्यात्प्रधिः पुमान्' इति च । उपर्युपरीति 'उपर्यध्यधसः सामीप्ये' इति द्विरुक्तिः । पुष्करावर्तकान्मेघभेदान् । 'पुष्करावर्तका मेघाः पुण्यवारिप्रवर्षिणः' इति ज्योतिःशास्त्रम् । 'उभसर्वतसोः—' इत्यादिना द्वितीया। अभ्रमुवल्लभ ऐरावतः । ऐरावतस्य पुष्करावर्तको वाहनमिति प्रसिद्धिः। **अद्यायमिति** । ऐरावण ऐरावतः निर्वैरं शत्रुशून्यं यथा स्यादेवममरावतीमिन्द्रनगरीं विहरते । भ्रमतीत्यर्थः । कर्त्रभिप्राये तङ् । विबुधेन्द्र इन्द्रस्तस्य वान्धवो मित्रं देवास्तेषां वध्वोऽप्सरसस्ताभिः संभुक्तमुपभुक्तं संतानको देववृक्षो देवपुष्पं वा तस्य स्रग्दाम स्रगेव । वज्राशनिन्यायात् । यद्वा स्रजो मालाया दाम समूहः । यद्वा स्रजा दाम वेष्टनं यत्र तादृशीम् । यमैरावणं दोर्मात्रपरिच्छदो भुजैकसहायो रावणो युधि सङ्ग्रामे मुदा हर्षेणोत्क्षिप्योर्ध्वं नीत्वा वारं वारं प्रतीच्छन्सन् स्वीयैर्दशभिर्मुखैः सांराविणं संभूय रवं संतेने वितनुते स्म । सांराविणमिति 'अभिविधौ भाव इनुण्' । 'अणिनुणः' इति स्वार्थेऽणि 'इनण्यनपत्ये' इति प्रकृतिभावान्न टिलोपः । 'संरावो बहुभिः कृतः' इत्यमरः । ननु 'दामहायनान्ताच्च' इत्यत्र 'संख्याव्ययादेः' इत्यनुवर्तते तत्कथं दाम्नीत्यत्र ङीप् । मैवम् । 'डावुभाभ्यामन्यतरस्याम्' इत्यतोऽन्यतरस्यांग्रहणादसंख्याव्ययादेरपि 'दामहायनान्ताच्च' इति ङीपो विधानात् । विहरत इत्यत्र यद्यपि विपूर्वस्य हरतेरकर्मकत्वम् । 'विहरति हरिरिह सरसि वसन्ते' इत्यादौ तथा दर्शनात् । तथापि तत्र क्रीडार्थतया विहरतेः प्रयोगः । अत्र तु भ्रमणार्थतया । तथा च सकर्मकत्वमेव । भ्रमणार्थता च धातोरनेकार्थत्वात् । 'उपसर्गेण धात्वर्थो वलादन्यत्र नीयते' इति न्यायाद्वा । न च विहरतेः क्रीडायां रूढेस्तत्त्यागे रूढिच्युतकं स्यादिति सांप्रतं विहरतेर्नानार्थत्वात् । तथाहि मेदिनीकरः—'विहारो भ्रमणे स्कन्धे लीलायां सुगतालये' इति । यद्वा देशे अत्यन्तसंयोगे

---

१. 'पुष्करावर्तकानाम्'.

**सुग्रीवः**—सत्यमगोचरे गिरां दशकण्ठक्रीडितानि ।

एकैके निवसन्ति ते भुजभृतः कस्मै निगृह्णामहे
वीरक्षेत्रमियं पुनर्वसुमती पौलस्त्यमाबिभ्रती ।
वाली त्वाह्वयमानमेनमपि यच्चक्रे कृते चक्षुषी
पश्यामः श्रवसी कृते च शृणुमस्तद्वक्तुमल्पे वयम् ॥ ५८ ॥

**रामः**—(सबहुमानम् ।)

स किं वाच्यो वाली भुजकुलिशमूलेन दशतो
दशग्रीवं यस्य प्रतिजलधि संध्याविधिरभूत् ।
कथं वा निर्वाच्यः स च दशमुखो यस्य दमने
मनागासीद्वालिव्ययचरितमेवोपकरणम् ॥ ५९ ॥

**सीता**—(रामं प्रति ।) अज्जउत्त, किं उण एदं दलिदकप्पूरसलाअमल्लकगोरअं गअणङ्गणे दीसइ ।

---

द्वितीया । 'कालभावाध्वदेशानाम्' इति न्यायात् । तथा चामरावतीं प्राप्य विहारं करोतीत्यर्थः । अगोचरे अविषये । **एकैक इति** । एकैके अनेके ते भुजबलभृतो बाहुबलधारिणो निवसन्ति । तेषु मध्ये इत्यर्थात् । कस्मै निगृह्णामहे कुत्सां कुर्मः । कस्मै इत्यत्र 'क्रियाग्रहणमपि कर्तव्यम्' इति संप्रदानता । 'ग्रह गृह्ण कुत्सायाम्' । इयं पुनर्भूमी रावणं दधाना वीरक्षेत्रं वीराणां स्थानमस्ति । वाली पुनरेनमपि रावणमपि आह्वयमानं स्पर्धमानं यच्चक्रे यादृशं परिभवभाजनं कृतवान् । कक्षास्थमित्यर्थः । तच्चक्षुषी कृते इति कृत्वा पश्यामः । श्रवसी कर्णौ कृते इति कृत्वा शृणुमः । वक्तुं तद्वयमल्पे असमर्था एव । श्रवणौ चक्षुषी च द्वे द्वे इति श्रुतं दृष्टं च । एकेनैव तु मुखेन कथं रावणपरिभवो वालिपराक्रमश्च वक्तुं शक्यः । बहुभिरेव मुखैर्वक्तुं शक्यत इति भावः । अल्पे इत्यत्र 'प्रथमचरम–' इत्यादिना जसि सर्वनामसंज्ञा । **स किमिति** । किं वाच्यः । अपि तु वक्तुमेव न शक्यः । भुज एव कुलिशं वज्रम् । दशतः पीडयतः । प्रतिजलधि समुद्रे समुद्रे । वीप्सायामव्ययीभावः । रावणं कक्षायां निक्षिप्य प्रतिसमुद्रं वाली संध्यावन्दनं कृतवानिति प्रसिद्धिः । दमने मारणे । व्ययो विनाशः । चरितमाचरणम् । मनागेकदेशतः । उपकरणं रावणवधकरणमित्यर्थः । रावणजेतृविनाशे सति रावणस्य सुकरत्वादिति भावः । तथा च येन वालिना रावणः कक्षायां निक्षिप्य धृतः स वाली यथा नाशितस्तथैवायं रावणोऽपीति रावणस्य शौर्योत्कर्षः प्रतिपादितः । **अज्जउत्तेति** । 'आर्यपुत्र, किं पुनरेतद्दलितकर्पूरशलाकाखण्डगौरं गगनाङ्गणे दृश्यते' [इति च्छाया ।] इह दलिता भग्नाः । शलाकाः काष्ठिकाः 'सराग' इति ख्याता । 'छत्रादिकाष्ठीशरयोः शलाका' इति मेदिनीकरः । मल्लक इति देशी खण्डवाचकः । गौरं शुभ्रम् । अवदातः

---

१. 'निगृह्णीमहे'; 'निगूहामहे. २. 'दधतो.'

**विभीषणः**—(सीतां प्रति।) देवि, चन्द्रलोकोपकण्ठमधिरूढो विमानराजः। दृश्यतां च[1] भगवानयम्।

> यं प्राक्प्रत्यगवागुदञ्चि ककुभां नामानि संबिभ्रतं
> ज्योत्स्नाजालझलञ्झलाभिरभितो लुम्पन्तमन्धं तमः।
> प्राचीनादचलादितस्त्रिजगतामालोकबीजाद्बहि-
> र्निर्यान्तं हरिणाङ्कमङ्कुरमिव द्रष्टुं जनो जीवति॥ ६०॥

अपि च[3]।

> स श्रीकण्ठकिरीटकुट्टिमपरिष्कारप्रदीपाङ्कुरो
> देवः कैरवबन्धुरन्धतमसप्राग्भारकुक्षिंभरिः।
> संस्कर्ता निजकान्तिमौक्तिकमणिश्रेणीभिरेणीदृशां
> गीर्वाणाधिपतेः सुधारसवतीपौरोगवः प्रोदगात्॥ ६१॥

---

सितो गौरः' इत्यमरः। उपकण्ठः समीपम्। **यमित्यादि**। यं हरिणाङ्कं द्रष्टुं जनो जीवतीत्यन्वयः। कीदृशम्। प्राक् प्राची, प्रत्यक् प्रतीची, अवाक् दक्षिणा, उदक् उत्तरा, एवंरूपाणि ककुभां दिशां नामानि संबिभ्रतं धारयन्तम्। प्राच्यादिव्यपदेशस्य चन्द्रसूर्यादिनिमित्तकत्वात्। यत्र प्रथममञ्चति चन्द्रः स प्राक्। यत्र प्रतीपमञ्चति स प्रत्यक्, यत्रावाञ्चति तिर्यग्याति सोऽवाक्। यत्रोत्तरमञ्चति स उदग्देश इति व्युत्पत्तेः। इह 'दक्षिणस्यामवाच्येव' इति विश्वप्रकाशकोपादवपूर्वस्याञ्चतेरधःप्रदेशार्थत्वात् 'अवाङ्मुखस्योपरि पुष्पवृष्टिः' इत्यादौ तथा निर्णयाद्दक्षिणादिग्वाचकोऽवाक्शब्द इत्यवधेयम्। ज्योत्स्नाजालस्य झलञ्झलाभिरास्फालैः। आघातैरिति यावत्। अभितः सर्वतोऽधंतमो गाढान्धकारं लुम्पन्तं नाशयन्तम्। प्राचीनात्पूर्वदेशोद्भवादितोऽस्मात्पर्वतान्निर्यान्तमुद्यन्तम्। आलोकबीजाद्दर्शनकारणात्। कीदृशम्। अङ्कुरमिव अङ्कुरतुल्यम्। अन्योऽप्यङ्कुरो बीजाद्बहिर्निर्गच्छन्दृश्यत इति ध्वनिः। 'स्यादास्फाले झलञ्झला' इति हारावली। 'आलोकौ दर्शनोद्योतौ' इत्यमरः। **स श्रीकण्ठेति**। सोऽयं कैरवबन्धुश्चन्द्रः प्रोदगादुदितः। श्रीकण्ठस्य शिवस्य यत्किरीटं मुकुटं तदेव कुट्टिमं गृहभेदो भूमीकर्म वा तस्य परिष्कारे प्रदीपाङ्कुर इव प्रदीपकलिकेवेत्युत्प्रेक्षा। अन्यस्यापि कुट्टिमस्य रात्रौ परिष्कारः प्रदीपेन क्रियत इति ध्वनिः। अन्धतमसानां गाढान्धकाराणां यः प्राग्भारः प्राचुर्यं तेन कुक्षिंभरिः। अशेषान्धकारनाशक इति भावः। निजकान्तिरेव मौक्तिकमणिश्रेणी तया अङ्गनानां संस्कर्ता अलंकर्ता। 'संपर्युपेभ्यः करोतौ भूषणे' इति सुट्। गीर्वाणाधिपतेरिन्द्रस्य सुधारसवती अमृतपाकस्थानं तस्य पौरोगवो महानसाधिपः।

---

1. 'च' इति पुस्तकान्तरे नास्ति. 3. 'अपि च' इति पुस्तकान्तरे नास्ति.

अपि च।

प्राणायामोपदेष्टा सरसिरुहवने यौवनोन्मादलीला-
गोष्ठीनां पीठमर्दस्त्रिभुवनवनितानेत्रयोः प्रातराशः।
कामायुष्टोमयज्वा शमितकुमुदिनीमौनमुद्रानुरागः
शृङ्गाराद्वैतवादी विभवति भगवानेष पीयूषभानुः॥ ६२॥

लक्ष्मणः—(विलोक्य सकौतुकम्।)

कर्णोत्तंसयवाङ्कुरं करतले कृत्वा हसित्वा मिथः
संहूतः पुरुहूतपौरयुवतीवर्गेण कौतूहलात्।
[1]ग्रासार्तिक्षुभितोऽयमङ्कहरिणः कुर्वीत किं किं कला-
कन्थामिन्दुमयीमजस्र[2]घटनोद्घाटश्लथावस्थिताम्॥ ६३॥

---

'रसवती पाकस्थानं महानसम्' इत्यमरः। 'पौरोगवस्तदध्यक्षः' इति च। **प्राणायामेति।** एष पीयूषभानुश्चन्द्रो विभवति उदेति। सरसिरुहवने प्राणायामोपदेष्टा पद्मवने निमीलनमौनकथकः। प्राणायामे हि नेत्रनिमीलनं मौनं च क्रियते। 'स निमीलितदृङ्मौनी प्राणायामान्समभ्यसेत्' इति स्मृतेः। यौवनोन्मादे या लीला विलासस्तदर्थं या गोष्ठी मेलकं तस्याः पीठमर्दोऽनुनायकविशेषः। तथा च भरतः—'पीठमर्दो विटश्चैव विदूषक इति त्रयः। शृङ्गारे नर्मसचिवा नायकस्यानुनायकाः॥' इति। यथा मालतीमाधवे मकरन्दः पीठमर्दः। पुनः कीदृशः। त्रिभुवनवनितानां त्रैलोक्यस्त्रीणां नेत्रयोर्लोचनयोः। 'स्तनादीनां द्वित्वा जातिः' इत्युक्तत्वात्स्त्रीणां बहुत्वेऽपि नेत्रयोरिति जात्यपेक्षया द्वित्वम्। प्रातराशः प्रातर्भोजनम्। नेत्रयोरिति द्विवचनेन तासां सुखित्वं प्रत्येकमेव ध्वनितम्। यथा लोकाः किंचिद्भुक्त्वैव दारेषु सुखं प्रवर्तन्ते तथैता अपि चन्द्रं दृष्ट्वा कामकेलिपूत्सहन्त इति भावः। 'प्रातराशः कल्यवर्तः प्रातर्भोजनमित्यपि' इति हारावली। कंदर्पस्यायुष्टोम आयुर्वर्धको यागस्तस्य यज्वा कर्ता। 'ज्योतिरायुषः स्तोमः' इति षत्वम्। भूयः किंभूतः। शमितः कुमुदिनीनां मौनं तूष्णींभावस्तद्रूपा मुद्रा मीलनग्रहस्तदनुरागो येन स तथा। पुनः कीदृशः। शृङ्गाराद्वैतवादी शृङ्गार एव परं नान्यः कश्चिद्रस इति वादकः। **कर्णोत्तंसेति।** अयमङ्कहरिणः इन्दुमयीं कलाकन्थां कलया या कन्था कन्थेव कन्था इति प्रसिद्धा तां किं किं कीदृशीं कीदृशीं कुर्वीत। अपि तु यवाङ्कुरभक्षणाय निरन्तरचलनाद्विपर्यस्तां कुर्वीतेति भावः। बहुशो निर्माणे उद्घाटश्चालनं तेन श्लथीभूय स्थिताम्। कृष्णपक्षे प्रत्यहमेव कलाया आकर्षणात् श्लथत्वम्।

---

१. 'आशार्ति–'.　२. 'घटनादुद्यच्छ्लथावस्थिताम्'.

सुग्रीवः—

> रोमन्थप्रचलौष्ठसंपुटसुखासीनश्चिरं कौतुका-
> दृष्ट्वा सिद्धवधूभिरङ्कहरिणस्तालैरथोत्त्रासितः[1]।
> मा भाङ्क्षीदनुमासनव्यघटनानिःसंधिबन्धं वपुः
> शीतांशोः क्षुभितस्तु शल्यवदयं दुःखाय वर्तिष्यते॥ ६४॥

अपि च।

> एतस्य कलामेकाममृतमयूखस्य पार्वतीरमणः।
> वर्णावलिमिव वहति प्रतिमासं घट्यमानस्य॥ ६५॥

रामः—(सादरं प्रणम्य।)

> त्वं गीर्वाणगणाय नित्यममृतश्राद्धं भवद्दीधिति-
> र्धात्रीकर्म च वीरुधां विदधती धत्ते जगज्जीवितम्।
> सोम त्वामनिधाय मूर्धनि भवेत्कः कालकूटं गिल-
> न्कण्ठे तच्छलकालपाशवलयालीढोऽपि मृत्युंजयः॥ ६६॥

(सीतां प्रति।)

> नेत्राणां मधुपर्कसत्रमुदधेः सर्वाङ्गमेदस्करः
> शृङ्गारस्य रसायनं मखभुजां पीयूषगङ्गापतिः।

---

**रोमन्थेति**। अयमङ्कहरिणः शीतांशोः शरीरं मा भाङ्क्षीत् मा भग्नं कुर्यात्। तु पुनः क्षुभितश्चलितः सन् शल्यवद्दुःखाय वर्तिष्यते। भङ्गहेतुविशेषणमाह—रोमन्थेत्यादि। तालैर्हस्तद्वयसंयोगजन्यशब्दभेदैः। वपुः कीदृशम्। अनुमासं प्रतिमासं या नव्यघटना नूतनघटनं तया निःसंधि संधिशून्यं बन्धो यत्र तादृशम्। वर्णावलिमिव। यावतो वारानयं घटितस्तावदक्षरपङ्क्तिमिवेत्यर्थः। घट्यमानस्य क्रियमाणस्य। **त्वमिति**। हे सोम, त्वं देवगणायामृतश्राद्धममृतरूपं हव्यम्। असीति शेषः। 'हव्ये कव्ये भवेच्छ्राद्धम्' इति विश्वः। भवतो दीधितिः किरणो जगतां जीवितं प्राणान्धत्ते। कीदृशी। वीरुधां लतानां धात्री उपमाता तत्कर्म परिपालनस्वरूपं विदधती कुर्वाणा। जलेन चन्द्रतेजसा च वृक्षा जीवन्तीति ध्वनिः। त्वां मूर्धनि मस्तके अनिधायाधृत्वा कालकूटं विषभेदं गिलन्सन् कण्ठे गले तच्छलेन कालकूटव्याजेन यमपाशवलयेन यमरज्जुवेष्टनेनालीढ आस्वादितोऽपि मृत्युंजयो मृत्योर्जेता को भवेत्। अपि तु न कोऽपि जीवेदित्यर्थः। तथा च भगवानेव शिवस्त्वां मूर्धनि निधायामृतरूपकिरणधारणाद्विषमपि गिलञ्जीवतीति भावः। **नेत्राणामिति**। अयं दाक्षायणीनायकस्तारापतिश्चन्द्रः। अस्तीति शेषः। किं स्तुमहे कथं स्तुमहे। तमिति शेषः। अपि त्वतिगुणशालितया स्तोतुमेवैनं न पारयामः। कीदृशः। नेत्राणामानन्ददायित्वेन मधुपर्कस्य दधिमधुघृतस्वरूपस्य सत्रं यज्ञः सदा भोज-

---

1. 'बहुत्रासितः'; 'अथोल्लासितः'.

देवः किं स्तुमहे महेश्वरशिरोनेपथ्यरत्नाङ्कुरः
क्षीरोदार्णवशुक्तिमौक्तिकमयं दाक्षायणीनायकः ॥ ६७ ॥

**सीता**—(हसन्ती ।) अज्जउत्त, समाणकुलसीलरूवजोव्वणाणं वि सवत्तीणं सीसे दिण्णो धण्णाए दक्खगोत्तधवलाए रोहिणीए चलणो । जेण रोहिणीरमणो ज्जेव्व भअवं चन्दो सुणीअदि ।

**रामः**—(विहस्य ।) आं जानकि,

प्रियोपभोगतुल्येऽपि ताराणां सप्तविंशतेः ।
धत्ते किमपि सौभाग्यमञ्जरीमिह रोहिणी ॥ ६८ ॥

(स्पर्शं च रूपयन् ।)

दलितकुमुदकोषोदञ्चदूष्मोपचार-
क्षणशमितचकोरीचन्द्रिकापानजाड्याः ।
अभिसृमरमृगाक्षीमूकदूत्यः स्वदन्ते
शशिमणिमकरन्दोत्कन्दलाश्चन्द्रभासः ॥ ६९ ॥

---

नशाला वा । 'सतर' इति यस्य प्रसिद्धिः । 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इत्यमरः । उदधेः समुद्रस्य मेदो मांसवृद्धिस्तत्कारकः । 'नित्यं समासे–' इति सत्वम् । रसायनं सदा क्रियमाणपुष्टिप्रदमौषधम् । पीयूषस्य गञ्जा गृहं तत्पतिः । यद्यपि 'गञ्जा तु मदिरागृहम्' इत्यमराद्गञ्जाशब्दो मदिरागृहे रूढस्तथापि लक्षणया योग्यतया वा गृहमात्रपरोऽत्र । यद्वा गञ्जा खनिः । 'गञ्जा खनौ सुरागेहे' इति मेदिनीकरः । नेपथ्यं प्रसाधनम् । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । क्षीरोदार्णव एव शुक्तिः । रूपकं शुभ्रत्वसाम्यात् । तत्र मौक्तिकं मुक्ताफलम् । अत्रार्णवस्य शुक्तित्ववर्णनं नानुचितम् । उक्तं च दण्डिना—'न लिङ्गवचने भिन्ने न हीनाधिकतापि वा । उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥' यथा—'हंसीव धवलश्चन्द्रः सरसीवामलं नभः । भर्तृभक्तो भटः श्वेव खद्योतो भाति भानुवत् ॥' इति । दाक्षायण्यः सप्तविंशतितारकाः । 'दाक्षायण्योऽश्विनीत्यादि ताराः' इत्यमरः । **अज्जउत्तेति** । 'आर्यपुत्र, समानकुलशीलरूपयौवनानामपि सपत्नीनां शीर्षे दत्तो धन्यया दक्षगोत्रधवलया रोहिण्या चरणः । येन रोहिणीरमण एव भगवांश्चन्द्रः श्रूयते' [इति च्छाया ।] इह शीर्षे शिरसि । दक्षो नाम मुनिः । धवला निर्मला सुन्दरी वा । 'धवलः सुन्दरेऽमले' इति विश्वः । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । येन हेतुना । सप्तविंशतेरित्यत्र 'विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः' इति वचनादेकत्वम् । मञ्जरी प्रकाण्डः । 'सौरभ्यम्' इति पाठे मनोहरत्वं ख्यातिं वेत्यर्थः । रूपयन्गृह्णन् । 'रूप निदर्शने' । णिच् । दलितं विकासितम् । कोषो मध्यम् । उदञ्चदुद्गच्छत् । उपचारः समूहः । चकोरीणां चन्द्रिकापानेन यज्जाड्यं शीतलत्वं तद्विकसि-

---

१. 'सौभाग्यैः सौरभ्यमिह'.

अपि च।

[1]तैः सर्वज्ञीभवदभिसृतानेत्रसिद्धाञ्जनैर्वा
नीरन्ध्रैर्वा त्रिभुवनदृशामन्धपट्टैस्तमोभिः।
व्याप्तं पृथ्वीवलयमखिलं क्षालयन्नुच्छलद्भि-
र्ज्योत्स्नाजालैरयमुदयते शर्वरीसार्वभौमः॥ ७०॥

अपि च [2]जगतामनुग्रहाय

उदयति कलमन्द्रैः कण्ठतालैरलीनां
कुमुदमुकुलकेषु व्यञ्जयन्नङ्गहारान्।
मदमुखरचकोरीतोषकर्मान्तिकोऽयं
तुहिनरुचिरधामा दक्षिणं लोकचक्षुः॥ ७१॥

---

तकैरवगर्भादुत्थितेनोष्मणा शमितमिति तात्पर्यम्। अभिसृमरा अभिसरणशीला या मृगाक्षी तस्या मूका अवचना दूत्य इव। अन्या दूती नायिकानायकयोरन्योन्यवाक्यकथनेनान्योन्यानुरागं साधयति। चन्द्रकिरणास्तु वियुक्तयोरुभयोः संबन्धमात्रेणैव संयोगं जनयन्तीति भावः। अभिसुमरेति 'सृघस्यदः क्मरच्'। स्वदन्ते रोचन्ते। शशिमणिश्चन्द्रकान्तः। मकरन्दोऽमृतम्। मकरन्द इव मकरन्दः। तेनोत्कन्दला उद्गतपल्लवाः। **तैरिति**। अभिसृताभिसारिका। 'आदिकर्मणि क्तः कर्तरि च' इति क्तः। सर्वज्ञीभवन्ती चासावभिसारिका चेति। तस्या नयनसिद्धाञ्जनैरिव। अभिसारिकाणामखिलकामकलापरसज्ञानप्रच्छादनादिज्ञातृतया सर्वज्ञत्वम्। तत्र चान्धकार एव सर्वत्र हेतुरित्याशयः। अन्यस्मिन्नपि सर्वज्ञत्वे सिद्धाञ्जनतन्त्रता भवत्येवेति ध्वनिः। त्रिभुवननेत्राणां नीरन्ध्रैर्निबिडैरन्धपट इति ख्यातैरिव तमोभिरन्धकारैर्व्याप्तमखिलं समस्तं पृथ्वीवलयमुच्छलद्भिरुत्थितैर्ज्योत्स्नाजालैः क्षालयञ्शुचीकुर्वन्। प्रकाशयन्निति यावत्। अयं शर्वरीसार्वभौमः शर्वर्या रात्रेश्चक्रवर्ती चन्द्र उदयत इत्यन्वयः। वाद्वयं विकल्पे उपमायां वा। 'वा स्याद्विकल्पोपमयोः' इति विश्वः। **उदयतीति**। तुहिनं हिमं तदेव रुचिरं मनोज्ञं धाम तेजो यस्य स चन्द्र उदयतीति संबन्धः। 'इ गतौ' इति भौवादिकः परस्मैपदी। कलोऽव्यक्तमधुरः। मन्द्रो गम्भीरः। तादृशैरलीनां भ्रमराणां कण्ठा एव ताला गीतक्रियामानानि तैः। कुमुदमुकुलकेषु अङ्गहारानङ्गविक्षेपान्व्यञ्जयन्प्रकाशयन्। 'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः। चकोरीसंतोषरूपः कर्मान्तः कर्मस्थानं तद्योगात् 'अत इनिठनौ' इति ठन्। कर्मान्तिकः कर्मकराध्यक्षः। 'कामत' इति ख्यातः। पुनः कीदृशः। दक्षिणं लोकानां चक्षुरिव चक्षुः। आनन्दजनकत्वाद्दक्षिणनयनेन रूपणम्। 'तुहिनरुचिरवामादक्षिणम्' इति पाठे तुहिनरुचिश्चन्द्र उदयतीत्यन्वयः।

---

१. अयं श्लोकः पुस्तकान्तरेऽग्रिमश्लोकादनन्तरं वर्तते. २. 'जगतामनुग्रहाय' इति पुस्तकान्तरे नास्ति.

इदं[1] चास्य

प्राचीनाचलचुम्बिचन्द्रमणिभिर्निर्व्यूढपाद्यं निजै-
निर्यासैरुडुभिर्निजेन वपुषा दत्तार्घलाजाञ्जलि ।
अन्तः प्रौढकलङ्कतुच्छमभितः सान्द्रं परिस्तीर्यते
बिम्बादङ्कुरभग्ननैशिकतमःसंदोहमिन्दोर्महः ॥ ७२ ॥

एनं[2] च

मृगराजकरजभङ्गुरकिंशुककलिकावतंसिकाः सुदृशः ।
भयसंकुचदङ्कहरिणबहलोज्ज्वलमिन्दुमीक्षन्ते ॥ ७३ ॥

**विभीषणः**—

इन्दोरेककलाया रुद्रेणोद्धृत्य मूर्धनि धृतायाः ।
स्थानमिव तुच्छमेतत्कलङ्करूपेण परिणमते ॥ ७४ ॥

(विहस्य रामं प्रति ।)

रोदसीकूपमण्डूकः कियदेष प्रकाशते ।
चन्द्रमा यदयं देव त्वत्कीर्तेः प्रतिगर्जति ॥ ७५ ॥

---

कीदृशः । लोकचक्षुरिव । कीदृशम् । अवामा अकुटिला स्त्री तस्यां दक्षिणं दाक्षिण्यवत् । लिङ्गव्यत्ययेनान्वयः । अवामाविषये दक्षिण इत्यर्थः । 'मन्द्रस्तु गम्भीरे' इत्यमरः । 'तालः कालक्रियामानम्' इति च । **प्राचीनेति** । इन्दोर्महस्तेजः कर्तृ अभितः सर्वत्र संभूय मिलित्वा बिम्बान्मण्डलात्परिस्तीर्यते विस्तीर्यते । स्वमाच्छादनं करोतीत्यर्थः । कर्मकर्तरि लट् । कीदृशम् । प्राचीनपर्वताग्रस्थितचन्द्रकान्तैर्निर्व्यूढं कृतं पाद्यं पादार्थमुदकं यस्य तादृशम् । पुनः कीदृशम् । निजैर्निर्यासैः सारभूतैः उडुभिस्ताराभिर्निजेन वपुषा स्वरूपेण दत्तोऽर्घो लाजाञ्जलिश्च यस्मै तत् । आत्मनार्घदानं ताराभिर्लाजाञ्जलिदानमिति क्रमः । योग्यत्वादन्वयः । आर्थेन क्रमेण शाब्दः क्रमो लङ्घ्यते । यथा अग्निहोत्रं जुहोति, यवागूं पचति, इत्यत्र । ताराणां शुभ्रवर्तुलत्वाभ्यां लाजत्वव्यपदेशः । अन्तर्मध्ये उपचितकलङ्केन तुच्छं शून्यम् । अङ्कुर एव भग्नो नैशिकतमःसमूहो येन तत् । नैशिकं निशाभवम् । 'निशाप्रदोषाभ्यां च' इति ठञ् । **मृगेति** । मृगराजः सिंहः । करजो नखः । तद्वद्भङ्गुरं कुटिलम् । सिंहनखभ्रमाद्भयम् । बहलमधिकम् । उज्ज्वलं दीप्तम् । **इन्दोरिति** । उद्धृत्य उत्पाट्य । परिणमते निष्पद्यते । कर्मव्यतिहारे तङ् । **रोदसीति** । द्यावापृथिव्योर्मध्यं रोदसी । 'रोदश्च रोदसी चेति दिवि भूमौ पृथक्पृथक्' इत्यमरः । सैव कूपः तत्र मण्डूको भेक इव । एष चन्द्रः कियत् किंप्रमाणं प्रकाशत इत्यन्वयः ।

---

१. 'इदं चास्य' इत्यारभ्य 'मलकुड्डामगोरं जसम्' इत्यन्तः पाठः केषुचित्पुस्तकेषु 'सेतूपक्रम–' इत्यादिश्लोकादग्रे वर्तमानादनन्तरं वर्तते. २. 'एवं च'.

**सीता**—(सस्मितम् ।) जाणामि अज्जउत्तस्स कित्तिकन्तीहिं पडिस्पद्धं कदुअ पराजिदेण संपदि भअवदा हरिणङ्केण कलङ्कसंघदी विढत्ता ।

(सर्वे हसन्ति । रामः स्मयते ।)

**सीता**—(रामं प्रति ।)

सारम्भं सिरिवच्छलञ्छणभुआपज्जत्थमन्थाअल-
क्खोभोच्छलिददुद्धसिन्धुलहरीगब्भच्छईसच्छअम् ।
को गायेदि ण दे रहूणँ पहुणो अन्धारपक्खन्तरा-
संतुट्टन्तमिअङ्कमण्डलमलक्कुद्दामगोरं जसम् ॥ ७६ ॥

**रामः**—( सहर्षस्मितम् ।) अयि प्रिये प्रियवादिनि,

चन्द्रलोकादपि परं पदमारोपयन्ति माम् ।
अमूरमृतबिन्दूनामनुप्रासास्तवोक्तयः ॥ ७७ ॥

**विभीषणः**—(सानुरागम् ।)

अद्योर्वीतलमूलघर्षणवशादुन्मृष्टचूडामणि-
श्रेणिश्रीपरिपीतपीवरतमःपूरे पुरे भोगिनाम् ।
कर्णाभावनिरस्तकुण्डलरवव्यासङ्गमाधुन्वता
मूर्ध्नः पन्नगपुंगवेन सुभगं त्वत्कीर्तिराकर्ण्यते ॥ ७८ ॥

---

'किंयत्तदेतेभ्यः परिमाणे वतुप्' । 'किमिदंभ्यां वो घः' । कियदिति सामान्योक्तौ क्रियाविशेषणे वा नपुंसकता । यद्यस्मान्महत्परिमाणायास्त्वत्कीर्तेः प्रतिगर्जति सदृशीभवति । 'स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति' इत्याद्युक्त्वा 'शब्दाः सादृश्यवाचकाः' इति दण्डी । **जाणामीति** । 'जानाम्यार्यपुत्रस्य कीर्तिकान्तिभिः प्रतिस्पर्धां कृत्वा पराजितेन संप्रति भगवता हरिणाङ्केन कलङ्कसंहतिरर्जिता' [इति च्छाया] विढत्ता इति देशी । **सारम्भमिति** । 'सारम्भं श्रीवत्सलाञ्छनभुजापर्यस्तमन्थाचलक्षोभोच्छलितदुग्धसिन्धुलहरीगर्भच्छविसदृशम् । को गायति न ते रघूणां प्रभोरन्धकारपक्षान्तरासंत्रुट्यन्मृगाङ्कमण्डलखण्डोद्दामगौरं यशः ॥' [ इति च्छाया ।] ते तव यशः को न गायति । अपि तु सर्व एव । श्रीवत्सलाञ्छनो हरिस्तस्य बाहुभिः पर्यस्तः क्षिप्तो यो मन्थाचलस्तत्क्षोभादुच्छलितस्य दुग्धाम्बुधेर्लहरी तरङ्गः प्रवाहो वा तन्मध्यकान्तितुल्यम् । अन्तरा मध्यम् । मलक्कः खण्डः । मृगाङ्कखण्डवदुद्दामगौरमतिश्वेतम् । अनुप्रासाः सदृशाः । **अद्येति** । हे देव, भोगिनां पुरे पाताले पन्नगपुंगवेन वासुकिना सुभगं यथा स्यादेवं त्वत्कीर्तिराकर्ण्यते श्रूयते इत्यन्वयः । पुरे कीदृशे । उर्वीमूलस्य घर्षणेन उन्मृष्टा या चूडामणिश्रेणी तस्याः श्रिया कान्त्या परिपीतो नाशितो निबिडान्धकारप्रवाहो यत्र तादृशे । कर्णाभावान्निर-

(विहस्य[1] ।)

भोगीन्द्रः प्रमदोत्तरङ्गमुरगीसंगीतगोष्ठीषु ते
कीर्तिं देव शृणोतु विंशतिशती यच्चक्षुषां वर्तते ।
रक्ताभिः सुरसुन्दरीभिरभितो गीतां तु कर्णद्वयी-
दुःस्थः श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षुःश्रवाः ॥७९॥[2]

रामः—(विलक्षस्मितेन[3] विभीषणसूक्तमनुगृह्य चन्द्रं सीतामुखं च क्षणमालोक्य[4] स्वगतम्[5] ।)

आरब्धे दयितामुखप्रतिसमे[6] निर्मातुमस्मिन्नपि
व्यक्तं जन्मसमानकालमिलितामंशुच्छटां वर्षति ।
आत्मद्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः
संकोचादतिदुःस्थितस्य न विधेस्तच्छिल्पमुन्मीलितम्[7] ॥ ८० ॥

---

स्तो यः कुण्डलरवस्य व्यासङ्गोऽन्तरायस्तादृशं यथा स्यादेवं मूर्ध्नः शिरांसि आधुन्वता कम्पयता । इह शिरसां सहस्रतया बहुवचनम् । कर्णाभावेन कुण्डलपरिधानाभावः । अत एव तज्जन्यशब्दाभावात्कीर्तेः सुखेन श्रवणमिति भावः । **भोगीन्द्र इति** । हे देव, तव कीर्तिं भोगीन्द्रो वासुकिः शृणोतु श्रोतुं शक्नोतु । कुत्र । प्रमदो हर्षस्तेनोत्तरङ्गमुद्गतातिशयं यथा स्यादेवं सर्पीभिर्यत्संगीतं मिलित्वा गानं तद्गोष्ठीषु सभासु । 'सभासंलापयोर्गोष्ठी' इति मेदिनीकरः । 'प्रमदसंमदौ हर्षे' इत्यच्प्रत्ययान्तो निपातः । विंशतिशती सहस्रद्वयम् । वासुकेः सहस्रफणत्वात् चक्षुषां सहस्रद्वयम् । तस्य चक्षुःश्रवस्त्वात् । रक्ताभिरनुरक्ताभिरप्सरोभिर्गीतां पुनः कीर्तिं सहस्राक्ष इन्द्रो द्विकर्णत्वात्किं नाम श्रोष्यति । अपि तु न किमपि । हि यतः स इन्द्रः सहस्राक्षोऽपि न चक्षुःश्रवाः । तस्य न नेत्रेण श्रवणयोग्यतेत्यर्थः । **आरब्ध इति** । अस्मिन्रोहिणीपरिवृढे चन्द्रे दयिता सीता तन्मुखतुल्ये निर्मातुमारब्धे सति पर्यङ्क आसनं 'पालङ्क' इति ख्यातं तद्रूपं यत्पङ्केरुहं पद्मं

---

१. 'विहस्य च'. २. केषुचिन्मूलपुस्तकेषु अस्माच्छ्लोकादग्रे 'अपि च, अद्य स्वर्गिवधूगणे गुणमय त्वत्कीर्तिमत्युज्ज्वलामुच्चैर्गायति निष्कलङ्किमदशामापत्स्यते चन्द्रमाः । गीताकर्णनमोदमुक्तयवसग्रासाभिलाषोऽधुना स्वामिन्नङ्कमृगः कियन्त्यपि दिनान्येतस्य वर्तिष्यते ॥ अपि च, गीयन्ते यदि पन्नगीभिरभितस्त्वत्कीर्तयस्तद्वयं तुष्टा एव परंतु चेतसि चमत्कारोऽयमारोहति । तासां तादृशभावभङ्गवलनासंस्थानसंदर्शिनि व्यालेन्द्रे रसधूतमूर्धनि महीचक्रं पुनर्भ्राम्यति ॥' इति श्लोकद्वयमधिकमस्ति. ३. 'सविलक्षस्मितम्'. ४. 'क्षणम्' इति पुस्तकान्तरे नास्ति. ५. 'स्वगतम्' इति पुस्तकान्तरे नास्ति. ६. 'दयितानन–'. ७. 'तच्चित्रमुन्मीलितम्', 'तच्छिल्पमुन्मीलति'.

(सीतां प्रति।)

अनेन रम्भोरु [1]भवन्मुखेन तुषारभानोस्तुलया धृतस्य।
ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः॥ ८१॥

किं [2]चान्यदपि

गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः
शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान्।
एकाग्रां यद्दधति भगवत्युष्णभानौ च भक्तिं
तत्प्रापुस्ते सुतनु वदनौपम्यमम्भोरुहाणि॥ ८२॥

**सीता**—(स्मेरावनतमुखी।) अज्जउत्त, कधं उण संपुण्णमण्डलमेरिसं चन्दमवमच्चिअ कलामेत्तं भअवदा भूदणाहेण चूडामणीकिदं आसी।

**रामः**—([3]सप्रहासम्।) प्रिये जानकि, त्रयाणामपि [4]जगतामुपजीव्योऽय-

---

तस्य संकोचादतिदुःस्थितस्यात्यन्तासुस्थस्य विधेः स्रष्टुस्तच्छिल्पं कौशलं नोन्मीलितं न प्रकाशितम्। दयितामुखसमश्चन्द्रो नाभूदिति भावः। पद्मसंकोचे हेतुमाह—रोहिणीपरिवृढे कीदृशे। व्यक्तं स्फुटं यथा स्यादेवं जन्मसमय एव संवद्धामंशुच्छटां तेजोराशिं वर्षति प्रकाशयति। तथा च चन्द्रकिरणसंबन्धादासनपद्मसंकोच इति भावः। अत एवात्मद्रोहिणि निजशत्रौ। आत्मना ब्रह्मणः पद्मसंकोचादात्मनोऽसंपूर्णतयात्मशत्रुत्वमिति भावः। रम्भा कदली तद्वदूरू यस्याः तादृशि हे कान्ते, भवत्या मुखं भवन्मुखम्। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः' इति पुंवद्भावः। तुलया मानदण्डेन धृतस्य तुलितस्य। नूनमुत्प्रेक्षे। प्रतिमानं 'पडिमान' इति ख्यातम्। हिरण्यादेस्तुलनायां न्यूनस्य क्षुद्रप्रतिमानेन पूरणात्तुल्यता क्रियते यथा तथात्रापीति भावः। **गोत्रे इति**। हे सुतनु सीते, तत्तस्माद्धेतोरम्भोरुहाणि तव मुखसादृश्यं प्रापुः। यद्यस्मादेषां गोत्रे पद्मयोनिर्ब्रह्मा साक्षादजनि उत्पन्नः। शय्योत्थायं शय्याया उत्थाय। 'अपादाने परीप्सायाम्' इति णमुल्। परीप्सा त्वरा। अखिलं समस्तमहो दिनं व्याप्य भ्रमरान्प्रीणयन्ति प्रीतान्कुर्वन्ति। यच्चोष्णभानौ सूर्ये एकाग्रामेकचित्तां भक्तिं सेवां विदधति। तथा च परोपकारात् नियतसूर्यभक्तेश्च पद्मानि त्वन्मुखसदृशानि जातानीति भावः। अहः इत्यत्र अत्यन्तसंयोगे द्वितीया। **अज्जउत्तेति**। 'आर्यपुत्र, कथं पुनः संपूर्णमण्डलमीदृशं चन्द्रमवमत्य कलामात्रं भगवता भूतनाथेन चूडामणीकृतमासीत्' [इति च्छाया] इह अव-

---

१. 'तवाननेन'. २. 'चैतान्यपि'. ३. 'सप्रहासम्' इति पुस्तकान्तरे नास्ति. ४. 'लोकानाम्'.

मम्रुतदीधितिः । यदि पुनः समग्रमेनं मौलिना पिनाकपाणिरधारयिष्यत्, अङ्ग[1] शिवनिर्माल्यमनुपभोग्य[2] एवायमभविष्यत् ।

(सर्वे हसन्ति ।)

रामः—किं च भवत्यापि मासप्रमितो[3] दृश्यत एवायं
पीयूषाश्रपणं जगत्त्रयदृशामालातलेखालवो
विश्वोन्माथहुताशनस्य ककुभामुद्घाटनी कुञ्चिका ।
वीरेषु प्रथमा च पुष्पधनुषो रेखा मृगाक्षीमुख-
श्रीणां च प्रतिराजबीजमधिकानन्दी नवश्चन्द्रमाः ॥ ८३ ॥

सीता—(अनुमोदमाना ।) अज्जउत्त, परिपुण्णा गुणिणो जहिं कहिं पि सोहन्ति । खीणा उण सीसमाहरुहन्ति त्ति हरजडाचन्दो ज्जेव्व पढमं णिदंसनम् ।

---

मल्य त्यक्त्वा । भूतनाथेन शिवेन । समग्रं संपूर्णम् । पिनाकपाणिः शिवः । अधारयिष्यत् तद्धारणमकरिष्यत् । क्रियातिपत्तौ लृङ् । अतिपत्तिः कुतोऽपि हेतोः क्रियाया अनिष्पत्तिः । अङ्गशब्दः संबोधने वितर्के वा । निर्माल्यं पूजानन्तरं त्यक्तपुष्पम् । अजहल्लिङ्गत्वादन्वयः । शिवनिर्माल्यस्य धर्मशास्त्रेणोपभोगस्य निषेधात् । यद्यपि रामवचनस्यैव तापमानता तथापि सर्वे हसन्तीत्युक्तमतो हासानामन्ते पुनर्वचने वक्तुराकाङ्क्षायां राम इत्युक्तम् । क्वचित्पुस्तके तु राम इति नास्त्येव । किं चेत्यनेन समुच्चयवाचकेन तत्प्रक्रमस्य प्राप्तेः । व्युत्पत्तिस्तूभयरूपापि । मासं प्रमितो मासप्रमितः । अत्यन्तसंयोगे द्वितीया । 'अत्यन्तसंयोगे च' इति समासः । प्रमित इति प्रमातुमारब्धः । आदिकर्मणि क्तः । **पीयूषेति** । अयं नवचन्द्रमा दृश्यत इति मस्तकस्थेनान्वयः । कीदृशः । जगत्त्रयनेत्राणां पीयूषस्यामृतस्याश्रवणं स्थाली । विश्वः समस्त एव विरही तस्योन्माथी उन्मथनकर्ता कामस्तद्रूपहुताशनस्य कामाग्नेः आलातलेखालवः । आलातमङ्गारस्तस्य लेखा पङ्क्तिस्तस्या लवः कणः । ककुभां दिशामुद्घाटनी उद्वेलनकर्त्री कुञ्चिका । कपाटादिस्फोटनार्थं या क्रियते सा 'कुञ्चिआ' इति ख्याता । उद्घाटयतीत्युद्घाटनी । 'ण्यासश्रन्थो युच्' । वीरेषु मध्ये कामस्य प्रथमा आद्या रेखा । गणनायां कठिन्या आद्या रेखा । प्रथमं गणनीयेत्यर्थः । नारीमुखशोभानां प्रतिपक्षो राजा प्रतिराजः । राजा चन्द्रोऽपि भण्यते । 'राजाहःसखिभ्यष्टच्' । तस्य बीजं कारणम् । पूर्ण एव चन्द्रः कविसंप्रदाये भण्यत इति भावः । सर्वत्राजहल्लिङ्गतयान्वयः । **अज्जउत्तेति** । 'आर्यपुत्र, परिपूर्णा गुणिनो यस्मिन्कस्मिन्नपि शोभन्ते । क्षीणाः पुनः शीर्षमारोहन्तीति हरजटाचन्द्र एव प्रथमं

---

१. 'अङ्ग' इति पुस्तकान्तरे नास्ति. २. 'अनुपयुक्तः'. ३. 'मासं प्रमितो'; 'मासं प्रति'.

**रामः**—(विहस्य।) देवि महाकुलक्षत्रियसंभवे, एवमेतत्।

सेतूपक्रमसंभ्रमाहृतगिरिप्रक्षेपवेगोच्छल-
न्निःशेषाम्बुपरिस्फुटोदरदरीगम्भीरिमा सागरः।
चक्रे गोष्पदवद्विलङ्घितवतोऽप्यन्तर्भयं मारुतेः
पूर्णत्वादतिरिच्यते हि महतस्तुच्छस्य दुर्लङ्घ्यता॥ ८४॥

(नेपथ्ये।)

देव, त्वर्यतां त्वर्यताम्। संनिधत्ते खलु भगवद्वसिष्ठगृहीतो मङ्गलाभिषेकमुहूर्तः।

**रामः**—(आकर्ण्य।) कथमयोध्यायाः प्रत्यावृत्तो मारुतिरस्मांस्त्वरयति।

**सीता**—(सहर्षम्।) अज्जउत्त, कधं अञ्जणाणन्दणो तुवरावेदि। ता भअवं पुप्फअ, अवणम। मेइणीसंणिहिदगअणमग्गेण गच्छह्म। (अधोऽवलोक्य रामं प्रति।) अज्जउत्त, किं उण एदं तरुणजीमूदसामले महीवलए महुमहणवच्छत्थले कोत्थुभकिरणत्थवअं विअ जलन्तं लक्खीअदि।

---

निदर्शनम्' [इति च्छाया।] इह निदर्शनं दृष्टान्तः। **सेत्विति**। उपक्रम आरम्भः। संभ्रमस्त्वरा। आहृत आनीतः। शैलपतनवेगादुच्छलदितस्ततो गच्छत्। परिस्फुटो व्यक्तः उदरमेव दरी कंदरा तस्या गम्भीरिमा गम्भीर्यं यत्र तादृशः सागरो मारुतेर्हनूमतोऽन्तर्भयं चक्रे। पूर्णत्वात् पूर्णदशातः। कीदृशस्य। गोष्पदं गोपदपरिमाणबिलं तद्वल्लङ्घितवतोऽपि। 'गोष्पदं सेविते माने' इत्यमरः। 'गोष्पदं सेवितासेवितप्रमाणेषु' इति निपातनम्। उक्ते उपपत्तिमाह—हि यतः महतस्तुच्छस्यापि दुर्लङ्घ्यतातिरिच्यते अतिरिक्ता भवति। तुच्छ एव महादुर्लङ्घ्यो भवतीति भावः। **अज्जउत्तेति**। 'आर्यपुत्र, कथमञ्जनानन्दनस्त्वरयति। तद्भगवन् पुष्पक, अवनम। मेदिनीसंनिहितगमनमार्गेण गच्छामः' [इति च्छाया।] इह अञ्जनानन्दनो हनूमान्। 'अञ्जना मरुतः सूनोर्जनन्यां च हलाहले'। अवनम अधो गच्छ। **अज्जउत्तेति**। 'आर्यपुत्र, किं पुनरेतत्तरुणजीमूतश्यामले महीवलये मधुमथनवक्षःस्थले कौस्तुभकिरणस्तवक इव ज्वलल्लक्ष्यते'

---

१. 'महाक्षत्रिय—'; 'महाक्षत्रियकुल—'. २. 'सेतुप्रक्रम'. ३. कौतुक. ४. 'देव, त्वर्यताम्। संनिधत्ते भगवान्वसिष्ठः संगृहीतमङ्गला—'. ५. 'खलु' इति पुस्तकान्तरे नास्ति. ६. 'अयोध्यातः'.

**रामः**—(दृष्ट्वा विभीषणं प्रति।)

तर्कुटङ्कलिखितार्कमण्डलप्रोच्छलत्कणकदम्बभासुरम्।
शिल्पशालमिव विश्वकर्मणः किं विभाति मृगतृष्णिकामयम् ॥ ८५ ॥

**विभीषणः**—देव, स एषः

ज्येष्ठामूलीययात्रासरभसकरभीकाम्यकान्तारवर्त्मा
दूरेऽपि ज्योतिरक्ष्णोरपलपति मरुर्जाज्वलज्जाङ्गलश्रीः।
विश्वद्रीचीभिरस्मिन्निबिडमुडुपते कान्तिभिः प्रस्नुवानाः
फेनायन्ते निजोष्मक्वथनपरिणमद्बुद्बुदं चन्द्रकान्ताः ॥ ८६ ॥

(सर्वे विमानावनतिं नाटयन्ति।)

**रामः**—(विलोक्य सीतां प्रति।) देवि, दक्षिणेन

सिंहलद्वीपमम्भोधिसंभूतमिदमुत्पलम्।
माणिक्याचलकिंजल्करमणीयमुदीक्ष्यते ॥ ८७ ॥

**सीता**—जहिं कासकुसुमसंकासो अगत्थहंसो चरइ।

---

[इति च्छाया।] इह जीमूतो मेघस्तद्वत् श्यामे महीवलये पृथ्वीमण्डले। तर्कुः कुन्दः। टङ्कः 'टांकी' इति प्रसिद्धः। लिखितस्तक्षितः। कदम्बः समूहः। शिल्पस्य शाला शिल्पशालम्। 'विभाषा सेना–' इत्यादिना क्लीबत्वम्। **ज्येष्ठामूलीयेति**। अयं मरुदेशभेदो दूरेपि अक्ष्णोस्तेजोऽपलपति खण्डयति। कीदृशः। ज्येष्ठामूलीयो ज्येष्ठमासः। तथा च हारावली—'ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम्' इति। तत्र यात्रायां सरभसा या करभी उष्ट्री तस्याः काम्य इच्छाविषयः कान्तारो दुर्गपथस्तद्रूपं वर्त्म यस्य सः। ज्येष्ठे हि उष्ट्री सरभसा कामुकी जायते। जङ्गलो निर्जलो देशः। तस्येयं जाङ्गली। सा चासौ श्रीश्चेति 'पुंवत्कर्मधारय–' इति पुंवद्भावः। अस्मिन्मरौ चन्द्रकान्ताः फेनायन्ते फेनमुद्वमन्ति। सर्वतो गमनकारिणीभिरुडुपतेश्चन्द्रस्य कान्तिभिः प्रस्नुवानाः स्वयं क्षरन्तः। कर्मकर्तरि तङ्। निजोष्मणा मरुस्थलतेजसा क्वथनं पाकस्तेन परिणमद्बुद्बुदं यथा स्यादेवम्। 'क्वथनभरनमद्बुद्बुदं' इति पाठे क्वथनभरेण पाकभरेण। दक्षिणेन दक्षिणस्यां दिशीत्यर्थः। 'एनबन्यतरस्याम्' इत्येनप्। सिंहलेत्यादि सुगमम्। **जहिं इति**। 'यत्र काशकुसुमसंकाशोऽगस्त्यहंसश्चरति' [इति च्छाया।] इह संकाशः सदृशः। अन्योऽपि श्वेतो हंसश्चरति

रामः—(स्मित्वा।) आं मैथिलि, आम् । इहैव रोहणगिरेरुपत्यकायां द्वितीयमायतनं मुनेर्लोपामुद्रावल्लभस्य । स तत्रभवान्

बृहत्पात्रप्राप्त्या विततजलमम्भोधिमुदरे
दधावीषद्गाधं किल कलशजन्मा कुलपतिः ।
यमाराध्यन्विन्ध्याचलशिखरशोथैकभिषजं
विवस्वानाश्वीनं गगनमविरोधात्कलयति ॥ ८८ ॥

अपि च ।

निपीते येनाब्धौ स्तिमितगुरुभिः पक्षपटलैः
प्रयत्नादुड्डीय प्रतिपदमपव्यस्तपतिताः ।
विशन्तः कौलीरं कुहरमशरण्याः शिखरिणः
क्षणं दृष्टास्तस्य स्तुतिषु न गिरां साहसरसः ॥ ८९ ॥

---

स्वादतीति ध्वनिः । रोहणः पर्वतभेदः । 'उपत्यकाद्रेरासन्ना भूमिः' इत्यमरः । आयतनं देवतागृहम् । 'चैत्यमायतनं तुल्ये' इत्यमरः । लोपामुद्रागस्त्यपत्नी । **बृहदिति** । कलशजन्मागस्त्यः अम्भोधिमुदरे दधाविति संबन्धः । बृहत्पात्रस्य महायोग्यस्य प्राप्त्या विस्तीर्णं जलं यस्य तम् । यमगस्त्यमाराध्यन् रविराकाशमाश्वीनमश्वेनैकाहगम्यं कलयति जानाति करोति वा । अविरोधात् निर्विघ्नमित्यर्थः । विन्ध्याचलशिखरस्य यः शोथो रोगभेदः अकस्मादङ्गवृद्धिः शोथनाम्नैव प्रसिद्धस्तस्य भिषजं वैद्यम् । तत्प्रतीकारकर्तृत्वात् । कथेयमतिप्रसिद्धैव । इह आराध्यन्नित्यत्र कथं सकर्मता, श्यनोऽकर्मके विधीयमानत्वात् इति चेत्, न । तत्राकर्मकादित्यस्य प्रायिकत्वात् । एवंविधप्रयोगस्य बहुशो दर्शनात् । 'प्रयोगमूला हि पाणिनिस्मृतिः' इति वचनादित्यवधेयम् । अश्वेन यदेकाहेन गम्यते तदाश्वीनम् । 'अश्वस्यैकाहगमः' इति खञ् । **निपीत इति** । तस्यागस्त्यस्य स्तुतिषु गिरां साहसरसो न । अपि तु साहसरस एव । शिरश्चालने नकारः । तद्गुणा विशिष्य वक्तुं न शक्यन्त इति भावः । येनागस्त्येन समुद्रे पीते तत्रस्थाः शिखरिणो मैनाकादयः पर्वताः कौलीरः कुलीरः कर्कटस्तत्संबन्धि कुहरं विवरं विशन्तः सन्तः क्षणं दृष्टाः । जनैरिति शेषः । स्तिमितमार्द्रमत एव गुरुभिरतिभारैः पक्षपटलैर्यतः अतः प्रयत्नात्कष्टादुड्डीय ऊर्ध्वं गत्वा प्रतिपदं पदे पदे अपव्यस्ता व्याकुलाः सन्तः पतिताः । शरण्यो रक्षिता स न विद्यते येषां ते । शृङ्गार एव सार्वभौमश्चक्रवर्ती राजा

१. 'इह हि'. २. 'गाधं'. ३. 'अधिरोहन्'. ४. 'व्रजन्तः'.

अपि च यत्र[1] शृङ्गारसार्वभौमस्य रत्नसिंहासने सिंहलद्वीपनाम्नि प्रदोषारम्भेषु

उदेष्यत्पीयूषद्युतिरुचिकणार्द्राः शशिमणि-
　स्थलीनां पन्थानो घनचरणलाक्षालिपिभृतः ।
चकोरैरुड्डीनैर्झटिति कृतशङ्काः प्रतिपदं
　पराञ्चः संचारानविनयवतीनां विवृणते ॥ ९० ॥

(अन्यतो दर्शयन् ।) इयमितो मौक्तिकीयानामपामाधारस्ताम्रपर्णी ।

शुक्तिकागर्भसंबन्ध[2]स्तम्भितास्तोयबिन्दवः ।
भ्रमन्ति[3] सुभ्रुवामङ्कादङ्कमस्याः प्रसूतयः ॥ ९१ ॥

अपि च ।

युवतिकुचभोगकर्मभिरुद्भूतैः शुक्तिसंपुटधृतानि ।
दधतीह ताम्रपर्ण्याः[4] स्थिरकरकाभावमम्भांसि ॥ ९२ ॥

**सीता**—अज्जउत्त, जेट्ठेत्ति दक्खिण्णमत्तएण भअवदो साअरस्स भाईरहीपक्खपादो । पेम्मसव्वस्सणीसन्दो उण सहजसव्वङ्गमोत्तिआहरणरमणीआए तम्मपण्णीए लक्खीअदि ।

---

'प्रदोषो रजनीमुखम्' इत्यमरः । **उदेष्यदिति** । चन्द्रकान्तस्थलीनां पन्थानः अविनयवतीनामभिसारिकाणां पराञ्चः प्रतीपान् पदन्यासान् विवृणते प्रकटयन्ति । कीदृशाः । उदेष्यन्नुदयं गमिष्यन् यश्चन्द्रस्तस्य दीप्तिलवैरार्द्राः । घना निबिडा या चरणानां लाक्षा तस्या लिपिमक्षरं धारयन्तः । उड्डीनैश्चकोरैः शीघ्रं कृता शङ्का यत्र । अर्थादभिसारिकाणाम् । ते । अभिसारिकाश्चलिता अपि मार्गे चकोरसंचाराच्चकिता व्याघुटिताश्च । तासां पदलाक्षाक्तवाटेन प्रतीपचरणन्यासः प्रकटित इति भावः । ताम्रपर्णी मुक्तोत्पत्तिनदी । आधारस्ताम्रपर्णीत्यजहल्लिङ्गतयान्वयः । **शुक्तिकेति** । गर्भो मध्यम् । स्तम्भिताः पिण्डीभूताः । अस्यास्ताम्रपर्ण्या अङ्कान्मध्यात् प्रसूतयो जाता जलबिन्दवो मुक्तारूपा युवतीनां क्रोडं भ्रमन्ति गच्छन्ति । **युवतीति** । युवतिकुचानां यानि भोगकर्माणि यैरदृष्टैः स्त्रीकुचभोगं प्राप्नुवन्ति तैरुद्भूतैः परिणतैर्हेतुभिर्निबिडवर्षोपलत्वं यस्या जलानि दधति । 'वर्षोपलस्तु करका' इत्यमरः । **अज्जउत्तेति** । 'आर्यपुत्र, ज्येष्ठेति दाक्षिण्यमात्रकेण भगवतः सागरस्य भागीरथीपक्षपातः । प्रेमसर्वस्वनिःस्यन्दः पुनः सहजसर्वाङ्गमौक्तिकाभरणरमणीयायास्ताम्रपर्ण्या लक्ष्यते' [ इति च्छाया ।] इह पक्षपातोऽनु-

---

१. 'यत्र' इति पुस्तकान्तरे नास्ति. २. 'संभूत–'. ३. 'भजन्ति'. ४. 'ताम्रपर्ण्याम्'.

**रामः**—(विहस्यान्यतो दर्शयन्।)

रमयति मलयाचलोऽयमस्मादुपनमता पवनेन मानिनीनाम्।
दयितविनयकूटसाक्षिणीभिः स खलु सखीभिरदुष्करप्रबोधः॥ ९३॥

**लक्ष्मणः**—(अग्रे दर्शयन्।)

स्वपाणिप्राग्भारप्रबलविततोत्तानसलिल-
स्वयंदृष्टक्रीडत्तिमिनिवहलग्नामिव घृणाम्।
दधानस्यापीतोज्झितजलनिधेरेतदपरं
पुरो लोपामुद्रासहचरमुनेराश्रमपदम्॥ ९४॥

अपि चास्मिन्

चतुरब्धिपानचेष्टादृष्टपिपासे मुनावुदयमाने।
पाययितुमिवात्मानं विशुध्य सज्जीभवन्त्यापः॥ ९५॥

**सुग्रीवः**—(सस्मितम्।)

ध्रुवमिह चतुरम्भोनिधिरचितापोशानकर्मणि मुनीन्द्रे।
भक्ष्यंमन्यानि किमपि चकम्पिरे सप्तभुवनानि॥ ९६॥

---

ग्रहः। निःस्यन्दोऽविच्छेदेन प्रवृत्तिः। **रमयतीति**। अयं मलयाचलो रमयति। मामिति शेषः। अस्मान्मलयपर्वतादुपनमता आगच्छता पवनेन करणेन मानिनीनां प्रबोधः सखीभिरदुष्करः सुखसाध्यः। खलु निश्चितम्। दयितविनये वल्लभनम्रतायां कूटेऽसत्ये साक्षिणीभिः। **स्वपाणीति**। पुरोऽग्रे लोपामुद्रासहचरमुनेरगस्त्यस्य एतदपरमाश्रमस्थानम्। अस्तीति शेषः। आपीतोऽनन्तरमुज्झितस्त्यक्तो जलधिः समुद्रो येन तस्य। स्वपाणिप्राग्भारेण प्रबलमत्यन्तविस्तीर्णमत एवोत्तानं गाधं यत्सलिलं तत्र स्वय दृष्टो यः क्रीडन् तिमिनिवहस्तेन लग्नां संबद्धां घृणामिव दधानस्य। तथा च मत्स्यादिघृणयैव पीतस्याब्धेरुद्गिरणमगस्त्येन कृतमिति भावः। **चतुरब्धीति**। मुनावगस्त्ये। अगस्त्योदये स्वभावादेव जलं निर्मलं भवति। तत्रोत्प्रेक्षते—आत्मानं पाययितुमिवेति। उत्प्रेक्षायामिवशब्दः। **ध्रुवमिति**। अस्मिन्मुनीन्द्रे चतुःसमुद्रेण रचितापोशानकर्मणि सति किमप्यनिर्वचनीयं यथा स्यादेवं भक्ष्यंमन्यानि सप्तभुवनानि चकम्पिरे कम्पितानि। तथा च यस्यास्य चतुःसमुद्रेण भोजनारम्भचुलकरूपमापोशानं वृत्तं तस्य किं भक्ष्यं भविष्यति। तथा चास्मान् किं नु भक्षयिष्यतीति भावः। आत्मानं भक्ष्यं मन्यते भक्ष्यंमन्यः। 'आत्ममाने खश्च' इति खश्। मुम्। रामदेव इति नाट्य-

---

१. 'अन्यतः'. २. 'विशुद्धसज्जी-'; 'विशुद्धिसज्जी-'.

(सर्वतोऽविलोक्य सहर्षाद्भुतम् ।) अहो चिरेणाद्य चतुर्दशलोकैकदण्डधरे धर्मासनाधिकारिणि रामदेवे दण्डकारण्यगृहमेधिनां तपोधनानामृद्धयः ।

**रामः**—(सलज्जस्मितं विमानवेगनाटितकेनाधोऽवलोक्य ।) कथं हिरण्यहरिणविहारकान्तारस्थलीनामुपरि प्रतिष्ठामहे ।

**सुग्रीवः**—( सोपहासम् ।) इयं सा मारीचशरीरोपहाररक्षितात्मनो दशकण्ठस्य कपटभिक्षुवेषविडम्बनाडम्बरैकमर्मज्ञा पञ्चवटी । ( सादरं च ।)

विश्वामित्रमखद्विषे च वपुषा चित्रेण पत्युर्मुखा-
दप्याकृष्टविदेहराजतनयानेत्रारविन्दाय च ।
मारीचाय नमो नमः किमपरं यस्मै कुले रक्षसां
द्वौ वारौ विभुनापि दाशरथिना चक्रे ततज्यं धनुः ॥ ९७ ॥

(सीता लज्जते ।)

**रामः**—( प्रस्रवणाचलं दर्शयन्सीतामपवार्य ।) देवि,

नक्तं रत्नमयूखपाटलमिलत्काकोलकोलाहल-
त्रस्यत्कौशिकभुक्तकंदरतमाः सोऽयं गिरिः स्मर्यते ।
यत्राकृष्टकुचांशुके मयि रुषा वस्त्राय पत्राणि ते
चिन्वन्त्यो वनदेवतास्तरुलतामुच्चैर्व्यधुः कौतुकात् ॥ ९८ ॥

---

भाषायां राजा देवपदवाच्यः । तथा चामरः—'राजा भट्टारको देवः' इति । गृहमेधिनां गृहस्थानाम् । दण्डकारण्यवासिनामित्यर्थः । प्रतिष्ठामहे गच्छामः । 'समवप्रविभ्यः स्थः' इति तङ् । मारीचशरीरोपहारेति मारीचद्वारा हरिणशरीरपरिग्राहणादिति भावः । विडम्बना कदर्थनं तस्या डम्बर आभोगः । मर्मज्ञा तत्त्वज्ञा । **विश्वामित्रमखद्विष इति** । अनेनातिवलवत्त्वं सूचितम् । मखो यज्ञः । वपुषा चित्रेण स्वर्णहरिणमयेनेति भावः । एतेनातिमनोहारित्वं सूचितम् । पत्यू रामस्य । मारीचः शूर्पणखापुत्रो रावणभागिनेयः । द्वौ वाराविल्यनेनातिमायावित्वं प्रकटितम् । तत्र विश्वामित्रमखरक्षायां तस्य नाशादित्येको वारः । सीतापहारावसरे द्वितीयो वारः । प्रस्रवणाचलः पर्वतभेदः । **नक्तमिति** । काकोलो द्रोणकाकः । 'डोडकौआ' इति प्रसिद्धः । 'द्रोणकाकस्तु काकोलः' इत्यमरः । रत्नकान्तिपाटलं च मिलत्काकोलकोलाहलश्च ताभ्यां त्रस्यन् यः कौशिकः पेचकस्तेन भुक्तं सेवितं कंदरतमो यस्य तादृशः । 'श्वेतरक्तस्तु पाटलः' इत्यमरः । तथा च पर्वतीयरत्नकान्त्या दिवसभ्रमेण काकशब्देन च कौशिकस्य त्रास इति भावः । 'कौशिकोलूकपेचकाः' इत्यमरः । उच्चैर्व्यधुरूर्ध्वे विहितवलः । उत्तोलितवस्त्र इति यावत् । अंशुकाकर्षणमेव कौतुकबीजम् । कपोतहस्तो हस्तवन्यविशेषः ।

---

१. 'विडम्बनैक–'. २. 'चिन्वन्त्यो'.

**सीता**—(स्मयमाना कपोतहस्तं कृत्वा।) भअवदीओ जणट्ठाणदेवदाओ, एसा वो परिचारिआ जाणई पणमदि।

**रामः**—(अन्यतो दर्शयन्।) देवि, वन्दस्व भगवतीमितो गोदावरीम्। (जनान्तिकम्।)

एतस्याः पुलिनोपकण्ठफलिनीकुञ्जोदरेषु स्रजं
कृत्वा किंशुककोरकैरकरजक्रीडासहिष्णुस्तने।
दत्त्वा वक्षसि ते मयि प्रहसति प्रौढापराधे तदा
कौमारव्रतभङ्गरोषितमपि स्मेरं तवासीन्मुखम्॥ ९९॥

(सीता सलज्जस्मितं मुखमवनमयति, नमति च गोदावरीम्।)[1]

**रामः**—(परिवृत्यावलोकितकेन सखेदम्।) देवि[2],

अस्मिन्माल्यवतस्तटीपरिसरे कादम्बिनीडम्बरः
स स्थूलंकरणो मदश्रुपयसामासीदवर्षन्नपि।

---

तथा च संगीतसर्वस्वम्—'पार्श्वद्वयसमाश्लेषात्कपोतः सर्वशीर्षके। विनयोपगमे शीते भये संभाषणे गुरोः॥ वक्षःस्थलगतो ह्येष कलितस्तु कपोतवत्।' इति। **भअवदीओ इति**। 'भगवत्यो जनस्थानदेवताः, एषा वः परिचारिका जानकी प्रणमति' [इतिच्छाया।] इह वो युष्माकम्। परिचारिका परिचारकर्त्री। **एतस्या इति**। एतस्या गोदावर्याः। प्रवाहापचये जलमध्ये जलादुत्थितो भूभागः पुलिनम्। 'तोयोत्थितं तत्पुलिनम्' इत्यमरः। उपकण्ठः समीपम्। 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः। फलिनी प्रियंगुवृक्षः। 'प्रियंगुः फलिनी फली' इत्यमरः। उदरं मध्यम्। किंशुककोरकैः पलाशकलिकाभिः। 'पलाशे किंशुकः पर्णः' इत्यमरः। 'कलिका कोरकः पुमान्' इत्यपि। किंशुककोरको हि वक्रो नखक्षताकारो भवतीति भावः। वक्षसि कीदृशे। करजस्य नखस्य क्रीडायाः सहिष्णू करजक्रीडासहिष्णू, न तादृशौ स्तनौ यत्र तदकरजक्रीडासहिष्णुस्तनम्। तस्मिन्। दत्त्वा वक्षसीति यथेयं तव स्तनोपरि किंशुकमाला तथा ममाप्यत्र नखक्षतानि शोभां धारयिष्यन्तीति भावः। कौमारव्रतं नवोढाद्यवस्था तस्य भङ्गो नाशस्तेन रोषितमपि। अपिर्विरोधाभासाय। व्रतभङ्गादेव प्रौढापराधे मयीति भावः। स्मेरं सहासम्। **अस्मिन्निति**। माल्यवतः पर्वतविशेषस्य परिसरे समीपभुवि। 'पर्यन्तभूः परिसरः' इत्यमरः। कादम्बिनी मेघमाला तस्य डम्बर आभोगः अवर्षन्नपि मदश्रुपयसां स्थूलंकरणः स्थूलं विपुलं क्रियते येन तादृ[क्] आसीदिति संबन्धः। तथा च त्वद्विरहवारिधिमग्नेन मया तथा रुदितं यथावर्षन्न[पि] मेघो मदश्रुजलस्य विपुलताकारणं वर्षन्निवासीदिति भावः। मां तथा दृष्ट्वा। रुदन्[...]

---

१. 'मुखमानम्य गोदावरीं नमति'. २. 'देवि' इति पुस्तकान्तरे नास्ति.

यद्धारावलितैर्न शाखिभिरपि त्वत्पालितैर्मा तथा
दृष्ट्वा कन्दलितं न केकिभिरपि प्रारम्भि संगीतकम् ॥ १०० ॥

**सीता**—(मन्युगद्गदकण्ठग्रन्थिलस्वरा पुष्पकं प्रति ।) विमाणराअ, सीदह्मि । ण दलदि ज्जेव वज्जमअं मे हिअअम् । तधा वि तुवरेहि । एसा अन्तरीअदु दण्डआरण्णविच्छोली ।

**रामः**—(विमानवेगनाटितकेन सीतां प्रति ।) [२]देवि, इदमग्रे महाराष्ट्रमण्डलैकमण्डनं कुण्डिनं नाम नगरम् । इह हि

अनन्यक्षुण्णश्रीर्मलयवनजन्मायमनिलो
निपीय स्वेदाम्बु स्मरमकरसंभुक्तविभवम् ।
विदर्भीणां भूरिप्रियतमपरीरम्भरभस-
प्रसङ्गादङ्गानि द्विगुणपुलकस्रञ्जि तनुते ॥ १०१ ॥

किं च

बि[३]भ्रतीं कैशिकीं वृत्तिं सौरभोद्गारिणीं गिरः ।
दूराध्वानोऽपि कवयो यस्य रीतिमुपासते ॥ १०२ ॥

---

दृष्ट्वेत्यर्थः । यद्धारावलितैर्मेघमालाधारासंवर्धितैः शाखिभिरपि न कन्दलितं न नवपल्लवितम् । कन्दलं नवपल्लवः । तस्य तारकादित्वादितच् । 'कन्दलं स्यात्पल्लवे च नवाङ्कुरे' इति विश्वः । केकिभिर्मयूरैरपि जलधरदर्शनादपि संगीतं गीतनृत्यादि न प्रारम्भि न प्रारब्धम् । कर्मणि चिण् । मन्युर्दैन्यम् । उपताप इति यावत् । ग्रन्थिलो ग्रन्थिमान् । सिध्मादित्वाल्लच् । **विमानेति** । 'विमानराज, सीतास्मि । न दलत्येव वज्रमयं मे हृदयम् । तथापि त्वरस्व । एषा अन्तरीयतां दण्डकारण्यपङ्क्तिः' [ इति च्छाया ।] इह सीतास्मीत्यनेन शब्दच्छलात् यथा लाङ्गलपद्धतिश्चिरकालेन शोषणात्कठिना तथाहमप्यस्मीति ध्वनितम् । त्वरस्व त्वरया चल । अन्तरीयतामतिक्रम्यताम् । विच्छोली पङ्क्तिरिति देशी । महाराष्ट्रो देशविशेषः । मण्डनमलंकरणम् । **अनन्येति** । अनन्यक्षुण्णेत्यत्र मलयपर्वतात् । प्रथमं तद्देशसंबन्ध एव पवनस्येत्याशयः । श्रीः संपत्तिः । स्मरस्य कामस्य चिह्नरूपो मकरस्तेन संभुक्त उपभुक्तो विभवः प्रभावो यस्य तत् । मकरो जलजन्तुतया जलमत्यर्थं पिबति । इह तु स्वेदाम्बु तेन प्रथमं पीतमिति भावः । विदर्भीणां विदर्भस्त्रीणाम् । भूरि प्रचुरम् । परीरम्भ आलिङ्गनम् । द्विगुणा पुलकस्रक् येषु तानि । स्रक् माला । **बिभ्रतीमिति** । यस्य महाराष्ट्रदेशस्य गिरो वाण्या रीतिं वैदर्भीनाम्नीं कवयो दूरस्था अप्युपासते आश्रयन्ते । कीदृ-

---

१. 'मन्यूत्पीडगद्गद–'. २. 'देवि' इति पुस्तकान्तरे नास्ति. ३. 'बिभ्रतः'. ४. 'धाराल्लुलितैः'; 'धाराकुलितैः'.

**विभीषणः**—(दक्षिणतो दर्शयन् ।) देव, प्रणम्यतामयमन्ध्रविषयलक्ष्म्याः सप्तगोदावरहारकलापैकनायको भगवान्भीमेश्वरः। अयं हि

तत्कालारभटीविजृम्भणपरित्रासादिव भ्रश्यता[2]
वामार्धेन तदेकशेषचरणं बिभ्रद्वपुर्भैरवम्।
तुल्यं चास्थिभुजंगभूषणमसौ भोगीन्द्रकङ्कालकै-
र्बिभ्राणः परमेश्वरो विजयते कल्पान्तकर्मान्तिकः ॥ १०३ ॥

**रामः**—(कृताञ्जलिः।)

नृत्यारम्भपरित्रसद्गिरिसुतारिक्तार्धसंपूर्तये[3]
निर्व्यूढभ्रमिविभ्रमाय जगतामीशाय तुभ्यं नमः।

---

शीम्। कैशिकीनाम्नीं वृत्तिं बिभ्रतीं दधानाम्। सौरभं मनोहरता ख्यातिश्च सौगन्ध्यं वा। तत्प्रकाशिनीम्। रीतिलक्षणं सरस्वतीकण्ठाभरणे—'वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः। रङ् गताविति धातोः स व्युत्पत्त्या रीतिरिष्यते ॥ वैदर्भी साथ पाञ्चाली गौडीयावन्तिका तथा। लाटीया मागधी चेति रीतिः षोढा निगद्यते ॥' तेषु च—'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता। विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥' इति। वृत्तिलक्षणं तु तत्रैव—'या विकासेऽथ विक्षेपे संकोचे विस्तरे तथा। चेतसो वर्तयित्री स्यात्सा वृत्तिः सापि षड्विधा ॥ कैशिक्यारभटी चैव भारती सात्वती परा। मध्यमारभटी चैव तथा मध्यमकैशिकी ॥ सुकुमारार्थसंदर्भा कैशिकी तासु कथ्यते।' अन्ध्रविषयोऽन्ध्रनामा देशः। गोदावर्यो नदीविशेषाः। सप्तानां गोदावरीणां समाहारः सप्तगोदावरम्। अच् समासान्तः पञ्चनदवत्। नायकः प्रधानमणिः स्वामी च। भीमनामा ईश्वरो महादेवः। **तत्कालेति**। अयं परमेश्वरो विजयते। कीदृशः। तत्काले नृत्यकाले। आरभटी आरम्भः नृत्यविशेषो वा। आरभटीवृत्तिमयत्वात्। तस्या विजृम्भणं वृद्धिस्तद्भयादिव भ्रश्यता अपगतेन वामार्धेन गौरीरूपेण तस्यैकशेषेण चरणं यत्र तादृशं भैरवशरीरं दधानः। अस्थिरूपस्य भुजंगरूपस्य च भूषणस्य रसद्वयं तुल्यं बिभ्राणः। कैः। सर्पराजाङ्गास्थिभिः एकेनैव भोगीन्द्रकङ्कालकेन रसद्वयास्वादमनुभवति। प्रलये वासुक्यादीनां कङ्कालमात्रं तिष्ठतीति भावः। प्रलयकाले कर्माधिकृतः। 'नियुद्धयुद्धसंस्फोटविद्रवादिभिरन्विता। विज्ञेयारभटी वृत्तिरुद्धतैः पुरुषैः कृता ॥ कपटानृतदम्भेषु वञ्चनास्कन्दयोस्तथा। समुत्फालेन्द्रजालादौ सदा योज्येयमार्यकैः ॥' इति संगीतसर्वस्वम्। 'कङ्कालोऽस्थि शरीरस्य' इत्यमरः। **नृत्येति**। रिक्तं तुच्छम्। संपूर्तिर्भरणम्। निर्व्यूढः समाप्तो भ्रमिर्मण्डलिकया भ्रमणं तेन विभ्रमो विलासो येन तस्मै। गौर्या भ्रमिभयात्त्यक्तं स्वशरीरं दृष्ट्वा भ्रमिविभ्रमः

---

१. 'सप्तगोदावरी'. २. 'भ्राम्यता'. ३. 'त्यक्तार्ध-'.

यश्चूडाभुजगेश्वरप्रभृतिभिस्तादृग्भ्रमन्तीर्दिशः
पश्यद्भिर्भ्रमघूर्णमाननयनैः श्रान्तोऽपि न श्रद्दधे ॥ १०४ ॥

अपि च ।

क्रीडानटस्य प्रलयान्धकारैः कण्ठे निपीते तव नीलकण्ठ ।
पृथक्कबन्धं पृथगुत्तमाङ्गं नृत्यद्भयादैक्षत कालरात्रिः ॥ १०५ ॥

(सर्वे नमन्ति ।)

**रामः**—(अन्यतो दर्शयन् ।) देवि, द्रविडमण्डलमौलि[1]मण्डनमाणिक्यमणिस्तबकमिदं काञ्चीनामधेयमायतनं मीनकेतनस्य । (सीतामपवार्य) इह हि

स्वेदजलपिच्छिलाभिस्तनुभिर्यूनां च शिथिलमाश्लेषम् ।
विपुलं पुलकशलाकापटलं झटिति प्रतिकरोति ॥ १०६ ॥

अपि च ।

अभिमुखपतयालुभिर्ललाटश्रमसलिलैरवधूतपत्रलेखः ।
कथयति पुरुषायितं वधूनां मृदितहिम[2]द्युतिनिर्मलः कपोलः ॥ १०७ ॥

**सुग्रीवः**—(वामतो दर्शयन् ।) इयमितः शृङ्गारदेवतागर्भगृहमवन्तिविषयसीमन्तमौक्तिकमुज्जयिनी नाम राजधानी । [3]इह हि

---

परित्यक्त इति भावः । यस्त्वं श्रान्तोऽपि नृत्यनिवृत्तोऽपि नात्येनात्यन्तघूर्णमाननयनैश्चूडास्थितसर्पेशाद्यैर्न श्रद्दधे न निर्णीतः । अधुनापि नृत्यतीत्यवगतमिति भावः । कर्मणि लिट् । तादृगतिशयितं भ्रमन्तीर्भ्रमणं कुर्वतीर्दिशः पश्यद्भिः । **क्रीडेति** । क्रीडार्थं नटो हरः । प्रलये अन्धकारैर्निपीते आच्छादिते । कबन्धः शिरःशून्यकायः । उत्तमाङ्गं मस्तकम् । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । ऐक्षत पश्यति स्म । 'ईक्ष दर्शने' । लङ् । कालरात्रिर्महाभैरवी कण्ठस्थितकालकूटत्वाद्भिन्नमेवोत्तमाङ्गं कबन्धं ददर्शेति वाक्यार्थः । द्रविडनामा देशः । आयतनं स्थानम् । **स्वेदेति** । यूनां स्त्रीपुंसानाम् । युवा च युवती च 'पुमान्स्त्रिया' इत्येकशेषः । शिथिलं श्लथं आश्लेषमालिङ्गनं पुलक एव शलाका तत्पटलं कर्तृ शीघ्रं प्रतिकरोति । स्वेदजलपिच्छिले शरीरे श्लथमालिङ्गनं रोमाञ्चः स्थिरीकरोतीत्यर्थः । **अभिमुखेति** । पतयालुभिः पतनशीलैः । 'स्पृहिगृहि–' इत्यालुच् । 'अयामन्ता–' इत्ययादेशः । पुरुषायितं विपरीतरतम् । विपरीतरते स्त्रिया अधोमुख्या घर्मस्याभिमुखं पतनात्कपोलपत्रलेखापनयः । मृदिता शुद्धा । धौतेति यावत् । हिमस्य द्युतिश्छविस्तद्वन्निर्मलः । यद्वा विशुद्धो यो हिमद्युतिश्चन्द्रस्तद्वन्निर्मलः ।

---

१. 'मौलिमाणिक्यस्तबकम्'. २. 'हिमद्युतिदुर्मनाः'. ३. 'इह हि' इति पुस्तकान्तरे नास्ति.

कमितुरभिसृत्वरीणां गौराङ्गीणामिहेन्दुगौरीषु ।
उह्यमानानामिव रजनिषु परमीक्ष्यते छाया ॥ १०८ ॥

अपि च ।

अधस्तात्सौधानामिह हि चरतामिन्दुकिरणा-
न्घनोदञ्चच्चञ्चूपुटनिहितनेत्रा युवतयः ।
चकोराणां ज्योत्स्नारसकुतुपकौतूहलकृता-
मुदीक्षन्ते नश्यत्तिमिरविशदाभोगमुदरम् ॥ १०९ ॥

अपि च ।

इह युवतिवदनकान्तिभिराप्यायिततुन्दपरिमृजः शेते ।
भुक्तापभुक्तहिमरुचिमरीचिरन्तःपुरचकोरः ॥ ११० ॥

**विभीषणः**—इहैवायमलकायाः शाखानगरगौरवभाजि त्रिपुरदहनाधिष्ठानप्रतिष्ठो भगवान्महाकालनाथः । अयं हि

उद्दामभ्रमिवेगविस्तृतजटावल्लीप्रणालीपत-
त्स्वर्गङ्गाजलदण्डिकावलयितं निर्माय तत्पञ्जरम् ।

---

शृङ्गारदेवता कंदर्पः । गर्भगृहं मध्यगृहं 'गभहर' इति ख्यातम् । अवन्तिर्देशविशेषः । सीमन्तः केशरचनारेखा । गर्भगृहं मौक्तिकमिति चोज्जयिन्या विशेषणम् । अजहल्लिङ्गतयान्वयः । **कमितुरिति** । परंशब्दो भिन्नक्रमश्छायाशब्दानन्तरं द्रष्टव्यः । तेन इह नगर्यामिन्दुगौरीषु चन्द्रधवलासु रात्रिषु कमितुः कामुकस्य कृते अभिसृत्वरीणामभिसरणशीलानां गौराङ्गीणां छायैव परमीक्ष्यते दृश्यते । जनैरिति शेषः । न तु शरीरम् । तासां गौराङ्गीत्वात् । इति परंशब्दार्थः । उह्यमानानां वकादीनां यथाधश्छाया दृश्यते तथेत्यर्थः । गौरमेवाङ्गं तद्देशस्त्रीणामिति भावः । **अधस्तादिति** । युवतयश्चकोराणामुदरमीक्षन्ते पश्यन्ति । कीदृशानाम् । ज्योत्स्नैव रसः पारदस्तस्य यः कुतुपश्चर्मघटः 'कुरुआ' इति ख्यातः तस्य कौतुककारिणाम् । 'कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान्' इत्यमरः । सौधानामधस्तादिन्दुकिरणान् चरताम् । कीदृशमुदरम् । ज्योत्स्नापानान्नश्यद्यत्तिमिरमन्धकारस्तेन विशदो धवल आभोगो यत्र तादृशम् । घनं वारं वारमुदञ्चद्विकसच्चञ्चूपुटं तत्र निहितं नेत्रं याभिस्ताः । अधस्तादिति 'अस्ताति च' इत्यस्तातिप्रत्ययः । **इह युवतीति** । आप्यायितः स्फीतः । तुन्दपरिमृजोऽलसः । 'तुन्दशोकयोः परिमृजापनुदोः' इत्यालस्ये कः । भुक्तापभुक्तं भुक्तमपभुक्तं त्यक्तम् । तथा चार्धभुक्तमित्यर्थः । अलका कुबेरनगरी । मुख्यनगरावयवभूतं नगरं शाखानगरम् । तस्य गौरवभाजि तुल्ये । त्रिपुरदहनो हरस्तस्याधिष्ठानं साक्षादवस्थानम् । **उद्दामेति** । जटावल्ल्येव प्रणाली जलनिर्गमपथः 'पनारी' इति प्रसिद्धः । जलमेव दण्डिका काष्ठिका

---

१. 'चञ्चुपथ–'.

संभ्राम्यद्भु[1]जदण्डपक्षपटलद्वन्द्वेन हंसायित-
त्रैलोक्यव्ययनाटिकानयनटः स्वामी जगत्त्रायताम् ॥ १११ ॥

**रामः**—(प्राञ्जलिः।)

नमस्तुभ्यं देवासुरमुकुटमाणिक्यकिरण-
प्रणालीसंभेदस्नपितचरणाय स्मरजिते।
महाकल्पस्वा[2]हाकृतभुवनचक्रेऽपि नयने
निरोद्धुं भूयस्तत्प्रसरमिव कामं हुतवते ॥ ११२ ॥

किं च।

वेगाददग्धद्देव तव त्रिनेत्र युग्मेतरस्मान्नयनात्कृशानुः।
कामे तु संमोहनशस्त्रहस्ते स्वाहामनुध्याय चिरं जडोऽभूत् ॥ ११३ ॥

(सर्वे नमन्ति।)

**सीता**—(विहस्य।) अहो तत्थभवदो ससहरसेहरस्स कवलिदचउद्दसभुवणस्स वि ण पलाइदा अक्खिवुभुक्खा जेण भअवं मअणो वि विआलिअग्गासीकिदो।

(सर्वे हसन्ति।)

---

तया वलयितं वेष्टितं तत्पञ्जरं हंसपञ्जरम्। भुजदण्डावेव पक्षपटलद्वन्द्वं पक्षतिद्वयम्। हंसायितो हंसीभूतः। व्ययो नाशः स एव नाटिका नाट्यविशेषस्तस्या नयोऽभिनयस्तत्र नट इव नटः। **नमस्तुभ्यमिति**। प्रणाली 'पनारी' इति प्रसिद्धा तस्याः संभेदः संबन्धः। स्नपितं स्नानं कारितम्। मित्संज्ञायां 'मितां ह्रस्वः' इति ह्रस्वत्वम्। स्मरजिते हराय। महाकल्पे प्रलये स्वाहाकृतं हुतं भुवनचक्रं यत्र तादृशे। नयने नेत्राग्नौ। निरोद्धुं निरुद्धं कर्तुं वारयितुमिव। भूयः पुनरपि। तत्प्रसरं नेत्राग्निप्रसरणम्। इवशब्द उत्प्रेक्षायाम्। कामं कंदर्पं हुतवते होमविषयं कुर्वते। कामः पूर्णाहुतिरिव कृत इति भावः। **वेगादिति**। हे देव त्रिनेत्र, इति संबोधनम्। युग्मेतरस्मात् द्वयान्यतरस्मात् तृतीयात्। कृशानुरग्निः। संमोहयतीति संमोहनम्। तादृशं शस्त्रं बाणो हस्ते यस्य तादृशे सति। यद्वा तादृशकामविषये। जडः शीतलः। निष्क्रिय इति यावत्। स्वाहा अग्निवधूस्तामनुध्यायानुस्मृत्य। कामेन संमोहनास्त्रेण मोहितः सन् वह्निः स्वाहास्मरणासक्त एवाभूदिति भावः। 'स्वाहा तु हुतभुक्प्रिया' इत्यमरः। **अहो तत्थेति**। 'अहो तत्रभवतः शशधरशेखरस्य कवलितचतुर्दशभुवनस्यापि न पलायिता अक्षिबुभुक्षा येन भगवान्मदनोऽपि विकालिकग्रासीकृतः' [इति च्छाया।] इह पलायिता अपगता। बुभुक्षा

---

१. 'भुजखण्ड–'. २. 'स्वाहीकृत–'.

**रामः**—( सविमर्शम् । ) अस्य हि भगवतः

बाणीभूतपुराणपूरुषधृतिप्रत्याशया धाविते
विद्राति स्फुरदाशुशुक्षणिकणक्रान्ते शकुन्तेश्वरे ।
नम्रोन्नम्रभुजंगपुंगवगुणव्याकृष्टबाणासन-
क्षिप्तास्त्रस्य पुरद्रुहो विजयते संधानसीमाश्रमः ॥ ११४ ॥

(अन्यतो दर्शयन् ।) इयं च कलचुरिकुलनरेन्द्रसाधारणाग्रमहिषी माहिष्मती नाम चेदिमण्डलमुण्डमाला नगरी । इह हि

आश्लेषचुम्बनरतोत्सवकौतुकादि-
क्रीडादुरोदरपणप्रतिभूरनङ्गः ।
भोगैस्तु यद्यपि जये च पराजये च
यूनोर्मनस्तदपि वाञ्छति जेतुमेव ॥ ११५ ॥

---

भोक्तुमिच्छा । विगतः कालो दिनरूपो यत्र स विकालः तद्भवो विकालिकः । स चायं ग्रासश्चेति विकालिकग्रासः 'विआरी' इति यत्प्रसिद्धिः । **बाणीभूतेति** । पुरद्रुहो महेशस्य संधानं शरसंयोजनं तदेव सीमा अवधिर्यस्य तादृशः श्रमः परिश्रमो विजयत इत्यन्वयः । पुरद्रुह इति पदेन पुरनामकदैत्यनाशाय संधानं कृतमित्यर्थप्राप्तिनिमित्तमुपन्यासः । कीदृशस्य । बाणीभूतः शरीभूतो यः पुराणपुरुषो विष्णुस्तस्य धृतिप्रत्याशया धारणेच्छया धाविते चलिते । विष्णोर्गरुडवाहनत्वात् । अनन्तरं महेशस्य यो नेत्रजो वह्निकणस्तेन क्रान्ते क्लिन्ने । अत एव शकुन्तेश्वरे गरुडे विद्राति अपगच्छति सति संनिहिते गरुडे भयान्नम्रो नतः, अपगते तस्मिन् भयाभावादुन्नम्र उद्गतो यो भुजंगपुंगवः सर्पराजो वासुकिः स एव गुणः प्रत्यञ्चिका तेन विशेषेणाकृष्टं यद्बाणासनं धनुस्तेन क्षिप्तं प्रेरितमस्त्रं बाणो येन तस्य । तथा च गरुडकृतनम्रोन्नम्रनानावस्थवासुकिरूपगुणाकर्षणे संधानश्रम इति भावः । 'वह्निः शिखावानाशुशुक्षणिः' इत्यमरः । त्रिपुरदाहे विष्णुर्बाणो वृत्त इति पुराणवार्ता । कलचुरिकुलं 'करचुरि' इति प्रसिद्धं पश्चिमदेशे क्षत्रियकुलम् । अग्रमहिषी ज्येष्ठमहादेवी चेति नगरीविशेषणम् । तत्कुलजनरेन्द्राणां माहिष्मत्यामेवावस्थानात्साधारणतेति । पुनः कीदृशी नगरी । चेदिमण्डलस्य चेदिनामकराष्ट्रस्य मुण्डमाला शिरोलंकारविशेषः 'मुण्डवारी' इति प्रसिद्धा । **इह हीति** । इह नगर्याम् । क्रीडादुरोदरो विनोदद्यूतम् । 'दुरोदरो द्यूतकरे पणे द्यूते दुरोदरम्' इत्यमरः । पणः 'पाट' इति ख्यातः । इहाश्लेषादीनां नानारूपतया पणस्य चैकरूपतया वचनभेदेनापि सामानाधिकरण्येनान्वयः । प्रतिभूर्लग्नकः 'सहिआर' इति ख्यातः । यद्यपि जये च पराजये चोभयथैव संभोग ( उपभोग ) इत्यर्थः । तदपि तथापीत्यर्थः । यूनोरिति

---

१. 'गति–'. २. 'पतङ्गेश्वरे'. ३. 'करचुलि–'. ४. 'भोगस्तु यद्यपि जयेऽपजये च तुल्यो'; 'भोगः स यद्यपि जये विजयेऽपि तुल्यो'.

(विमानवेगं रूपयित्वा ।) देवि[1],

देव्या भूमेर्मृगमदमषीमण्डनं सिद्धसिन्धोः
सध्रीचीयं जयति यमुना या तटैकाग्रवृत्तीन् ।
प्रेमोत्कर्षादिव पितृपतेर्भ्रातुराच्छिद्य हस्ता-
दस्तावाधं गमयति पितुर्मण्डलं चण्डभानोः[2] ॥ ११६ ॥

लक्ष्मणः—( दूरमङ्गुल्या दर्शयन् ।)

त्रिपुरहरकिरीटक्रीडितैः क्रीडयद्भि-[3]
र्भुवनममृतभानोर्बालमित्रैः पयोभिः ।
सगरसुतचितायाः पावनी तोयराशे-
रियमियमघमग्रे जाह्नवी निह्नुते नः ॥ ११७ ॥

---

युवतरुण्योरित्यर्थः । युवती च युवा चेति 'पुमान्स्त्रिया' इत्येकशेषः । रूपयित्वा नाटयित्वा । **देव्या इति** । इयं यमुना जयतीत्यन्वयः । कीदृशी । मृगमदः कस्तूरी । कृष्णत्वाद्रूपकम् । ( सैव मषी ) तया जातं भूमेर्मण्डनं भूषणम् । अजहल्लिङ्गतयान्वयः । या यमुना सिद्धसिन्धोर्गङ्गायाः सध्रीची सहचरी सती तटैकाग्रवृत्तीन्पुरुषान्पितृपतेर्यमस्य स्वभ्रातुर्हस्तात्प्रेमोत्कर्षात्स्नेहोद्रेकादिवाच्छिद्याकृष्य चण्डभानोः सूर्यस्य स्वपितुर्मण्डलं गमयति प्रवेशयति । प्रयागमरणे रविरश्मिवर्त्मना स्वर्गगमनं भवतीत्यागमः । अस्ता आबाधा महापीडा यत्र तादृशम् । क्रियाविशेषणं वा । 'मृगनाभिर्मृगमदः' इत्यमरः । 'पितृपतिः समवर्ती परेतराट्' इत्यपि । **त्रिपुरहरेति** । इयमियमित्यत्र 'संभ्रमे द्वे भवतः' इति द्वित्वम् । अघं पापं नोऽस्माकं निह्नुते नाशयतीत्यर्थः । सगरसुतचितायाः इति तोयराशेरित्यस्य विशेषणम् । अजहल्लिङ्गतयान्वयः । चिता मृतदाहार्थमग्न्याधानम् । 'चिता चित्या चितिः स्त्रियाम्' इत्यमरः । पावनीति 'करणाधिकरणयोश्च' इति ल्युट् । पयोभिरिति करणे तृतीया । पयोभिः कीदृशैः । अमृतभानोश्चन्द्रस्य बालमित्रैः । बाला एव मित्राणि तैः । यद्वा भावप्रधानो निर्देशः । बाल्यान्मित्रैरित्यर्थः । किरीटं भूपालादीनां शिरोलंकरणम् । 'मुकुटं किरीटं पुंनपुंसकम्' इत्यमरः । 'कलुषं वृजिनैनोघम्' इति च । सगरसुतचितायाः पावनीत्यत्र सगरसुतकथा पुराणे व्यक्ता । तथा हि—सगरेण राज्ञा अश्वमेधे आरब्धे तस्याश्वमिन्द्रो हृत्वा कपिलमुनिसंनिधाने बद्ध्वा गतः । सगरपुत्रैस्तदश्वान्वेषणपरैः पृथिवीं खनद्भिः कपिलान्तिकेऽश्वो दृष्टः । स मुनिश्च ताडितः । ततस्तन्नेत्रोद्भवाग्निना सगरपुत्रा भस्मीभूताः । सगरपुत्रखननादेव समुद्रः सागर इति ख्यातः । ततश्च सगरप्रपौत्रेण भगीरथेन कपिलमुनिवचसैव गङ्गामानीय सागरे प्रवेश्य भस्मीभूता अगतयः सगरपुत्राः पाविता

---

१. 'देवि' इति पुस्तकान्तरे नास्ति. २. 'भास्करस्य'. ३. 'प्रीणयद्भिः'.

**रामः**—(सहर्षम्।)

गौरीविभज्यमानार्धसंकीर्णहरमूर्धनि।
अम्ब द्विगुणगम्भीरे भागीरथि नमोऽस्तु ते॥ ११८॥

(सीतां प्रति।) देवि, वन्दस्व।

देवस्याम्बुजसंभवस्य भवनादम्भोधिमागामुका[1]
सेयं मौलिविभूषणं भगवतो भर्गस्य भागीरथी।
उद्यातानपहाय विग्रहमिह स्रोतःप्रतीपानपि
स्रोतस्तीव्रतरत्वरा गमयति द्राग्ब्रह्मलोकं जनान्॥ ११९॥

**सीता**—(कृताञ्जलिः।) एसा णिअस्सोतसिङ्खलासंदाणिदतिहुअणे मन्दाइणि, वन्दिज्जसि।

(सर्वे नमन्ति।)

**लक्ष्मणः**—(अन्यतो दर्शयन्।)

धनाधिनाथप्रणयानुरोधादभग्नकैलासनिकेतनस्य।
देवस्य कल्पान्तकपालपाणेर्वाराणसी नाम पुरी पुरस्तात्॥ १२०॥

**रामः**—(सहर्षमवलोक्य।)

प्लवमानैरपारोऽयं जनैः संसारसागरः।
द्वीपे वाराणसीनाम्नि विश्रान्तैरिह तीर्यते॥ १२१॥

---

इति। तेन सगरसुतचितायाः समुद्रजलराशेः पावनी सा गङ्गेति भावः। **गौरीति**। हे अम्ब मातः, इति संबोधनम्। 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वम्। यत्र किल नद्यो विस्तृता न भवन्ति तत्र गम्भीरा भवन्तीति भावः। **देवस्येति**। अम्बुजसंभवस्य देवस्य ब्रह्मणः। आगामुका आगमनशीला। 'लषपत–' इत्यादिना उकञ्। भर्गस्य शिवस्य 'स्मरहरो भर्गः' इत्यमरः। इह भागीरथ्यां विग्रहं शरीरमपहाय त्यक्त्वा उद्यातानू[र्ध्वं] गतान्। 'या प्रापणे'। क्तः। स्रोतःप्रतीपान्स्रोतसः प्रवाहस्य प्रतीपान्विपरीतग[ा]मिनोऽपीति विरोधाभासः। गङ्गास्रोतोऽधोगामि, जना ऊर्ध्वगामिन इति भावः। [स्रो]तसा तीव्रतरा अतिशयिता त्वरा वेगो यस्याः सा। एतेनाद्भुतत्वं ध्वनितम्। द्राक्तत्क्षण[म्]। 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः। **एसेति**। 'एषा निजस्रोतःशृङ्खलासंदानितत्रिभु[वने] मन्दाकिनी, वन्द्यसे' [इति च्छाया।] इह स्रोत एव शृङ्खला 'सांकर' इति ख्याता, [इति] रूपकम्। संदानितं बद्धम्। 'बद्धे संदानितं मूतंम्' इत्यमरः। धनाधिनाथः कुबेर[ः]। 'प्रणयः प्रेम्णि विश्वासे याच्ञाविस्रम्भयोरपि' इति। संसार एव सागरः समुद्रः। जल[तः] स्वत उत्थितः समुच्छ्रितभूभागो द्वीपः। 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्त[टम्]'

---

1. 'आगामुकी'.

अपि चैनां नित्यमध्यास्ते भगवान्

कण्ठच्छायनिपीतपन्नगफणारत्नौघमात्रस्थितौ
हारे निर्भयपार्वतीभुजलताबन्धोल्लसत्कंधरः
तत्सर्वाङ्गविरामवामनतमैरेव स्वरैः सामगं
बिभ्रद्ब्रह्मशिरः शिवाय जगतामेणाङ्कचूडामणिः ॥ १२२ ॥

(अन्यतो दर्शयन्, सीतां प्रति ।) देवि, दृश्यतामितः ।

नवोन्मीलन्मौर्वीकिणनिकरकार्कश्यसदय-
प्रवृत्तस्त्वत्पाणौ किमपि निबिडं पीडयति मे ।
कृतार्थोऽयं यस्यां समजनि करः सैव पुरतः
पुरी पूर्वेषां ते नयनमियमालानयति नः ॥ १२३ ॥

---

इत्यमरः । इह वाराणसीनाम्नि द्वीपे विश्रान्तैर्विगतपरिश्रमैः । एनामध्यास्त इति 'अधिशीङ्स्थासां कर्म' इत्याधारे कर्मत्वम् । **कण्ठेति** । एणाङ्कचूडामणिः शिवो जगतां शिवायास्तु इति संबन्धः । कीदृशः । तत्प्रसिद्धं ब्रह्मशिरो ब्रह्मकपालं बिभ्रद्दधत् । पुनः कीदृशः । कण्ठच्छायया नीलगलप्रतिबिम्बेन पीत आच्छादितो यः सर्पफणारत्नसमूहस्तन्मात्रेणावस्थितिर्यस्य तादृशे हारे वासुकिस्वरूपे सति अत एव निर्भया या पार्वती तस्या भुजलताबन्धेनोल्लसन्ती कंधरा ग्रीवा यस्य सः । अन्यदा शिरोरत्नदीप्तवासुकिदर्शनाद्भयम्, इदानीं तु न तथेति भावः । ब्रह्मशिरः कीदृशम् । स्वरैः सामगं सामवेदगायनम् । कीदृशैः । सर्वाङ्गविरामेण शिरोव्यतिरिक्ताङ्गशून्यतया वामनतमैरतिनीचैः । कण्ठस्य च्छायेति समस्य, 'विभाषा सेनासुराच्छाया–' इत्यादिना क्लीबत्वम् । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इति नानार्थः । **नवोन्मीलदिति** । पुरतोऽग्रे ते तव पूर्वेषां पूर्वपुरुषाणां सैवेयं पुरी मिथिला नोऽस्माकं नयनमालानयति बन्धयति । तत्रात्यर्थं लगतीत्यर्थः । 'पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वे च पूर्वजान्' इत्यमरः । सा का । यत्र पुर्यां त्वत्पाणावधिकरणे । मौर्वी हरधनुर्गुणः । किणो व्रणार्बुदस्तस्य निकरः समूहस्तस्य कार्कश्यात्काठिन्याद्धेतोः सदयं यथा स्यादेवं प्रवृत्तो व्यापारोद्यतः सन् अयं मे मम करः किमप्यनिर्वचनीयमनुरागातिरेकान्निबिडं गाढं यथा स्यादेवं अर्थात्त्वत्पाणिमेव कर्मभूतं मत्कर एव कर्तृभूते पीडयति सति कृतार्थोऽजनि कृतकृत्यो जातः । यद्यपि पीडनक्रियायाः कर्मपदं कर्तृपदं च शब्दतो न श्रूयते तथाप्यर्थमहिम्नैव शाब्द्या वृत्त्यानुक्तयोरप्यार्थ्या वृत्त्यैव व्याख्यानरीत्या प्रत्यासत्त्यैव तयोरुपस्थितिरित्यवधातव्यम् । पाणिपीडनं विवाहः । 'तथा परिणयोद्वाहोपयामाः पाणिपीडनम्' इत्यमरः । साचीकृ-

---

१. 'नित्यम्'. २. 'अन्यतश्च'.

**सीता**—(सस्मितानुरागं साचीकृताक्षी रामं पश्यन्ती पुरीं प्रति।) अम्ब मिहिले, वन्दिज्जसि। गुरुअणे वि वन्दणं मे विण्णवेसि।

**रामः**—(सुग्रीवविभीषणौ प्रति।) वयस्यौ, इयं सा जानकीं प्रजायमानाया भगवत्या भूमेररिष्टमन्दिरं मिथिला।

**सुग्रीवविभीषणौ**—(सकौतुकस्मितम्।) यत्र भगवतः पार्वतीजीवितेश्वरस्य धनुर्धनुरन्तेवासिनावजगवभार्गवौ भञ्जतो भवतः सहपांसुक्रीडादीर्घसखीयं वीरलक्ष्मीः।

**रामः**—(सलज्जस्मितमन्यतो दर्शयन्सीतां प्रति।) देवि, इयं पुनस्ततोऽपि पुरस्ताच्चम्पा नाम गौडानां विनयमधुरशृङ्गारविभ्रमरमणीया मकरकेतनकुमारव्रतचर्यातपोवनमिव राजधानी। (अपवार्य च।) इह हि

रोमाञ्चोच्छ्वसदङ्गसंधिनिबिडैरालिङ्गनैर्यामिनीं
शेषीकृत्य विवृण्वते निजरहश्चातुर्यमेणीदृशः।

---

ताक्षी वक्रीकृताक्षी। साचीत्यव्ययं वक्रे। 'तिर्यगर्थे साचि तिरः' इत्यमरः। **अम्बेति**। 'अम्ब मिथिले, वन्द्यसे। गुरुजनेऽपि वन्दनं मे विज्ञापयिष्यसि' [ इति च्छाया। ] इह अम्ब हे मातरित्यर्थः। जानकीं प्रजायमानाया जानकीं जनयन्त्या इत्यर्थः। प्रपूर्वाण्णिजर्थोऽत्र गम्यते। 'जातापत्या प्रजाता च प्रसूता च प्रसूतिका' इत्यत्र तथादर्शनात्। प्रजाता जनितापत्येत्यर्थात्। अरिष्टमन्दिरं सूतिकागृहम्। अजहल्लिङ्गतया मिथिलाविशेषणम्। 'अरिष्टं सूतिकागृहम्' इत्यमरः। मन्दिरपदं स्फुटत्वार्थम्। तेन न पुनरुक्तिः। **यत्रेत्यादि**। यत्र मिथिलायां पार्वतीजीवितेश्वरस्य शिवस्य। धनुश्च धनुरन्तेवासी चेति द्वन्द्वः। अजगवभार्गवावित्यस्य यथाक्रमं विशेषणम्। शिवस्य धनुरजगवः शिवस्य धनुरन्तेवासी धनुर्विद्यायां शिष्यो भार्गवः। तौ भञ्जतस्तवेत्यन्वयः। वीरस्य लक्ष्मीर्वीरलक्ष्मीः। **इयं पुनरिति**। पुरस्तादग्रे गौडानां गौडीयानां नगरीत्यन्वयः। चम्पानाम 'चम्पा' इति ख्याता। कीदृशी। विनयेन मधुरो मनोहरो यः शृङ्गाररसस्तस्य विभ्रमेण विलासेन रमणीया रम्या। मकरकेतनस्य कामस्य कुमारस्य व्रतं कुमारव्रतं तस्य चर्या आचरणं तस्यास्तपोवनमिवेत्यजहल्लिङ्गतयान्वयः। तथा च तत्र सर्वदा कामो जागरूक एव वर्तत इति भावः। 'मकरकेतनविलासतपस्तपोवनमिव' इति क्वचित्पाठः। **इह हीत्यादि**। इह चम्पायामेणीदृशो मृगाक्ष्यः आलिङ्गनैरर्थाद्वल्लभस्य यामिनीं रात्रिं शेषीकृत्य किंचिदवशिष्टां कृत्वा निजरहश्चातुर्यं स्वीयैकान्तवैदग्ध्यं विवृण्वते प्रकाशयन्ति। कीदृशैः। रोमाञ्चेनोच्छ्वसन्नुपचयं गच्छन् योऽङ्गस्य संधिरवयवद्वयमध्यभागः संधिरिति ख्यातस्तेन निबिडैर्गाढैः। तथा च रोमाञ्चेनाङ्गस्य निम्नोन्नतसमतया आलिङ्गन

---

१. 'कृताङ्गी'. २. 'वयस्यौ' इति पुस्तकान्तरे नास्ति. ३. 'तौ सकौतुकम्'. ४. 'पार्वतीदयितस्य'. ५. 'धेनुरन्तवासिनौ'. ६. 'सस्मितम्'. ७. 'मकरकेत—'. ८. 'अङ्गस—

यष्टिस्थे सपदि प्रदीपमुकुले दग्ध्वा दशां मल्लिका-
तैले प्रज्वलति स्तृणोति वसतीर्यन्नाभिदघ्नं तमः ॥ १२४ ॥

**लक्ष्मणः**—(अग्रे दर्शयन् ।) एते भगवत्यौ भूमिदेवानां मूलायतनमन्तर्वेदीं पूर्वेण[1] कृष्णागुरुमलयजमयमङ्गरागमिवान्योन्यस्य कुर्वाणे कलिन्दकन्यामन्दाकिन्यौ संगच्छेते ।

हिमालयोत्सङ्गसदाधिवासतो जातेव[2] पाण्डुः प्रतिभाति जाह्नवी ।
निदाघभानोः पितुरङ्कलालनात्कृतेव[3] काली यमुना च दृश्यते ॥१२५॥

(विभाव्य च ।)

बलिद्विषः पादनखांशुराजिभिः स्मरारिमौलीन्दुमरीचिवीचिभिः ।
हिमाद्रिनिःस्यन्दरसैः पदे पदे विवर्धते वैबुधसैन्धवी रुचिः ॥ १२६ ॥

अपि च ।

प्रयागः सर्वतीर्थेभ्यस्तीर्थमुच्चैस्तरामयम् ।
संसाराब्धेः[4] परं पारमिहस्थैरवलोक्यते ॥ १२७ ॥

**रामः**—(सादरम् ।) किमुच्यते ।

सत्यमेव प्रयागोऽयं मोक्षद्वारमुदीर्यते ।
देव्यौ यस्याभितो गङ्गायमुने वहतः श्रियम् ॥ १२८ ॥

नैविड्यमिति भावः । यद्यस्मात् यष्टिस्थे प्रदीपमुकुले दशां दग्ध्वा मल्लिकातैले प्रज्वलति सति । नाभिदघ्नं नाभिप्रमाणं तमः कर्तृ वसतीर्वेश्मानि स्तृणोत्याच्छादयति । तथा च समस्तरजन्यां दशायां दग्धायां मल्लिकाभ्यन्तरे ज्वलति सति प्रदीपे गृहाभ्यन्तर उपरिभागे उद्योतः, अधोभागेऽन्धकार इति भावः । समस्तरजन्यां क्रीडनात्कामिनीचातुर्यमपि प्रकटितम् । 'वसती रात्रिवेश्मनोः' इत्यमरः । **एते इत्यादि** । भूमिदेवानां ब्राह्मणानाम् । मूलायतनं मूलावस्थितिस्थानमित्यन्तर्वेदीविशेषणम् । अन्तर्वेदी देशविशेषः । 'एनपा द्वितीया' इति द्वितीया । कृष्णागुरुमलयजमयमङ्गरागमन्योन्यं कुर्वाणा इति यमुनागङ्गयोर्यथाक्रममन्वयः । मलयजं चन्दनम् । 'कालिन्दी सूर्यतनया यमुना' इत्यमरः । संगच्छेते संगतीभवतः । 'समो गम—' इत्यादिना तङ् । काली श्यामला । 'कालश्यामलमेचकाः' इत्यमरः । निदाघभानोरुष्णतेजःसंबन्धाच्छयामतेति तात्पर्यम् । **बलीति** । बलिं द्विषन् विष्णुः । स्मरारिर्महेशः । विबुधसिन्धुर्गङ्गा । तत्संबन्धिनी । 'हृद्भग—' इत्यादिनोभयपदवृद्धिः । पदे पदे प्रतिपदम् । तेषां सर्वेषां श्वेतानामुत्तरोत्तरसंबन्धात्प्रतिपदं शुक्ला द्युतिर्विशेषेण वर्धत इति भावः । उच्चैस्तरां महत् । परं पारमुत्तरं कूलम् ।

[1] 'पूर्वतः'. [2] 'जडेव'. [3] 'कालीकृता वा'. [4] 'संसारस्य'.

(सीतां प्रति।) देवि, प्रणम्यतामितः।

श्यामो नाम वटः सोऽयमेतस्याद्भुतकर्मणः।
छायाम[1]प्यधिवास्तव्यैः परं ज्योतिर्निषेव्यते॥ १२९॥

(सर्वे [2]प्रणमन्ति।)

**रामः**—(विमानवेगनाटितकेन सहर्षम्।)

यूपाङ्कुरप्रकरदन्तुरतीरलेखा-
संख्यायमानमनुसंततिसप्ततन्तुः।
इक्ष्वाकुराजमहिषीपदपट्टलक्ष्मी-
र्देव्या भुवो भगवती सरयूरियं नः॥ १३०॥

इयं च भगवत्ययोध्यां

ग[3]गनगतास्मदुदीक्षणकुतूहलोत्तानपृथुलनिःस्यन्दैः।
उन्नालस्थलकुवलयवनमिव जनलोचनैः क्रियते॥ १३१॥

(सर्वे [4]नमस्यन्ति।)

**सुग्रीवविभीषणौ**—(निर्वर्ण्य।)

वृन्तैरिव क्रतुसहस्रभुवां फलाना-
मालोक्य यूपनिकरैर्मधुरामयोध्याम्।

यस्य मोक्षद्वारस्य। श्रियं द्वारशोभाम्। अभितः पार्श्वद्वये गङ्गायमुनयोरवस्थानात्प्रयागस्य द्वारशोभा। अन्यस्मिन्नपि द्वारपार्श्वद्वये खातं भवतीति ध्वनिः। **श्याम इति।** सोऽयं श्यामो नाम वटोऽक्षयवटोऽस्ति। एतस्य वटस्य छायामप्यधिवास्तव्यैः पुरुषैः परं श्रेष्ठं ज्योतिस्तेजो निषेव्यते। अपिर्विरोधाभासे। छायायां स्थितस्य तेजोनिषेवणमिति विरुद्धम्। अत एवाद्भुतमाश्चर्यकारि कर्म यस्य तस्य। तथा चास्याक्षयवटस्य तटस्थेन परं ब्रह्माधिगम्यत इति वाक्यार्थः। छायामिति 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मता वास्तव्य इति 'वसेस्तव्यत्कर्तरि णिच्च' इति तव्यत्। **यूपेति।** नोऽस्माकमियं सरयूर्नदीविशेषोऽस्तीत्यन्वयः। कीदृशी। यूपरूपोऽङ्कुरो यूपाङ्कुरस्तत्प्रकरेण तेषां समूहेन दन्तुरा उन्नतदन्ता इव यास्तीरलेखास्ताभिः संख्यायमाना गणनाविषयीकृता मनुसंततीनां मनु[...]रपत्यानां राज्ञां सप्ततन्तवो यज्ञा यया सा। तीरखातयूपसमूहेनैव मनुसंततियज्ञसंख्या ज्ञातेति। पुनः कीदृशी। भुवो देव्याः पृथिव्या इक्ष्वाकुराजमहिषीपदे पट्टलक्ष्मीरिव। महिषी महादेवी। पट्टः 'पटचासि' इति ख्यातः। तस्य लक्ष्मीः शोभा। 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः। गगनगतेत्यादि सुगमम्। निर्वर्ण्य दृष्ट्वा। 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः। **वृन्तैरिवेति।** अयोध्यामालोक्य इहायोध्यायां प्रवसतां प्रकर्षे

१. 'अप्यधि-'. २. 'नमन्ति'. ३. 'गगनतलास्म'. ४. 'प्रणमन्ति'.

राज्ञामिह प्रवसतां च विचिन्त्य सिद्धिं
देवः शचीसहचरोऽपि न रोचते नः ॥ १३२ ॥

**रामः**—(तौ प्रति ।) वयस्यौ,

ईदृशाः प्रागजायन्त राजानो यदिहान्वये ।
तद्वसिष्ठचरोरैन्द्राबार्हस्पत्यस्य वैभवम् ॥ १३३ ॥

(पुरोऽवलोक्य सहर्षोल्लासम् ।) कथं स एवायं भगवान्प्रकल्पितास्मदभिषेकसंभारो भरतशत्रुघ्नाभ्यां सह वसिष्ठो मां प्रतीक्षमाणस्तिष्ठति । (पुष्पकं प्रति ।) विमानराज, समवतीर्यतामस्यां ककुत्स्थकुलोपकारिकायाम् ।

(सर्वे विमानावतरणं नाटयन्ति ।)

(ततः प्रविशति पटाक्षेपेण वसिष्ठो भरतशत्रुघ्नौ च ।)

**वसिष्ठः**—

चक्रे लङ्केश्वरपरिभवच्छेदनिष्णातदोष्णा
यद्वत्सेन त्रिजगदभयं तन्न चित्रीयते नः ।
बालेनाजौ विगलितवतो वीर्यनिर्यासराशे-
र्यत्पिण्याकः स मुनिरमुना निर्मितो जामदग्न्यः ॥ १३४ ॥

---

वस्थितानां राज्ञां सिद्धिं च विचिन्त्य नोऽस्मभ्यं शचीसहचरोऽपीन्द्रोऽपि न रोचते न प्रीतिविषयः । कीदृशीम् । क्रतुसहस्रभुवां क्रतुसहस्रैर्जातानां फलानां वृन्तैरिव यूपसमूहैर्मधुरां रम्याम् । अन्येषामपि फलानां वृन्तादिकं भवतीति ध्वनिः । तथा चात्र यज्ञसहस्रजन्यफलप्राप्तेरिन्द्रोऽपि न रोचत इति भावः । वसिष्ठप्रवेशं सूचयितुं भूमिमारचयति—**ईदृशा इति** । ऐन्द्राबार्हस्पत्यस्येति इन्द्रावृहस्पती देवते यस्य तस्य । वसिष्ठचरोरित्यस्य विशेषणम् । 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिः । इन्द्रश्च वृहस्पतिश्चेति द्वन्द्वे 'देवताद्वन्द्वे च' इति पूर्वपदे आनङ् । 'हव्यपाके चरुः पुमान्' इत्यमरः । वैभवं प्रभावः । उपकारिका राजगृहम् । 'राजसदनमुपकार्योपकारिका' इत्यमरः । **चक्रे इति** । वत्सेन रामेण त्रिजगद्भुवनत्रयमगदं रोगशून्यं यत्कृतं तन्न चित्रीयते नाश्चर्ययति । ननु त्रिजगदेव कुतो रोगशून्यं कृतमित्यत आह—कीदृशेन । लङ्केश्वरस्य यः परिभवोऽभिभवश्छेदः खण्डनं च तत्र निष्णातः कुशलो दोर्बाहुर्यस्य तेन । निष्णात इति 'निनदीभ्यां स्नातेः कौशले' इति षत्वम् । 'भुजबाहूप्रवेष्टो दोः' इत्यमरः । ननु दुर्दलन-

---

१. 'प्रभवताम्'. २. 'तादृशाः'. ३. 'सहर्षम्'. ४. 'उपकल्पित–'. ५. 'सह वसिष्ठो' इति पुस्तकान्तरे नास्ति. ६. 'अवतार्यतां'. ७. 'रघुकुल–'.

(राममवलोक्य सहर्षम् ।)

भल्लावलूनदशकंधरकण्ठपीठ-
सीमासमाप्तभुजविक्रमकर्मकाण्डः ।
दिष्ट्या जगद्विजयमाङ्गलिकैर्यशोभिः
सोऽयं पुनर्नयनवर्त्मनि रामचन्द्रः ॥ १३५ ॥

**रामः**—(ससंभ्रममुपसृत्य वसिष्ठपादावुपगृह्य च ।)

रघुब्रह्मक्रियाचार्यं पुराणब्रह्मवादिनम् ।
ब्रह्मर्षिं ब्रह्मजन्मानमेष रामोऽभिवादये ॥ १३६ ॥

**वसिष्ठः**—(सादरमालिङ्ग्य ।) वत्स रामभद्र, का तुभ्यमाशीः ।

आदाय प्रतिपक्षकीर्तिनिवहान्ब्रह्माण्डमूषान्तरे
निर्विघ्नं धमता नितान्तमुदितैः स्वैरेव तेजोग्निभिः ।
तत्तादृक्पुटपाकशोधितमिव प्राप्तं गुणोत्कर्षिणा
पिण्डस्थं च महत्तरं च भवता निःक्षारतारं यशः ॥ १३७ ॥

---

रावणदलनेनापि कथं न चित्रीयत इत्यत आह—यद्यस्मात्कारणाद्बालेनापि सतामुना रामेणाजौ सङ्ग्रामे स जामदग्न्यो मुनिर्विगलितव्रतो विशेषेण गलितस्य वीर्यनिर्यासराशेः वीर्यं पराक्रमस्तस्य निर्यासराशेः सारभागराशेः पिण्याकस्तिलकल्को निर्मितः कृतः तत्परं चित्रीयते । त्याजितदर्पत्वात्सारशून्यः कृत इत्यर्थः । चित्रीयत इति 'नमोवरिवश्चित्रङः क्यच्' इति क्यच् । चित्रङो ङित्त्वादात्मनेपदम् । **भल्लेति** । सोऽयं रामभद्रो नयनवर्त्मनि कृतः दृष्ट इत्यर्थः । दिष्ट्येत्यानन्दे । 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यमरः । यशोभिर्लक्षितः । इत्थंभूतलक्षणे तृतीया । कीदृशैः । जगद्विजये माङ्गलिकैः । मङ्गलाय प्रभवन्ति माङ्गलिकाः । ठक् । कीदृशैः । भल्लेनास्त्रविशेषेणावलूनं छिन्नं यद्दशकंधरस्य कण्ठपीठं तस्य सीमावसानं तया समाप्तः पर्यवसन्नो भुजविक्रमकर्मकाण्डो बाहुबलव्यापारसमूहो यस्य सः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः । **रघुब्रह्मेति** । रघूणां या ब्रह्मक्रिया वेदाभ्यासस्तत्राचार्यमुपदेष्टारम् । पुराणब्रह्मवादिनं वृद्धं वेदवक्तारम् । अत्र ब्रह्मशब्दो वेदपरः । ब्रह्मर्षिमित्यत्र ब्रह्मा ब्राह्मणः ब्रह्मा चासौ ऋषिश्चेति ब्रह्मर्षिस्तम् । ब्रह्मजन्मानमित्यत्र ब्रह्मा प्रजापतिस्तस्माज्जन्म यस्य तम् अभिवादये नमस्करोमि । अहमित्यध्याहारः । 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यमरः । **आदायेति** । भवता रामेण पिण्डस्थमेकीभूतं महत्तरं च यशः प्राप्तम् । कीदृशम् । निःक्षारं निर्मलम् । तारमुद्भटं शुभ्रं वा । अतः का तुभ्यमाशीः प्रदेया भवति आशीर्जन्यफलभागित्वाद्भवतः । ननु यशसः कुतः पिण्डस्थत्वमत आह—यशः क

अपि च ।

त्रिजगदङ्गनलङ्घनजाङ्घिकैस्तव यशोभिरतीव पवित्रिताः ।
प्रथमपार्थिवपुंगवकीर्तयो विबुधसिन्धुजलैरिव सिन्धवः ॥ १३८ ॥

तथापीदमस्तु ।

जगदालोकधौरेयौ सूर्याचन्द्रमसाविव ।
पुत्रौ गोत्रस्य गोप्तारौ जनय स्वभुजाविव ॥ १३९ ॥

(सीता मुनिं वन्दते ।)

**वसिष्ठः**—वत्से जनकवंशसुवासिनि, युवयोः साधारणीमेव रामस्य वयमाशिषमवोचाम ।

**सीता**—(सहर्षमात्मगतम् ।) अम्मो णिस्सावत्तअं मे अज्जउत्तस्स घरणित्तणं हुविस्सदि ।

**लक्ष्मणः**—सगरगोत्रगुरो मैत्रावरुणे, सौमित्रिरभिवादयते ।

---

दृशम् । प्रतिपक्षकीर्तिनिवहानादाय ब्रह्माण्ड एव मूषा आवर्तनघटिका 'मूस' इति ख्याता तस्या अभ्यन्तरे खैरेव तेजोग्निभिर्धमता । भवतेत्यर्थात् । 'ध्मा अग्निसंयोगोपतापयोः'। 'पाघ्रा-' इत्यादिना धमादेशे शतरि रूपम् । 'तैजसावर्तनी मूषा' इत्यमरः । तत्ताद्दगत्युत्कृष्टपुटपाकेन 'घलिआ' इति ख्यातेन मृत्तिकालेपादिना शोधितम् । अन्यदपि द्रव्यं वर्तुलीकृत्य मूषिकायामग्निना धम्यते । पुटपाकं कृत्वा पिण्डीक्रियत इति ध्वनिः । **त्रिजगदिति** । जाङ्घिकैरतिगन्तृभिः । विबुधसिन्धुजलैर्गङ्गाजलैः । सिन्धवः समुद्राः । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । **जगदिति** । गोत्रस्य कुलस्य गोप्तारौ रक्षकौ पुत्रौ जनयेत्यन्वयः । स्वभुजाविवेति गोप्तृत्वे सादृश्यम् । कीदृशौ जगतो लोकस्य य आलोको दीप्तिः । विपक्षतमोनाशात् । तत्र धौरेयौ धुरंधरौ । सूर्याचन्द्रमसाविति 'देवताद्वन्द्वे च' इत्यानङि रूपम् । 'धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः' इत्यमरः । 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' इति च । सुवासिनी पितृभवनस्था नारी । 'सोआसुनि' इति ख्याता । 'चिरण्टी तु सुवासिनी' इत्यमरः । **अम्मो इति** । 'अम्मो निःसापत्न्यं मे आर्यपुत्रस्य गृहिणीत्वं भविष्यति' [ इति च्छाया ।] इह अम्मो हर्षे देशी । अभये अभयनिमित्तम् । गीर्वाणग्रामणीर्देवाधिप इन्द्रः । 'ग्रामणी-

---

१. 'किं च'. २. 'एतदस्तु'. ३. 'रामचन्द्रस्य भगवत्याश्च'.

**वसिष्ठः**—वत्स लक्ष्मण, आशिषां विषयमतिक्रम्य वर्तसे।

वीरमिन्द्रजितं जित्वा दिष्ट्या वर्धयतो जगत्।
अभये दक्षिणीयस्ते गीर्वाणग्रामणीरपि॥ १४०॥
तथापि यूयं सर्वेऽपि द्वौ द्वौ जनयतात्मजौ।
यैरादिराजवंशोऽयमष्टशाखः प्ररोहति॥ १४१॥

**रामः**—(सहर्षं कृताञ्जलिः।) भगवन्, परमनुगृहीतमिक्ष्वाकुकुलम्।

**भरतः**—(रामं प्रति।) आर्य, शून्यभवनप्रकोष्ठैकरक्षापदातिर्भरतः प्रणमति।

**रामः**—(सहर्षमालिङ्ग्य।) वत्स भरत,

आत्मानमिन्दुकरमेदुरचन्द्रकान्त-
स्तम्भोज्ज्वलं वितर मे हृदि निर्वृणोमि।
न भ्रातृसंगमसुखासिकया जहाति
विष्णोः सकौस्तुभमुरश्चपलापि लक्ष्मीः॥ १४२॥

**भरतः**—(सीतां प्रति।) देवि, प्रणमामि।

**सीता**—वच्छ भरद, उण्हकरकिरणणिउरम्बचुम्बिअकमलखण्डं विअ चिरं मे णअणं आणन्देहि।

(लक्ष्मणो भरतं वन्दते।)

---

र्नापिते पुंसि त्रिषु श्रेष्ठेऽधिपेऽपि च' इत्यमरः। दक्षिणीयो दक्षिणार्हः। इन्द्रजिज्ज-येनेन्द्रस्याप्यभये दक्षिणा भवता दत्तेति। इन्द्रस्याप्यभयं वृत्तमिति भावः। 'दक्षिणीयो दक्षिणार्हस्तत्र दक्षिण्य इत्यपि' इत्यमरः। आदिराजो मनुः। भवनं गृहम्। द्विधाकृ-तस्य गृहस्य द्वारि बहिर्भूतो भागः प्रकोष्ठः 'ओहारी' इति प्रसिद्धः। तन्मात्ररक्षायां पदातिः। आत्मानं स्वशरीरम्। 'आत्मा देहमनोब्रह्मस्वभावगतिबुद्धिषु' इति नानार्थः। मेदुरमतिचिक्कणम्। 'सान्द्रस्निग्धस्तु मेदुरः' इत्यमरः। चन्द्रकान्तस्तम्भोज्ज्वलमिति तद्वच्छीतलमिति भावः। वितर देहि। संयोजयेति यावत्। निर्वृणोमि सुखी भवामि। दृष्टान्तमाह—भ्रातृसंगमसुखासिकयैव चञ्चलापि लक्ष्मीः सकौस्तुभं विष्णोर्हृदयं न त्यजति। समुद्रसमुद्भूतत्वादेव कौस्तुभस्य लक्ष्म्या भ्रातृत्वम्। वच्छेति। 'वत्स भरत, उष्णकरकिरणनिकुरम्बचुम्बितकमलखण्डमिव चिरं मे नयनमानन्दय' [इति च्छाया।]

---

१. 'प्रवर्तते' २. 'सीतां नमति'. ३. 'सीते, भरतस्त्वां नमति'.

भरतः—

वत्स लक्ष्मण सोत्कण्ठं चिरात्परिरभस्व माम् ।
श्रद्धालुर्भ्रातुरङ्गानि चन्दनेष्वप्यरोचकी ॥ १४३ ॥

(निर्भरं[1] परिरभ्य) हन्त रघुवंशयशस्तडागयूपदण्डेन लक्ष्मणबाहुना परिक्षिप्यमाणश्चिरेण शीतलीकृतोऽस्मि ।

इन्दोः कलाकलापेन पङ्क्तिक्रमनिवेशिना ।
सर्वदुःखापनोदाय[2] सोदर्याणां भुजाः कृताः ॥ १४४ ॥

शत्रुघ्नः—(रामं प्रति ।) आर्य, पादुकाभृत्यानुभृत्यः शत्रुघ्नः प्रणमति ।

रामः—(गाढमालिङ्ग्य ।) कथमावृत्त्या[3] लक्ष्मणमनुभवामि । (अपवार्य सीतायै दर्शयन् ।)

एतत्तदेव मुखमक्षतचन्द्रबिम्ब-
संवावदूकमवलोकय लक्ष्मणस्य ।
गीर्वाणवारणकरार्गलकर्कशौ मां
तावेव लक्ष्मणभुजौ नु परिष्वजाते ॥ १४५ ॥

(शत्रुघ्नः सीतां प्रणमति ।)

सीता—तेल्लोक्कसल्लुद्धरणगोरविदेहिं चरिदेहिं लक्खणसरिसो होहि । वच्छ सत्तुहण, अज्जाजणो कहिं ।

---

इह उष्णकरः सूर्यः । निकुरम्बः समूहः । परिरभस्व आलिङ्ग । भ्रातुरङ्गानि कर्मभूतानि । श्रद्धालुः श्रद्दधानो जनश्चन्दनेष्वरोचकी अनभिलाषी भवति । भ्रातुरङ्गानां चन्दनादप्यधिकसुखप्रदत्वात् । 'अङ्गानाम्' इति पाठे 'कर्तृकर्मणोः कृति' इति षष्ठी । **इन्दोरिति** । कलापः समूहः । सोदर्याणां सहोदराणाम् । पादुकाभृत्यानुभृत्य इति विशेषणादतिविनीतत्वं प्रकटितम् । आवृत्त्या पुनरपीत्यर्थः । अत्र शत्रुघ्नालिङ्गनेन लक्ष्मणालिङ्गनानुभव इवेति भावः । **एतदिति** । लक्ष्मणस्य तदेवैतन्मुखम् । शत्रुघ्नमुखं लक्ष्मणस्यैवेत्यर्थः । अक्षतचन्द्रबिम्बस्य संपूर्णचन्द्रमण्डलस्य संवावदूकं संवदनशीलम् । सदृशमिति यावत् । गीर्वाणवारणो देवहस्ती ऐरावणः । तस्य कर एवार्गलं कपाटस्य प्रसरणप्रतिबन्धकं लोहकाष्ठादिघटितं दण्डादि 'आगल' इति ख्यातम् । तद्वत्कर्कशौ कठिनौ । नु वितर्के । परिष्वजाते आलिङ्गतः । **तेल्लोक्केति** । 'त्रैलोक्यशल्योद्धरणगौरवितैश्चरितैर्लक्ष्मणसदृशो भव । वत्स शत्रुघ्न, श्वश्रूजनः कुत्र' [ इति च्छाया ।) इह

---

१. 'निर्भरं च'. २. 'दुःखप्रणोदाय'. ३. 'आकुल्या'.

**शत्रुघ्नः**—कृतमङ्गलोपचारो मध्यमाम्बाभवने भवतीं प्रतीक्षते ।

( उपसृत्य लक्ष्मणं प्रणमति[1] ।)

**लक्ष्मणः**—( सहर्षमालिङ्ग्य ।) वत्स[2], दिष्ट्या दीर्घायुषि त्वयि दीप्यमाने न[3] वयमेकाकिनमार्यभरतं परित्यज्य गताः ।

**रामः**—( मुनिं प्रति ।) भगवन्, एतौ लङ्काकिष्किन्धयोरधिपती विभीषणसुग्रीवौ भगवन्तं प्रणमतः ।

**वसिष्ठः**—विकर्तनपुलस्त्यकुलकीर्तितोरणमालावलम्बनस्तम्भाविमौ[4] चिरस्य भूयास्ताम् ।

**रामः**—(भरतं प्रति ।) वत्स, वन्दस्व महात्मानावेतौ पौलस्त्यसावित्रौ ।

(भरतशत्रुघ्नविभीषणसुग्रीवा मिथो[5] यथोचितमाचरन्ति ।)

**वसिष्ठः**—( सहर्षम् ।) दिष्ट्या[6] चतुर्दशभिः परिवत्सरैः पुनः[7] समुदयमानं दशरथकुटुम्बमीक्षामहे । (सविमर्शस्मितम् ।)

> जेतारं दशकंधरस्य जितवानेवार्जुनं भार्गव-
> स्तं रामो यदि काकपक्षकधरस्तत्पूरितेयं कथा ।
> ऊर्ध्वं कल्पयतस्तु बालचरितात्तत्प्रक्रियागौरवा-
> दन्येयं कविता तथापि जगतस्तोषाय वर्तिष्यते ॥ १४६ ॥

( रामं प्रति ।) वत्स, माङ्गलिकलग्नमतिक्रामति ।

> तदिदं रघुसिंहानां सिंहासनमलंकुरु ।
> राजन्वन्तः प्रतन्वन्तु मुदमुत्तरकोशलाः ॥ १४७ ॥

---

गौरवितैर्गौरवं गतैः । तारकादित्वादितच् । भवतीं प्रतीक्षत इत्यत्र श्वश्रूजन इत्यनुषङ्गः। विकर्तनः सूर्यः । **जेतारमिति** । दशकंधरस्य जेतारं सहस्रार्जुनं भार्गवः परशुरामो जितवान् । तं परशुरामं चूडाधरोऽपि बालकोऽपि रामो यदि जितवान् तदा इयं कथा जयकथा पूरिता समाप्ता । परशुरामजयेनैव रावणजयावधारणात् । व्याप्यव्यापकस्य सुतरां व्याप्यत्वात् (व्यापकत्वात्) । तथापि बालचरितादूर्ध्वं कल्पयतः कवेरन्येयं कविता तत्प्रक्रियागौरवाज्जगतस्तोषाय वर्तिष्यते । तथा च प्रक्रियागौरवमेव परं नान्यत्किंचित्कवित्वमित्यर्थः । रघुसिंहानां रघुश्रेष्ठानाम् । 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ॥' इत्यमरः । 'नृपासनं यत्तद्भ-

---

१. 'प्रतिनमति'. २. 'वत्स' इति पुस्तकान्तरे नास्ति. ३. 'न' इति पुस्तकान्तरे नास्ति. ४. 'स्तम्भौ स्वं स्वं भाविनौ'. ५. 'मिथो' इति पुस्तकान्तरे नास्ति. ६. 'दृष्ट्वा' ७. 'पुनःपुनः समुदयमानम्'.

(रामस्तथा करोति । वसिष्ठ ऐन्द्रेण महाभिषेकेण मन्त्रपूर्वकमभिषिञ्चति । अन्ये तूच्चावचमभिषेकं नाटयित्वा पञ्चाङ्गचुम्बितभूमयः प्रणमन्ति । नेपथ्ये मङ्गलगीतिर्नान्दीवाद्यानि च ।)

**वसिष्ठः**—(सहर्षम् ।) वत्स रामभद्र, संप्रति

उदयदुदयद्धर्मस्कन्धे धुरं त्वयि बिभ्रति
क नु परिभवौ दृष्टादृष्टौ प्रजाः परिचिन्वते ।
अपि खलु यथा जीवात्मानः प्रभोः परमात्मनो
दिशि दिशि दिशामष्टौ नाथास्तवैव विभीषिकाः ॥ १४८ ॥

(रामो लज्जते ।)

**विभीषणः**—(कृताञ्जलिर्जानुभ्यां प्रणिपत्य ।) देव,

लङ्का च पुष्पकमिदं च विमानमार्या-
द्यक्षेश्वरादपहृतं दशकंधरेण ।

---

द्रासनं सिंहासनं तु तत् । हैमम्' इत्यमरः । राजन्वन्तः प्रशस्तराजयुक्ताः । उत्तरकोशला देशविशेषाः । तत्रस्था लक्ष्यन्ते । ऐन्द्रेणेन्द्रसंबन्धिना । यथेन्द्रस्याभिषेकस्तथेत्यर्थः । नान्दी अभ्युदयपूर्वकं तूर्यमित्यर्थः । **उदयदिति** । उदयदुदयद्धर्मस्कन्धे अत्यन्तोदयमानधर्म एव स्कन्धो यस्य तादृशे त्वयि धुरं भारं बिभ्रति दधति सति दृष्टरूपः परिभवः परचक्रजातः अदृष्टरूपोऽनावृष्ट्यादिः तौ प्रजा लोकाः क नु परिचिन्वते । अपि तु न क्वापि जानन्तीत्यर्थः । 'अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम्' इत्यमरः । अपिः समुच्चये । दिशि दिशि प्रतिदिशम् । दिशामष्टौ नाथा इन्द्रादयस्तवैव विभीषिकाः प्रपञ्चाः । 'तवैव विभूतयः' इति क्वचित्पाठः । तत्राप्ययमेवार्थः । दृष्टान्तमाह—यथा परमात्मनः प्रभोर्जीवात्मानः प्रपञ्चास्तथा । वेदान्तिभिरेकस्तावत्प्रधानभूतः परमात्मा वास्तवः स्वीक्रियते । तेषामद्वैतवादित्वात् । अन्ये जीवात्मानस्तस्यैव प्रपञ्चा अविद्यासंपन्ना अवतिष्ठन्त इति तन्मतेन । प्रभोः परमात्मन इति षष्ठ्यन्तं पदम् । यद्वा पञ्चम्यन्तेन परमात्मशब्देन मुक्तात्माभिप्रेतः । जीवात्मानः संसारिण आत्मानः । तथा च नैयायिकस्याशेषविशेषगुणोच्छेदो मोक्ष इति मतम् । स च पुरुषार्थः । आत्यन्तिकदुःखोच्छेदवशात् । तेन हि संसार्यात्मतो मुक्तात्मा श्रेष्ठ इत्युच्यते । तव तु राज्ये प्रभोः परमात्मनः सांसारिका एवात्मानोऽतिश्रेष्ठाः । यतस्त्वद्राज्ये संसारिणां त्वत्प्रसादात्सुखानुभव एव केवलं न तु दुःखानुभवोऽपीति भावः । **लङ्केति** । पुष्पकं पुष्पकसंज्ञकः कुबेररथः ।

---

१. 'ऐन्द्रेण महाभिषेकेण' इति पुस्तकान्तरे नास्ति. २. 'मङ्गलगीतिनान्दीमङ्गलवाद्यानि'; 'मङ्गलगीतिनान्द्यादि'.

एकां भवानदित मह्यमथेदमन्य-
दाज्ञापय द्रुतमुपैतु पतिं निधीनाम् ॥ १४९ ॥

**रामः**—(वसिष्ठेनानुज्ञातः पुष्पकं प्रति।) विमानराज, प्रथमस्वामिनं प्रथमपौलस्त्यमुपतिष्ठस्व।

**वसिष्ठः**—(सहर्षप्रसादम्।)—रामभद्र, किं ते भूयः प्रियं करोमि[1]।

**रामः**—भगवन्, किमतः परमपि प्रियमस्ति। भगवत्प्रसादात्[2]

ताताज्ञामधिमौलि मौक्तिकमणिं कृत्वा महापोत्रिणो
दंष्ट्राविन्ध्यविलासपत्रशबरी दृष्टा भृशं मेदिनी।
सेतुर्दक्षिणपश्चिमौ जलनिधी सीमन्तयन्नर्पितः
कल्पान्तं[3] च कृतं च विश्वमदशग्रीवोपसर्गं जगत् ॥ १५० ॥

तथापीदमस्तु।

समुन्मीलत्सूक्तस्तवकमकरन्दैः श्रवणयो-
रविश्रम्यद्धारासवनमुपचिन्वन्तु कवयः।
न शब्दब्रह्मोत्थं परिमलमनाघ्राय च जनः
कवीनां गम्भीरे वचसि गुणदोषौ रचयतु ॥ १५१ ॥

---

'विमानं तु पुष्पकम्' इत्यमरः। विमानमाकाशगरथः। 'व्योमयानं विमानोऽस्त्री' इत्यमरः। यक्षेश्वरात्कुवेरात्। एकां लङ्काम्। अदित दत्तवान्। अन्यत्पुष्पकम्। निधीनां पतिं कुबेरम्। उपतिष्ठस्वेति संगतकरणे तङ्। 'देवतादर्शनान्तं तु कर्तव्यं नाटकं बुधैः। राजर्षिदर्शनान्तं वा तेऽपि देवैः समा मताः ॥' इति भरतानुरोधाद्वसिष्ठदर्शनान्तमिदम्। महावाक्यार्थमुपसंहर्तुं भूमिमारचयति—**तातज्ञामिति**। तातज्ञां पितुरादेशं अधिमौलि मौलौ मौक्तिकमणिं कृत्वा मेदिनी पृथ्वी दृष्टा महापोत्रिणो महावराहस्य दंष्ट्रेव यो विन्ध्यः पर्वतविशेषः स एव विलासार्थं पत्रावली कर्णालंकारविशेषो यस्यास्तादृशी शबरी भिल्लीव दृष्टा। पितुराज्ञया चण्डालस्त्रीव पृथ्वी मया त्यक्तेति भावः। दक्षिणपश्चिमौ समुद्रौ कर्मभूतौ सीमन्तयन् द्विधा कुर्वन् सेतुरर्पितः क्षिप्तः। विश्वं समस्तं च जगत्कल्पान्तं व्याप्य दशग्रीव एवोपसर्गो व्याधिविशेषः। दुःखजनकत्वात्। तच्छून्यं कृतं च। अतः परमपि प्रियमस्तीत्यन्वयः। 'वरप्रदानसंप्राप्तिः काव्यसंहार उच्यते' इति भरतानुरोधादाह—तथापीति। तदेवाह—**समुन्मीलदिति**। समुन्मीलन् विकासं गच्छन् यः सूक्तं सुष्ठूक्तमेव स्तवको गुच्छस्तस्य मकरन्दै रसैः श्रवणयोः कर्णयोः अविश्रम्यद्धारासवनं निरन्तरधारास्नानं[4] कवय उपचिन्वन्तु लभन्ताम्। जनश्च

---

१. 'उपकरोमि'. २. 'भवतः प्रसादात्'. ३. 'कल्पान्तेऽपि'. ४. 'स्नपन-'.

मण्डलुजलस्रोतांसि मन्दाकिनी-
मयानि पुनते यावत्त्रिलोकीमिमाम् ।
यनमधुस्यन्दः कवीनामयं
शष्कुलीवलयितव्योमावगाही गुणः ॥ १५२ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति नायकानन्दो नाम सप्तमोऽङ्कः । [2]

विश्रीमुरारिविरचितमनर्घराघवं नाम नाटकं समाप्तम् ।

---

परिमलं सौरभमनाघ्रायाननुभूय कवीनां गम्भीरे वचसि गुणदोषौ
शब्दप्रतिपाद्यमर्थविशेषं ज्ञात्वा जनो गुणदोषौ विदधात्विति भावः ।
कन्याकाशगङ्गा, गङ्गा मर्त्यगङ्गैव, भोगवती पातालगङ्गा, एतन्मया-
ह्मणः कमण्डलुजलस्रोतांसि यावदिमां त्रिलोकीं स्वर्गमर्त्यपाताल-
न्ति तावत् कवीनामयं गुणो जागर्तु । कीदृशः । श्रुतिशष्कुल्या
मवच्छिन्नं यद्व्योमाकाशं तदवगाहित्वं शीलं यस्य सः । कर्णशष्कु-
उत्पन्नः शब्दो गृह्यत इति राद्धान्तः । तथा च शब्दरूपो गुणो
वीरः प्रकृते रामस्तस्य यश एव रसायनं नित्यं क्रियमाणमौषधं तस्य
: वीरयशोवर्णनेन मधुस्यन्द एवेति भावः । 'मन्दाकिनीवियद्गङ्गा

समवधीर्य गुणानशेषानाशु प्रकाशयति सूर इवांशुराशीन् ।
प्रविहितोऽञ्जलिरेष नित्यमालोकनान्मम कृतेर्मुदमादधातु ॥
क्रियाविराजमानरिपुराजकंसनारायणभवभक्तिपरायणश्रीहरिनारायण-
कृतमहाराजाधिराजश्रीमद्भैरवसिंहदेवनिदेशप्रोत्साहितवैजोलीग्राम-
स्तव्यखौंआलवंशप्रभवश्रीरुचिपतिमहोपाध्यायविरचिताया-
मनर्घराघवटीकायां सप्तमोऽङ्कः । [3]

---

'. २. 'इति सप्तमोऽङ्कः'; 'इति नायकपरमानन्दो नाम'. ३. अनु-
नाटकस्य टीकाद्वयमन्यदपि दृष्टम्. तत्रैकामलधारिशिष्यनरचन्द्रसूरिकृता,
नामरहिता वर्तते.